निरवर्तयत्। उपस्पृश्य च समाघ्रातधूपधूमवर्तिरुद्वर्त्य दूरं कर्पूरमृगनाभिसंभेदसंभृतामोदेन घ्राणेन्द्रियानन्दिना चन्दनद्रवेणाग्रहस्तो गृहीत्वा च ताम्बूलमप्रतिकूलभाषिभिरशेषकलाशास्त्रकृतपरिचयैः परचित्तविद्भिः सुहृद्भिरनुगम्यमानो गन्धसलिलच्छटासेकशिशिरीकृतसकलभित्तिक्षणामनुक्षणापतत्पवनपुञ्जगुञ्जन्मणिगवाक्षगुञ्जामपराह्णरम्यामावासहर्म्यशिखरप्रान्तवर्तिनीं दन्तवलभिकामगच्छत् [क]॥

तत्र च सितस्वच्छमृदुदुकूलोत्तरच्छदमुदग्ररत्नप्रतिपादुकप्रतिष्ठमुभयपार्श्वविन्यस्तचित्रसूत्रितनेत्रगण्डोपधानमध्यासितविशालमणिशिलावेदिकाङ्कं विद्रुमदारुपर्यङ्कमधिशयानस्तत्कालसेवागतैर्गीतशास्त्रपरिज्ञानदूरारूढगर्वैर्गान्धर्विकोपाध्यायैः सह वेणुवीणादिवाद्यविनोदेन दिनशेषमनयत् [ख]। अस्तशिखरपर्यस्तमण्डले च तरणावुत्तीर्य कृतसकलसान्ध्यकृत्यो विधाय देवतासपर्यामागृहीतविकटशृङ्गारवेषो घटितपरिवेषैः सर्वतः परि-

---

वेष्टित, पुन **अन्तरा अन्तरा** मध्ये मध्ये, **सुहृद्भिः** स्वमित्रै, सह, **नर्म** हास्यं, कुर्वन्। **च** पुन, **उपस्पृश्य** हस्तमुखं प्रक्षाल्य, **समाघ्रातधूपधूमवर्तिः** समाघ्राता–सम्यक् घ्राणेन्द्रियगृहीतगन्धा, धूपधूमवर्ति–धूपसम्बन्धिधूमरेखा, येन तादृश, **कर्पूरमृगनाभिसम्भेदसम्भृतामोदेन** कर्पूरस्य–तदाख्यप्रसिद्धद्रव्यविशेषस्य, मृगनाभे–कस्तूरिकायाश्च, सम्भेदेन–सम्मिश्रणेन, सम्भृत–सवर्धित, आमोद–सौगन्ध्यं, यस्मिंस्तादृशेन **घ्राणेन्द्रियाऽऽनन्दिना** घ्राणेन्द्रियोल्लासकेन, **चन्दनद्रवेण** चन्दनपङ्केन **दूरं** चिरम्, **उद्वर्त्य** अङ्गं विलिप्य, **अग्रहस्तः** पुरस्कृतहस्तः, **ताम्बूलं** नागवल्लीदलम्, गृहीत्वा, **अप्रतिकूलभाषिभिः** प्रियंवदै, **अशेषकलाशास्त्रकृतपरिचयैः** अशेषेषु–समस्तेषु, कलाशास्त्रेषु–शिल्पविद्यासु, कृत परिचय–अभिज्ञान यैस्तादृशै, **परचित्तविद्भिः** अन्यदीयमनोवृत्त्यभिज्ञै, **सुहृद्भिः** मित्रजनै, **अनुगम्यमानः** अनुस्त्रियमाण, **दन्तवलभिकां** हस्तिदन्तरचितशिरोगृहम्, अगच्छत्–गतवान्। कीदृशीम्? **गन्धसलिलच्छटासेकशिशिरीकृतसकलभित्तिक्षणां** गन्धसलिलाना–सुगन्धिजलानाम्, छटया–धारया, य सेक–सेचनम्, आप्लावनमिति यावत्, तेन शिशिरीकृत–शीतलीकृत, **सकलभित्तीनाम्** अशेषकुड्यानाम्, क्षणः–मध्यभागो यस्यां तादृशीम्, पुन **अनुक्षणापतत्पवनपुञ्जगुञ्जन्मणिगवाक्षगुञ्जाम्** अनुक्षणं–प्रतिक्षणम्, आपतताम्–आगच्छताम्, पवनाना–वायूनाम्, पुञ्जेन–समूहेन, गुञ्जन्ती–अव्यक्तशब्द कुर्वती, मणिगवाक्षगुञ्जा–मणिमयवातायनगुम्फितलताविशेषो यस्यां तादृशीम्, पुन **अपराह्णरम्यां** मध्याह्नरमणीयाम्, पुन **आवासहर्म्यशिखरप्रान्तवर्तिनीम्** आवासस्य–स्वनिवासाधिकरणभूतस्य, हर्म्यस्य–प्रासादस्य, शिखरप्रान्ते–शिरोभागान्ते, वर्तिनीम्–वर्तमानाम् [क]।

**च** पुन, **तत्र** तस्यां दन्तवलभिकायामित्यर्थः, **विद्रुमदारुपर्यङ्कं** विद्रुम–प्रवालाख्यरत्नप्रसवी वृक्षविशेष, तदीयं यद्, दारु–काष्ठम्, तद्रचितपर्यङ्कम्–ऊर्ध्वशय्याविशेषम्, **अधिशयानः** तदुपरि स्वपन्, **वेणुवीणादिवाद्यविनोदेन** वेणु–वंशी, वीणा–विपञ्ची, तत्प्रभृतिवाद्यस्य, विनोदेन–कौतुकेन, **दिनशेषं** दिनावशिष्टभागम्, **अनयत्** व्यतीतवान्। कीदृशं पर्यङ्कम्? **सितस्वच्छमृदुदुकूलोत्तरच्छदं** सित–शुभ्रवर्णम्, स्वच्छं–निर्मलम्, मृदु–श्लक्ष्णं च, यद् दुकूल–वस्त्रम्, तदेवोत्तरच्छद–ऊर्ध्वास्तरणं यस्मिंस्तादृशम्, पुन **उदग्ररत्नप्रतिपादुकप्रतिष्ठम्** उदग्रम्–उन्नतम्, रत्नप्रतिपादुकं–रत्नमयप्रत्येकपादुका, प्रतिष्ठा–आधारो यस्य तादृशम्, पुन **उभयपार्श्वविन्यस्तचित्रसूत्रितनेत्रगण्डोपधानम्** उभयपार्श्वविन्यस्ते–दक्षिणवामपार्श्वनिहिते, चित्रसूत्रिते–बहुविधचित्रबद्धे, नेत्रगण्डयो नयनगण्डस्थलयो, उपधाने स्थापनाऽऽधारौ, यस्मिंस्तादृशम्, पुन **अध्यासितविशालमणिशिलावेदिकाऽङ्कम्** अध्यासिता–निवेशिता, विशालमणिशिलाया–विस्तृतमणिरूपप्रस्तरस्य वेदिका–चतुरस्रभूमिर्यस्मिंस्तादृश, अङ्क–मध्यभागो यस्य तादृशम्, कैः सह? **तत्कालसेवागतैः** तत्काले–तस्मिन्नवसरे, सेवार्थमुपस्थितै, **गीतशास्त्रपरिज्ञानदूरारूढगर्वैः** गीतशास्त्रपरिज्ञानेन–गानग्रन्थविज्ञानेन, दूरारूढगर्वै–चिरस्थिराभिमानै, **गान्धर्विकोपाध्यायैः** गान्धर्वविद्याध्यापकै, सह [ख]।

**च** पुन, **तरणौ** सूर्ये, **अस्तशिखरपर्यस्तमण्डले** अस्तशिखरे–अस्ताचलोर्ध्वभागे, पर्यस्त–व्याप्तम्, मण्डल–बिम्ब, यस्य तादृशे, अस्ताचलाधिरूढे सतीत्यर्थ, **उत्तीर्य** शिरोगृहादवतीर्य, **कृतसकलसान्ध्यकृत्यः** सम्पादिताशेषसायन्तनकर्मा, **देवतासपर्यां** देवतापूजाम्, **विधाय** सम्पाद्य, **आगृहीतविकटशृङ्गारवेषः** आगृहीत–समन्ताद्

राजगणिकाकटाक्षवीक्षणकृतार्थीकृतपूर्वसंसृष्टविटसामन्तं क्वचिददानरुष्टदुष्टप्रतीहारहठनिर्धार्यमाणरोषदष्टौष्ठावण्ठव्रातं सर्वतश्च प्रकटिताहङ्कारैः परुषहुङ्कारवित्रासितजनैरुद्धतांस्तर्जयद्भिर्मान्यलोकं कृताञ्जलिपुटैरावर्जयद्भिरूर्ध्वस्थितानुपवेशयद्भिरनुपयुक्तान्निष्काशयद्भिरधिकृतान् स्वकर्मसु व्यापारयद्भिर्वावदूकान् मूकव्रते धारयद्भिर्महाप्रतीहारैः कृतावेक्षणं द्वारदेशादपक्रान्तसकलपदातिपरिवारैरुदंशुमणिमुकुटभास्वरशिरोभिराखण्डलच्छिन्नपिच्छैर्गिरिभिरिव शिखरदीप्यमानवज्राग्निभिरितस्ततो निषण्णैरेकैकानुचरकृतसाहायकैर्महादण्डनायकैरध्यासितमध्यमतिभूयस्तया च राजलोकस्य कृच्छ्रलभ्यनिर्गमप्रवेशावस्थानमास्थानमण्डपमगच्छत् [ ग ] ॥

तत्र च नृपतिर्देवताराधनव्यतिकरेण चिरकाललब्धावसरमतिदूरदर्शितादरैः प्रधानदौवारिकैः प्रवेश्य

---

**टिप्पनकम्—प्रणधिलोकं** दूतजनम् । **कृतालोकेन** एकत्र विहितालोकशब्देन, अन्यत्र कृतप्रकाशेन । **गतिरभसदोलायमानकज्जलस्निग्धनीलशिखाकलापेन** एकत्र गमनौत्सुक्येन चलन् कज्जलस्निग्ध. चूडासमूहो यस्य स तथोक्तस्तेन, अन्यत्र कज्जलस्निग्ध इन्द्रमणितेजोज्वालाकलापो यस्य स तथोक्तस्तेन [ घ ]।

---

रञ्जिता –प्रसादिता , या राजगणिका–राजवेश्या , तासां कटाक्षेण–अपाङ्गभङ्ग्या, यद् वीक्षणं–दर्शनम् , तेन कृतार्थीकृता –प्रमोदिता , पूर्वसंसृष्टा–पूर्वसम्मिलिता , विटसामन्ता –लम्पटक्षुद्रनृपा यस्मिंस्तादृशम् , पुन **क्वचिददानरुष्टदुष्टप्रतीहारहठनिर्धार्यमाणरोषदष्टौष्ठावण्ठव्रातं** क्वचित्–कस्मिंश्चित् स्थाने, अदानेन–दानाभावेन, रुष्ट –क्रुद्ध , पुन दुष्टप्रतीहारेण–दुष्टद्वारपालेन, हठेन–बलात्, निर्धार्यमाण –समुदायात् पृथक् क्रियमाण , रोषेण–अमर्षेण, दष्टौ ओष्ठौ यैस्तादृशानाम्, अवण्ठाना– दुर्बलानाम्, व्रात –समूहो यस्मिंस्तादृशम्, पुन **सर्वतः** सर्वांशत , **महाप्रतीहारैः** प्रधानद्वारपालै , **कृतावेक्षणं** कृतनिरीक्षणम्, कीदृशैस्तै ? **प्रकटिताहङ्कारैः** आविष्कृताभिमानै , पुन **परुषहुङ्कारवित्रासितजनैः** परुषेण–तीव्रेण, हुङ्कारेण, वित्रासिता –विभीषिता जना यैस्तादृशै , पुन **उद्धतान्** अविनीतजनान्, **तर्जयद्भिः** विभीषयद्भि , पुन **मान्यलोकं** माननीयजनम्, **कृताञ्जलिपुटैः** रचिताञ्जलिपुटै , **आवर्जयद्भिः**, नमस्कुर्वद्भि , पुन **ऊर्ध्वस्थितान्** उत्थितान्, **उपवेशयद्भिः** उपवेशन कारयद्भि , पुन **अनुपयुक्तान्** अनावश्यकजनान्, **निष्काशयद्भिः** बहिरपसारयद्भि , पुन **अधिकृतान्** तत्तत्कार्येषु नियुक्तजनान्, **स्वकर्मसु** स्वस्वकार्येषु, **व्यापारयद्भिः** प्रेरयद्भि., पुन **वावदूकान्** वाचालजनान्, **मूकव्रते** मौनव्रते, **धारयद्भि** स्थापयद्भि , पुन कीदृशमास्थानमण्डपम् ? **महादण्डनायकैः** प्रधानदण्डनीत्यध्यक्षै , **अध्यासितमध्यम्** अधिष्ठितमध्यभागम् , कीदृशै ? **द्वारदेशादपक्रान्तसकलपदातिपरिवारैः** द्वारदेशात्–प्रवेशनिर्गमस्थानविशेषात्, अपक्रान्ता –निष्क्रान्ता , सकला –सर्वे, पदातय –पादचारिण , परिवारा सैनिका येषा तादृशै , पुन **उदंशुमणिमुकुटभास्वरशिरोभि** उदंशुभि –उद्गता , अंशव –किरणा येषां तादृशै , मणिमुकुटै –मणिमयमस्तकाभरणै , भास्वराणि–दीप्यमानानि, शिरांसि–मस्तकानि येषा तादृशै , अत **आखण्डलच्छिन्नपिच्छैः** आखण्डलेन–इन्द्रेण, छिन्ना खण्डिता , पिच्छा –पक्षा येषा तादृशै , पुन **शिखरदीप्यमानवज्राग्निभिः** शिखरे–उपरिभागे, दीप्यमान –ज्वलन्, वज्राग्नि वज्रनिर्गताग्निर्येषा तादृशै , **गिरिभिरिव** पर्वतैरिवेत्युत्प्रेक्षा, पुन कीदृशै ? **इतस्ततः** अत्र तत्र, **निषण्णैः** उपविष्टै , पुन **एकैकानुचरकृतसाहाय्यकैः** एकैकेन, अनुचरेण–भृत्येन, कृतं, साहाय्यं–सहायता, येषां तादृशै , पुन कीदृशमास्थानमण्डपम् ? **राजलोकस्य** राजकीयजनस्य, **अतिभूयस्तया** अत्यन्ताधिक्येन, **कृच्छ्रलभ्यनिर्गमप्रवेशावस्थानं** कृच्छ्रलभ्यानि–स्थलसंकीर्णतया क्लेशसाध्यानि, निर्गमप्रवेशावस्थानानि– प्रवेश –तत्रागमनम्, निर्गम –ततो निष्क्रमणम् , अवस्थानं–तत्रावस्थितिश्च यत्र तादृशम् [ग]

**च** पुन , **तत्र** सभामण्डपे, **नृपतिर्देवताराधनव्यतिकरेण** नृपते –राज्ञ , देवताराधनव्यतिकरेण–देवताराधनव्यासङ्गवशेन, **चिरलब्धावसर** चिरेण–दीर्घकालेन, प्राप्तावसरम्, **अतिदूरदर्शितादरैः** अतिदूरादेव, दर्शित –प्रकटित , आदर –सम्मानो यैस्तादृशै , **प्रधानदौवारिकैः** प्रधानद्वारपालै , **प्रवेश्य प्रवेश्य** प्रवेश कारयित्वा कारयित्वा, **प्रत्येकश.**

रणेन भर्तुरदर्शनेन च प्रकामकर्शितशरीराम्, उज्झितालङ्कारामप्यकृत्रिमेण कान्तिसुकुमारतादिगुणपरिगृहीतेनाङ्ग-माधुर्येण सुकविवाचमिव सहृदयानां हृदयमावर्जयन्तीम्, ज्योत्स्नावदातनिर्मलाम्बरधारिणीं राकारजनिमिव, वारंवारमधिगताधिकविकाशसंपदा मुखेन परिपूर्णमिन्दुमण्डलं तुलयन्तीम्, उपनीतविविधवस्त्राभरणमुत्सवागतं बन्धुवनितावर्गं सहस्रगुणमूल्यैरंशुकै रत्नालङ्कारैश्च संभावयन्तीम्, शक्रावतारगमने सबहुमानेन वैमानिकदर्शने सविस्मयेन दिव्यहाराङ्गुलीयकालङ्कारलाभे सपरितोषेण वैतालरूपव्यावर्णने सत्रासेन कण्ठच्छेदसमये समासादितमूर्च्छेन राजलक्ष्मीनर्मभाषितश्रवणे सहासोल्लासेन भाविखेचरचक्रसाम्राज्यसुतवरप्राप्त्यवसरे समारूढपरमानन्दनिःष्यन्देन मनसा पार्श्ववर्तिपरिजननिवेद्यमानं पत्युरतिक्रान्तयामिनीवृत्तान्तमाकर्णयन्तीम्,

---

पुन. **सकलराज्यसुखोपभोगेषु** सकलानि–समस्तानि, यानि राज्यसुखानि, तेषामुपभोगेषु–अनुभवेषु, **निगृहीतवृत्तिना** निरुद्धमनोवृत्तिना, पुन **अतिदुष्करेण** अतिदु खसाध्येन, **च** पुन, **भर्तुः** पत्युर्मेघवाहनस्य, **अदर्शनेन** दर्शनाभावदु खेन, पुन कीदृशीम्? **उज्झितालङ्कारामपि** त्यक्ताभरणामपि, पक्षे त्यक्तानुप्रासोपमाद्यलङ्कारामपि, **सुकविवाचमिव** सत्कविवाणीमिव, **अकृत्रिमेण** स्वाभाविकेन, **कान्तिसुकुमारतादिगुणपरिगृहीतेन** कान्तिः–देहद्युति, सुकुमारता–अतिकोमलता च आदिर्येषा तादृशै गुणै, परिगृहीतेन–अन्वितेन, **अङ्गमाधुर्येण** शरीरसौन्दर्येण, पक्षे कान्ति –औज्ज्वल्यम्, हालिकादिपदविन्यासवैपरीत्येन विजातीयशोभाशालित्वमिति यावत्, सुकुमारता–अक्षराणामपारुष्यम्, तत्प्रभृतयो ये गुणा –आत्मन शौर्यादय इव रसस्योत्कर्षका धर्मा, तै परिगृहीतेन, **अङ्गमाधुर्येण** अङ्गस्य–काव्यशरीरभूतस्य शब्दस्य, यन्माधुर्य–श्रुतिसुखाधायकत्व तेन, **सहृदयानां** हृदयवताम्, चेतनानामित्यर्थ, पक्षे काव्यार्थपरिशीलनपरिणतमतीनाम्, **हृदयम्** अन्त करणम्, **आवर्जयन्तीम्** आकर्षन्तीम्, पुन **राकारजनिमिव** पूर्णिमारात्रिमिव, **ज्योत्स्नावदातनिर्मलाम्बरधारिणीं** ज्योत्स्नावत्–चन्द्रिकावत्, अवदात –धवल, निर्मल –स्वच्छश्च, योऽम्बर –वस्त्रम्, तद्धारिणीम्, पक्षे ज्योत्स्नया–चन्द्रिकया, अवदात निर्मलं च यदम्बरम्–आकाशम्, तद्धारिणीम्, पुन **अधिगताधिकविकाससम्पदा** अधिगता–प्राप्ता, अधिका–विपुला, विकाससम्पत्–प्रकाशसम्पत्तिर्येन तादृशेन, मुखेन, **वारं वारं** पुन पुन, परिपूर्ण–सम्पूर्णम्, **इन्दुमण्डलं** चन्द्रमण्डलम्, **तुलयन्तीम्** उपमिन्वतीम्, पुनः **उपनीतविविधवस्त्राभरणम्** उपनीतानि–उपहृतानि, विविधानि वस्त्राणि, आभरणानि–आभूषणानि च येन तादृशम्, **उत्सवागतम्** उत्सवप्रसङ्गेनागतम्, **बन्धुवनितावर्गं** स्वबन्धुरूपनारीगणम्, **सहस्रगुणमूल्यै** तदुपनीतवस्त्राभरणमूल्यापेक्षया सहस्रगुणानि–सहस्रगुणाधिकानि, मूल्यानि–निष्क्रयद्रव्याणि, येषा तादृशै, **अंशुकैः** श्लक्ष्णवस्त्रै, कौशेयवस्त्रैरिति यावत्, **च** पुन, **रत्नालङ्कारैः** रत्नमयाभूषणै, **सम्भावयन्तीं** सत्कुर्वतीम्। पुनः **पार्श्ववर्तिपरिजननिवेद्यमानं** पार्श्ववर्तिपरिजनेन–निकटवर्तिपरिवारेण, बोध्यमानम्, **पत्युः** मेघवाहनस्य, **अतिक्रान्तयामिनीवृत्तान्तं** व्यतीतरात्रिसमाचारम्, **मनसा** हृदयेन, **आकर्णयन्तीं** शृण्वतीम्, कीदृशेन मनसा? **शक्रावतारगमने** शक्रावताराख्यतीर्थप्रयाणश्रवणक्षणे, **सबहुमानेन** बहुमानसहितेन, पुन **वैमानिकदर्शने** विमानवासिदेवदर्शनश्रवणक्षणे, **सविस्मयेन** आश्चर्यान्वितेन, पुन **दिव्यहाराङ्गुलीयकालङ्कारलाभे** परमोत्तमहाराङ्गुलीयकरूपाभरणप्राप्तिश्रवणक्षणे, **सपरितोषेण** सन्तुष्टेन, पुन **वेतालरूपव्यावर्णने** वेतालसम्बन्धिभयङ्कराकृतिवर्णनश्रवणक्षणे, **सत्रासेन** भीतेन, पुन **कण्ठच्छेदसमये** कण्ठकर्तनश्रवणक्षणे, **समासादितमूर्च्छेन** मूर्च्छितेन, पुन **राजलक्ष्मीनर्मभाषितश्रवणे** राजलक्ष्म्या –राजवैभवाधिष्ठातृदेव्या, नर्मणा–हासेन, यद् भाषितम्–उक्तम्, तस्य श्रवणे–श्रवणक्षणे, **सहसोल्लासेन** सहसा–शीघ्रम्, उल्लास –आनन्दो यस्य तादृशेन, **सहासोल्लासेने**ति पाठे हासेन सहित सहास, हासपूर्वक उल्लासो यस्य तादृशेन, पुन **भाविखेचरचक्रसाम्राज्यसुतवरप्राप्त्यवसरे** खेचरचक्रस्य–विद्याधरसमूहस्य, यत् साम्राज्यं–सम्राट्त्वम्, तद् भावि–भविष्यद् यस्य तादृशो य. सुत–पुत्र, तदर्थवरलाभश्रवणक्षणे, **समारूढपरमानन्दनिःस्यन्देन** समारूढ–समासादित, परमानन्दस्य–अत्यानन्दामृतस्य, नि स्यन्द –प्रस्रवणम्, प्रादुर्भाव इति यावत्, येन तादृशेन। पुन कीदृशीम्? **अन्तःपुरविलासिनीभिः** अन्त पुरवधूभि, **परिवृतां** वेष्टिताम्, कीदृशीभि? **अनतिदूरवर्तिनीभिः** निकटवर्तिनीभि, पुन **संनिधापितसितकुसुमदामदूर्वाक्षतदधिलवाभिः** सनिधापिता –मङ्गलार्थमुपस्थापिता, सितकुसुमदाम्न –श्वेतपुष्पमाल्यस्य, दूर्वाया –तदाख्यतृणविशेषस्य,

कथासु स्थित्वा मुहूर्तमपसृतासु सव्याजं प्रियासहचरीषु, प्रकटिताङ्गरागशुक्तिषु प्रमृष्टमणिदर्पणासु समुत्सर्पितविलासदीपवर्तिषु संनिधापितकुसुमपटवासताम्बूलरत्नालङ्कारपटलकासु निर्यातासु शुद्धान्तशय्यापालिकासु, विविक्ततामुपगते द्वारकपाटसंघटनघनविसर्पदगरुघनसारधूपोद्गारसौरभे वासभवने, भूमिपालस्तिर्यगावलितकण्ठकाण्डेन वदनपुण्डरीकेण प्रत्यवयवं विलोक्य स्पृष्ट्वा च करतलेन मन्दमन्दमानन्दनिर्यत्पुलककलिकाकोरकितानि मदिरावतीगात्राणि किञ्चिदाकुञ्चितेक्षणः सकृप इव खिन्नाक्षरोद्गारं शनैर्व्याजहार—'देवि! दृढमायासितासि, मयैव गाढकृतनिश्चयेन त्वदर्थसिद्ध्यर्थमध्यवसिते देवतासमाराधनविधौ किमिति निष्कारणमियन्ति वासराणि प्रकृतिकर्कशजनोचितैर्व्रतकर्मभिः कदर्थितोऽयं सततसुखोचितस्त्वयात्मा, किमर्थमेषा मदङ्कशय्याशयनलालिता ललिताङ्गि! शायिता निरावरणासु स्थण्डिलस्थलीषु स्थलारविन्दकेसरसरससुकुमारा काययष्टिः, किमिति निर्दये! निसर्गपेलवं मध्यभागमनुदिवसमुपवासैः कर्शयन्त्या कृतं प्रकृतिकर्कशस्यास्य

---

प्रारब्धा—वक्तुमुपक्रान्ता, परिहासपेशला—हास्यमनोहरा, कथा—वाक्यप्रबन्धो याभिस्तादृशीषु, **प्रियासहचरीषु** प्रियासखीषु, **मुहूर्तं** क्षणम्, **स्थित्वा** विलम्ब्य, **सव्याजं** केनचिच्छद्मना, **अपसृतासु** निर्गतासु। तथा **शुद्धान्तशय्यापालिकासु** अन्तःपुरशय्यारक्षिकासु, तद्विन्यासिकास्विति यावत्, **निर्यातासु** निर्गतासु सतीषु, कीदृशीषु? **समुत्सर्पितविलासदीपवर्तिकासु** समुत्सर्पिता—समुत्तेजिता, विलासदीपस्य—सुरतप्रदीपस्य, वर्तिः—दशा, याभिस्तादृशीषु, पुनः **प्रकटिताङ्गरागशुक्तिषु** प्रकटिताः—मञ्जूषादेरुद्धृताः, अङ्गरागस्य—अङ्गविलेपनद्रव्यस्य, आधारभूताः शुक्तयो याभिस्तादृशीषु, पुनः **प्रमृष्टमणिदर्पणासु** प्रकर्षेण मृष्टाः—विशोधिताः, मणिदर्पणाः—मणिमयदर्पणा याभिस्तादृशीषु, पुनः **सन्निधापितकुसुमपटवासताम्बूलरत्नालङ्कारपटलकासु** सन्निधापितम्—उपस्थापितम्, कुसुमानां—पुष्पाणाम्, पटवासानां—वसनवासकानां—कुङ्कुमादिचूर्णानाम्, ताम्बूलानां—नागवल्लीदलानाम्, रत्नालङ्काराणां—रत्नमयाभरणानाम्, पटलं—समूहो याभिस्तादृशीषु। तथा **द्वारकपाटसंघटनघनविसर्पदगरुघनसारधूपोद्गारसौरभे** द्वारकपाटयोः—द्वारवर्तिकपाटयोः, संघटनेन—संयोजनेन, घनं—सान्द्रं यथा स्यात् तथा, विसर्पत्—अन्तः प्रसरत्, अगुरु—सुगन्धिद्रव्यविशेषः, घनसारः—कर्पूरः, तयोर्धूपस्योद्गारेण—प्रसारेण, सौरभम्—आमोदो यस्मिंस्तादृशे, **वासभवने** वासगृहे, **विविक्ततां** निर्जनताम्, **उपगते** प्राप्ते सति, **भूमिपालः** राजा मेघवाहनः, **तिर्यगावलितकण्ठकाण्डेन** तिर्यक्—कुटिलं यथा स्यात् तथा, आवलितः—आनमितः, कण्ठकाण्डः—कण्ठरूपः काण्डः—नालो यस्य तादृशेन, **वदनपुण्डरीकेण** मुखकमलेन, **आनन्दनिर्यत्पुलककलिकाकोरकितानि** आनन्देन निर्यतीभिः—निःसरन्तीभिः, पुलककलिकाभिः—रोमाञ्चकोरकैः, कोरकितानि—व्याप्तानि, **मदिरावतीगात्राणि** मदिरावतीशरीराणि, **प्रत्यवयवं** प्रत्यङ्गम्, **विलोक्य** दृष्ट्वा, **च** पुनः, **करतलेन** हस्ततलेन, **मन्दं मन्दं** किञ्चित् किञ्चित्, **स्पृष्ट्वा** स्पर्शं कृत्वा, **किञ्चिदाकुञ्चितेक्षणः** किञ्चित्सङ्कोचितनयनः, **सकृप इव** सदय इव, **खिन्नाक्षरोद्गारं** खिन्नः—खेदान्वितः, अक्षरोद्गारः—अक्षरोच्चारणं यस्मिंस्तादृशं यथा स्यात् तथा, **शनैः** मन्दम्, **व्याजहार** उक्तवान्, किमित्याह—**देवि!** राज्ञि!, त्वं **दृढम्** अत्यन्तम्, **आयासिता** क्लेशिता, **असि** वर्तसे, **त्वदर्थसिद्ध्यर्थं** त्वत्पुत्ररूपार्थसिद्ध्यर्थम्, **गाढकृतनिश्चयेन** कृतदृढनिश्चयेन, मयैव, **अध्यवसिते** सकल्पिते, **देवतासमाराधनविधौ** देवतार्चनकार्ये, **निष्कारणं** वृथैव, **इयन्ति** एतावन्ति, **वासराणि** दिनानि, **प्रकृतिकर्कशजनोचितैः** प्रकृत्या—स्वभावेन, कर्कशाः—कठोरकलेवराः, ये जनाः, तदुचितैः—तद्योग्यैः, **व्रतकर्मभिः** नियमाचरणैः, **सततसुखोचितः** अनवरतसुखानुभवयोग्यः, अयमात्मा, **किमिति** किमर्थं **त्वया** भवत्या, **कदर्थितः** क्लेशितः। हे **ललिताङ्गि!** सुन्दरशरीरे!, **स्थलारविन्दकेसरसरससुकुमारा** स्थलारविन्दस्य—स्थलकमलस्य, ये केसराः—किञ्जल्काः, तद्वत् सरसा—स्निग्धा, सुकुमारा—अतिकोमला, **मदङ्कशय्याशयनलालिता** मदीयोत्सङ्गरूपशय्याया शयनेन—स्वपनेन, लालिता—प्रसादिता, एषा **काययष्टिः** स्वशरीरयष्टिः, **निरावरणासु** आवरणरहितासु, **स्थण्डिलस्थलीषु** चत्वरभूमिषु, किमर्थं **शायिता** स्वापिता,। हे **निर्दये!** दयारहिते!, **निसर्गपेलवं** स्वभावतः कोमलम्, **मध्यभागं** शरीरमध्यावयवम्, **अनुदिनं** प्रतिदिनम्, **उपवासैः** अनशनैः, **कर्शयन्त्या** कृशतामा-

विघटमानाष्टदिग्भागदलं विकटायमानकुक्षिकोटरमरविन्दमिव मधुपङ्कदिग्धेष्वलिकुलेषु गगनमपहाय तत इतः प्रयात्सु संध्यारागरञ्जितेषु रजनीतमस्सु, राजा राजतगिरिशिखरमधिरूढायाः श्वेतवसनस्रग्विलेपनालङ्कारकमनीयमूर्तेर्मदिरावत्याः शैलराजदुहितुरिव हेरम्बमम्बरादवतीर्य पुरःस्थितमपारपरिमलान्धैः सर्वतो निपतद्भिरश्रान्तझङ्कारमुखरिताशामुखैरहमहमिकया विलुप्यमानकपोलमदवारिनिर्झरमलिकुलैः कुचकुम्भविन्यस्तविकटपुष्करेण करेणाकृष्याकृष्य स्तन्यमापिबन्तं स्वप्ने सुरेन्द्रवाहनं वारणमपश्यत् [ञ]। उपशान्तनिद्रश्च मङ्गलतूर्यनिर्घोषेण सप्रहर्षमुत्थाय प्रथमतरमुत्थितायाः 'देवि! संपन्नास्ते गुरुजनाशिषः, प्रसन्ना समासन्नैव देवी राजलक्ष्मीः, भविष्यत्यशेषभूभृच्चक्रचूडारत्नमचिरेणैव सूनुः' इत्युदीर्य प्रकटितादरो मदिरावत्याः स्वप्नमाचचक्षे, सापि बद्धावधाना सविस्मयव्रीडमवनतेन शिरसा तमश्रौषीत् [ट]॥

---

पल्लवाः-वर्णसाम्यान्नूतनदलानि, तत्र कृतो निवेशः-समावेशो येन तादृशम्, **अवश्यायजलबिन्दुजालमिव** हिमजलबिन्दुपुञ्जमिवेत्युत्प्रेक्षास्पदम्, **नक्षत्रनिवहं** तारासमूहम्, **अजस्रं** सततम्, **उज्झतीषु** मुञ्चन्तीषु सतीषु। तथा **मधुपङ्कदिग्धेषु** मधुपङ्केन-मकरन्दद्रवेण, दिग्धेषु-उपलिप्तेषु, **अलिकुलेषु** भ्रमरमण्डलेषु, **अरविन्दमिव** कमलमिव, **गगनम्** आकाशमण्डलम्, **अपहाय** त्यक्त्वा, **सन्ध्यारागरञ्जितेषु** सन्ध्याकालिकरक्तवर्णव्याप्तेषु, **रजनीतमस्सु** निशान्धकारेषु, **तत इतः** अत्र तत्र, **प्रयात्सु** प्रयाणमाचरत्सु, कीदृशमरविन्दम्? **पर्यायविघटमानाष्टदिग्भागदलं** पर्यायेण-क्रमेण, विघटमानानि-विश्लिष्यमाणानि, पक्षे पृथगवभासमानानि, अष्टदिग्भागदलानि-अष्टदिग्भागावलम्बिपत्राणि, पक्षे अष्टदिग्भागरूपपत्राणि यस्मिंस्तादृशम्, पुन **विकटायमानकुक्षिकोटर** विकटायमान -प्रकटायमान, कुक्षिकोटर -मध्यभागरूपगुहा, यस्मिंस्तादृशम्। कीदृशम् वारणमपश्यत्? **अम्बरात्**—आकाशात्, **अवतीर्य** अधस्तादागत्य, **पुरः** अग्रे, **स्थितम्** उपविष्टम्। पुन कीदृशम्? **राजतगिरिशिखरमधिरूढायाः** राजत -रजतसम्बन्धी, यो गिरि -कैलासपर्वत, तस्य शिखरम्, अधिरूढाया -आरूढाया, पुन **श्वेतवसनस्रग्विलेपनालङ्कारकमनीयमूर्त्ते** श्वेतवसनेन-शुभ्रवस्त्रेण, स्रजा-माल्येन, विलेपनेन-अङ्गरागेण, अलङ्कारै -हाराद्याभूषणैश्च, कमनीया-मनोहरा, मूर्त्ति -शरीरं, यस्यास्तादृश्या, **स्तन्यं** दुग्धम्, **पिबन्तं** पानकर्मतामापादयन्तम्, कस्या कमिव किं कृत्वा? **शैलराजदुहितुः** पार्वत्या, **हेरम्ब** गणेशमिव, **कुचकुम्भविन्यस्तविकटपुष्करेण** कुम्भाविव यौ कुचौ-स्तनौ, तत्र विन्यस्त-स्थापितम्, विकट प्रकटम्, पुष्करम्-अग्रभागो यस्य तादृशेन करेण-शुण्डादण्डेन, **आकृष्याकृष्य** पुन पुनराकृष्य। पुन कीदृशम्? **अहमहमिकया** अहमहम्भावेन, **अलिकुलैः** भ्रमरसमूहै, **विलुप्यमानकपोलमदवारिनिर्झरं** विलुप्यमान -पानद्वारा निरुध्यमान, कपोलमदवारिण -गण्डस्थलनिष्पन्दिमदजलस्य, निर्झर -प्रवाहो यस्य तादृशम्, कीदृशैरलिकुलै? **अपारपरिमलान्धैः** अपारेण-बहुतरेण, परिमलेन-मदजलसौरभेण, अन्धै -व्यामुग्धै, पुन **सर्वत** सर्वदिग्भ्य, **निपतद्भि** मदजलप्रवाहे निमज्जद्भि, पुन **अश्रान्तझङ्कारमुखरिताशामुखै** अश्रान्तै -अविरतै, झङ्कारै -ध्वनिविशेषै, मुखरितानि-प्रतिध्वानितानि, आशामुखानि-दिङ्मुखानि यैस्तादृशै [ञ]। **च** पुन, **मङ्गलतूर्यनिर्घोषेण** मङ्गलतूर्याणा-माङ्गलिकवाद्यविशेषाणाम्, यो निर्घोष -ध्वनि, तेन उपशान्तनिद्र -भग्ननिद्र, **सहर्षं** हर्षपूर्वकम्, **उत्थाय** जागरित्वा, **प्रथमतरं** पूर्वतरम्, **उत्थितायाः** प्रबुद्धाया, मदिरावत्या, देवि! **ते** तव, **गुरुजनाशिषः** श्रेष्ठजनशुभैषणा, **संपन्नाः** सिद्धा, **समासन्नैव** सन्निहितैव, **राजलक्ष्मीः देवी** राजवैभवाधिष्ठात्री लक्ष्मीनाम्नी देवी, **प्रसन्ना** प्राप्तप्रसादा, यत **अशेषभूभृच्चक्रचूडारत्नम्** अशेषाणा भूभृता-राज्ञाम्, यच्चक्रं-समूह, तस्य चूडारत्न-मुकुटरूप, **सूनुः** पुत्र, **अचिरेणैव** अविलम्बेनैव, **भविष्यति** उत्पत्स्यते, **इत्युदीर्य** इत्युक्त्वा, **प्रकटितादरः** प्रदर्शितादर, **स्वप्नं** तद्विषयकस्वाप्नज्ञानम्, **आचचक्षे** उक्तवान्। **सापि** मदिरावत्यपि, **बद्धावधाना** कृतावधाना सती, **अवनतेन** नम्रतां गतेन, **शिरसा** मस्तकेन, **सविस्मयव्रीडं** साश्चर्यलज्जम्, **तं** स्वप्नम्, **अश्रौषीत्** श्रुतवती [ट]।

मनयोः स्वेन रूपेण भारमुद्वोढुमक्षमेव क्षामतां मुमोच मध्यलक्ष्मीः, अनपत्यतादर्शनदुःखतप्तां निर्वापयितुमिव वन्धुतामायताः प्रसस्नुः पदन्यासेषु निःश्वासाः [त]। प्रतिदिवसमुपचीयमानगर्भा च सा सकललोकाश्चर्यकारिणोऽभिलाषविभ्रमानभृत, तथा हि—वासभवनाङ्गणभ्रमिषु खिन्ना शरत्प्रसन्ने मानससरःपयसि ससखीजना स्नातुमियेष, मध्यन्दिननिदाघजनिताऽऽयल्लका पल्लवितकल्पपादपलताकुलेषु कुलगिरिनितम्बारामेषु रन्तुमभिललाष, विबुधवृन्दपरिवृता शाश्वतेषु सागरान्तरद्वीपसिद्धायतनेषु सान्ध्यमारब्धमप्सरोभिः प्रेक्षानृत्यमीक्षितुमाकाङ्क्षत्, अग्रतः प्रपञ्चितविचित्राख्यानकेन श्रव्यवचसा कथकनारीजनेन विविधं विनोद्यमानापि दिव्यकथासु कर्णं ददौ, विधृतविकोशपुष्करे न तथा निजकरे यथा सुभटनिकरे दृष्टिमनयत्, अपास्तरणपरिकरं प्रकामगुणवन्तमपि भृत्यलोकं पर्यङ्कमिव सावज्ञमैक्षत, सर्वदिग्व्यापिना पत्युरपि प्रतापेन समतप्यत,

---

**टिप्पनकम्—वन्धुतां** वन्धुसमूहम् [त]। आयल्लक —खेद । **विधृतविकोशपुष्करे** एकत्र विधृतविगतप्रतिवारासिफलके, अन्यत्र विधृतविकसितपद्मे। **अपास्तरणपरिकरं** निरस्तसंग्रामपरिच्छदम्, अन्यत्र अपगतास्तरणपरिकरम् [थ]॥

---

**मुखतां** श्याम—कृष्णम्, मुखम्—अग्रभागो यस्य तत्ताम्, **जग्मतुः** प्रापतु, अन्तर्वत्नीनामुदरगौरवस्य आलिङ्गनानन्दशैथिल्यस्य स्तनाग्रभागश्यामत्वस्य चौत्सर्गिकत्वात् । **च** पुन, **कामम्** अत्यन्तम्, **प्रवृद्धयोः** स्थौल्यमापन्नयो, **अनयोः** स्तनयो, भारं, **स्वेन** आत्मीयेन, **रूपेण** कृशाकारेण, **उद्वोढुम्** उद्वहनाय, **अक्षमा इव** असमर्था इवेत्युत्प्रेक्षा, **मध्यलक्ष्मीः** मध्यावयवशोभा, **क्षामतां** कृशताम्, **मुमोच** तत्याज, स्वाभाविककृशतामपहाय स्तनभारोद्वहनोपयोगिनीं गुरुता जग्राहेत्यर्थ । **अनपत्यतादर्शनदुःखतप्ताम्** अनपत्यताया —अपत्यराहित्यस्य, दर्शनेन यद् दु ख—परिताप, तेन तप्ताम्, **वन्धुतां** स्वबन्धुजनताम्, **निर्वापयितुं** शमयितुमिव, **आयताः** दीर्घा, **निश्वासाः** नासावायव, **पदन्यासेषु** पादविक्षेपेषु चलनवेलायामित्यर्थं, **प्रसस्नुः** प्रसरन्ति स, अन्तर्वत्नीना चलनश्रमेण नि श्वासोद्गमस्य प्रकृतिसिद्धत्वात् [त]। **च** पुन, **प्रतिदिवसं** प्रतिदिनम्, **उपचीयमानगर्भा** वर्धमानगर्भा सती, **सकललोकाश्चर्यकारिणः** सर्वलोकाश्चर्यजनकान्, **अभिलाषविभ्रमान्** मनोरथविलासान्, **अकृत** कृतवती, **अभृतेति** पाठे धृतवतीत्यर्थ । तान् विभ्रमान् दर्शयति—**तथाहीति**। **वासभवनाङ्गणभ्रमिषु** वासभवनस्य—निवासमन्दिरस्य, यानि अङ्गणानि—चत्वराणि, तेषु या भ्रमयः—भ्रमणानि, तासु **खिन्ना** अनुभूतखेदा सती, **ससखीजना** सखीजनसहिता, **शरदागमात्** शरदृतोरागमनात्, **प्रसन्ने** निर्मले, **मानससरःपयसि** मानसाख्यसरोवरजले, **स्नातुं** निमज्जितुम्, **इयेष** अभिलषितवती । **मध्यन्दिननिदाघजनिताऽऽयल्लका** मध्यन्दिने—मध्याह्ने, यो निदाघ —घर्म, तेन जनित —उत्पादित, आयल्लक —खेदो यस्यास्तादृशी सती, **पल्लवितकल्पपादपलताकुलेषु** पल्लविताभि —नूतनदलव्याप्ताभि, कल्पपादपलताभि —कल्पवृक्षलताभि, आकुलेषु—व्याप्तेषु, यद्वा पल्लवितं कल्पपादपलताना कुलं—समूहो येषु तादृशेषु, **कुलगिरिनितम्बारामेषु** कुलगिरीणा—कुलपर्वतानाम्, नितम्बारामेषु—मध्यभागस्थोद्यानेषु, **रन्तुं** क्रीडितुम्, **अभिललाष** अभिलषितवती, मदिरावतीति शेष । **विबुधवृन्दपरिवृता** विबुधवृन्देन—पण्डितमण्डलेन, देवमण्डलेन वा, परिवृता—परिवेष्टिता सती, **शाश्वतेषु** सदातनेषु, **सागरान्तरद्वीपसिद्धायतनेषु** सागरान्तरा समुद्रान्तर्गता, ये द्वीपा —स्थलप्रदेशा, तत्रत्येषु सिद्धायतनेषु—सिद्धमन्दिरेषु, **अप्सरोभिः** स्वर्वेश्याभि, **आरब्धं** प्रवर्तितं, **सान्ध्यं** सायंकालिकं, **प्रेक्षानृत्यं** नृत्यविशेषम्, **ईक्षितुं** द्रष्टुम्, **अकाङ्क्षत्** आकाङ्क्षितवती। **अग्रतः** अग्रे, **प्रपञ्चितविचित्राख्यानकेन** प्रपञ्चित—विस्तारितम्, विचित्र—विविधम्, आख्यानकम्—अमृतमन्थनादिकथानक येन तादृशेन, **श्रव्यवचसा** श्रव्य—श्रवणप्रियं, वचो यस्य तादृशेन, **कथकनारीजनेन** कथानककुशलो यो नारीजन —स्त्रीजन, तेन, **विविधं** नानाप्रकारकं यथा स्यात् तथा, **विनोद्यमानापि** प्रसाद्यमानापि, **दिव्यकथासु** दैविकोपाख्यानकेषु, मनोहरकथासु वा, **कर्णं**, **ददौ** प्रवर्तयामास, **विधृतविकोशपुष्करे** विधृतं—निहितम्, विकोशं—विकसितम्, पुष्करं—कमल, यस्मिंस्तादृशे, **निजकरे** स्वहस्ते, तथा दृष्टिं न, **अनयत्** प्रेरितवती, यथा विधृत, विकोशं—प्रत्याकाररहितम्, पुष्करं—कृपाण, फलकं येन तादृशे, **सुभटनिकरे** सुयोधसमूहे । **प्रकामगुणवन्तमपि** अत्यन्तगुणशालिनमपि, पक्षे मनोहररज्जुबद्ध—

वामनोऽनेकशतसंख्यः शुद्धान्तवारस्त्रीजनः [ध]। प्रमुदितपौरजनजयजयारावपीवरः प्रतिभवनमाहतानामसंख्यकाहलाशङ्खझल्लरीमुरजपटहानामनुसृतः पटीयसा झात्कृतेन वादित्राणामाह्वयन्निव नर्तनाय व्योम्नि वैमानिकवधूवृन्दमाकारयन्निव महोत्सवालोकनाय दिक्षु लोकपालपरिषदमादिशन्निव रङ्गावलीयोग्यरत्नानयनाय पृथ्वीतलोपान्तेषु पाथोनिधीन् बभ्राम मथनभ्रान्तमन्दरविघूर्णितमहार्णवध्वानघर्घरो जगति नान्दीघोषः [न]। प्रसर्पन्नितस्ततः प्रस्तुतपरीहास इव तत्कालमधिगतविकाशासु प्रमुदितास्विव दिक्षु चिक्षेप पिष्टातरज.पिञ्जरं सरोजकिञ्जल्कजालमुद्यानानिलः [प]। कृताध्ययनभङ्गविद्वज्जनविसर्जितानि प्रष्ठीकृतैकैकबठरच्छात्रहस्तार्पितविशालपूर्णकलशानि युगपदुच्चारिताशीःपरम्परावचनवाचालानि चेलुरन्तःपुराभिमुखमखिलानि विद्यासत्रशालान्तेवासिमण्डलानि [फ]। प्रचलितारुणपाणिमणिपल्लवमान्दोलितालिनीललीलालकभङ्गमाभङ्गुरसुरोज-

---

**नान्दीघोषः**—"देवद्विज नृपादीनामाशीर्वादपरायणा । नन्दन्ति देवता यस्मात् तस्मान्नान्दी प्रकीर्त्तिता ॥" इत्युक्तमङ्गलध्वनि, **जगति** भुवने, **बभ्राम** भ्राम्यति स्म, कीदृश ? **प्रमुदितपौरजनजयजयारावपीवरः** प्रमुदितानां प्रहृष्टानाम्, पौरजनाना–तत्पुरवासिजनानाम्, **जयजयारावैः** जयजयकारै, **पीवरः** स्थूल, प्रवृद्ध इति यावत्, पुन **प्रतिभवनं** प्रतिगृहम्, **आहतानां** ताडितानाम्, **असंख्यकाहला शङ्ख-झल्लरी-मुरज-पटहानाम्**, असख्या–अनियतसख्याका, बहव इति यावत्, ये काहला–महाढक्का, शङ्खा–समुद्रोत्पन्नमुखवाद्यविशेषा, झल्लर्य–कास्यवाद्यविशेषा, मुरजा–मृदङ्गा, पटहा–दुन्दुभय, तेषाम्, **वादित्राणां** वाद्यविशेषाणाम्, **पटीयसा** मनोहरेण, **झात्कृतेन** ध्वनिविशेषेण, **अनुसृतः** अन्वित, किं कुर्वन्निव ? **व्योम्नि** आकाशे, स्थितमिति शेष, **वैमानिकवधूवृन्दं** विमानवासिदेवाङ्गनागणम्, **नर्तनाय** नृत्यार्थम्, **आह्वयन्निव** आकारयन्निवेत्युत्प्रेक्षा, पुन **दिक्षु** दशदिशासु स्थितामिति शेष, **लोकपाल परिषदं** दिक्पालदेवसभाम्, **महोत्सवालोकनाय** राजपुत्रजन्ममहोत्सवदर्शनाय, **आकारयन्निव** आह्वयन्निवेति चोत्प्रेक्षा, पुन **रङ्गावलीयोग्यरत्नानयनाय** रज्यत्यस्मिन्निति रङ्ग–नृत्यमण्डप, तस्य आवली–पङ्क्ति, तद्योग्यानि–तन्निवेशनयोग्यानि, यानि रत्नानि, तेषामानयनाय–उपहरणाय, **पृथ्वीतलोपान्तेषु** पृथ्वीतलप्रदेशेषु, **आदिशन्निव** आज्ञापयन्निवेति चोत्प्रेक्षा, कीदृश ? **मथनभ्रान्तमन्दरविघूर्णितमहार्णवध्वानघर्घरः** मथने–सुरासुरकृतसमुद्रविलोडने, भ्रान्त–प्राप्तभ्रमण, यो मन्दर–मेरु, तेन विघूर्णित–विक्षोभित, यो महार्णव–महासमुद्र, तस्य यो ध्वान–ध्वनि, तद्वद् घर्घर–स्वरविशेषान्वित [न]। **इतस्ततः** अत्र तत्र प्रदेशे, **प्रसर्पन्** प्रवहन्, **उद्यानानिलः** आरामवात **पिष्टातरज.पिञ्जरं** पिष्टातरजोवत्–पटवासचूर्णवत् पिञ्जरं–किञ्चिद्रक्तपीतवर्णम्, **सरोजकिञ्जल्कजालं** सरोजानां–कमलानाम्, किञ्जल्कजाल–केसरसमूहम्, **दिक्षु** सकलदिशासु, **चिक्षेप** विक्षिपति स्म। कीदृशीषु दिक्षु ? **तत्कालं** तत्क्षणम्, **अधिगतविकासासु** प्राप्तविकासासु, विकसितास्वित्यर्थ, अत एव **प्रमुदितास्विव** प्राप्तप्रमोदास्विवेत्युत्प्रेक्षा। कीदृश इव ? **प्रस्तुतपरिहास इव** प्रस्तुत–प्रारब्ध, परिहास–परि सर्वतोभावेन हासो येन तादृश इवेत्युत्प्रेक्षा, यथा नायको होलिकोत्सवे परिहासेन नायिकोपरि रक्तचूर्णानि विक्षिपति तथेत्यर्थ [प]। **अखिलानि** सकलानि, **विद्यासत्रशालान्तेवासिमण्डलनि** विद्यासत्रशालाया–विद्यादानशालाया, ये अन्तेवासिन–छात्रा, तेषा मण्डलानि–समूहा, **अन्तःपुराभिमुखं** राजस्त्रीनिवासभवनाभिमुखम्, **चेलुः** जग्मु, कीदृशानि ? **कृताध्ययनभङ्गविद्वज्जनविसर्जितानि** कृतोऽध्ययनस्य भङ्गो विच्छेदो यैस्तादृशै, विद्वज्जनै–अध्यापकजनै, विसर्जितानि–परित्यक्तानि दत्तावकाशानीत्यर्थ, पुन **प्रष्ठीकृतैकैकवठरच्छात्रहस्तार्पितविशालपूर्णकलशानि** प्रष्ठीकृतस्य–एकैकेन मण्डलेन स्वाग्रे गमितस्य, एकैकस्य वठरच्छात्रस्य–मूर्खच्छात्रस्य, हस्ते, अर्पित–निहित, विशाल–बृहदाकार, पूर्णकलश–जलपूरितपल्लवावृतमुखकुम्भो यैस्तादृशानि, पुन **युगपदुच्चारिताशी.परस्परावचनवाचालानि** युगपदुच्चारितै–एककालावच्छेदेनोच्चै, आशी परम्परावचनै–शुभैषणासमूहार्थकवाक्यै, वाचालानि–शब्दायमानानि [फ]। **सान्तःपुरम्** अन्त पुरेण–तात्स्थ्येनोपचारादन्त पुरस्त्रीजनेन सहितम्, **नगरनारीवृन्दं** प्रकृतनगरवास्तव्यस्त्रीसमूह, **अनिलाहतकल्पलतावनमिव** अनिलेन–वायुना, आहतम्–आस्फालितम्, कल्पलतावन–कल्पवृक्षसमूह इव, **ननर्त** नृत्य चकार। कीदृशम् ? **प्रचलितारुणपाणिमणिपल्लवं** प्रचलितानि–प्रकम्पितानि, अरुणानि–रक्तवर्णानि, पाणिमणिरूपाणि–मनोहरहस्तरूपाणि, पल्लवानि–नवपत्राणि यस्य तादृशम्,

कारयत सर्वतः शान्तिसलिलक्षेपमकृतकालक्षेपम्, आहरत भगवतीं षष्ठीदेवीम्, आलिखत जातमातृपटलम्, आरभध्वमार्यवृद्धासपर्याम, निधत्त पर्यन्तेषु शयनस्य सद्योभिमन्त्रितां रक्षाभूतिरेखाम्' इत्यादि जल्पता तल्पनिकटोपविष्टेन शुद्धान्तजरतीजनेन क्रियमाणविविधशिशुरक्षाविधानमविरतचलत्तालवृन्तनिर्वाप्यमाणसनागरक्षोदपानोदकशरावमधिकोदञ्चितात्मभिरचञ्चलावस्थानैरुत्थाय विस्मितैरिव त्रिभुवनातिशायिशोभमर्भकरूपमवलोकयद्भिर्मङ्गलप्रदीपैः प्रकाशिताभ्यन्तरमदूरस्थितात्मव्यापारसत्वरसूतिकं प्रियायाः प्रसूतिगृहमविशत् [ भ ] ॥

प्रविश्य च सतर्षमुद्भूतप्रहर्षस्मितो विस्मयस्तिमितपक्ष्मणा लोचनयुगेन स्फुटविभाव्यमानसकलचक्रवर्तिलक्षणां शस्यां प्रतिक्षणमवलोक्य सूनोस्त्रिभुवनविलक्षणामवयवश्रियममन्दनिर्गतानन्दाश्रुबिन्दुरप्रतिपादनीयां

---

नेषु, **रत्नचूर्णस्वस्तिकान्** रत्नानां चन्द्रकान्तादीनाम्, यानि चूर्णानि-कणाः, तैः स्वस्तिकान्-माङ्गलिकाकारविशेषान्, **रचयत** कल्पयत; पुनः **द्वारि** द्वारोपरि, **नूतनं** नवीनम्, **चूतपल्लवदाम** आम्रपल्लवमयतोरणमालाम्, **दत्त** स्थापयत, बध्नीतेत्यर्थः, पुनः **अन्तः** अभ्यन्तरे, **उत्फुल्लपङ्कजोपहारम्** उत्फुल्लानि उद्विकसितानि, यानि पङ्कजानि-कमलानि, तद्रूपम्, उपहारं-माङ्गलिकप्राभृतम्, **विकिरत** विक्षिपत, पुनः **अकृतकालक्षेपं** न कृतः कालक्षेपः-कालातिक्रमः, विलम्ब इति यावत्, यस्मिंस्तादृशं यथा स्यात् तथा, **सर्वतः** सर्वत्र, **शान्तिसलिलक्षेपं** शान्तिजनकजलसेकम्, **कारयत** भृत्यद्वारा सम्पादयत, पुनः **भगवतीम्** ऐश्वर्यशालिनीम्, **षष्ठीदेवीं** षोडशमातृकासु षष्ठीं बालपालनशीलाम्, "मातृकासु पूज्यतमा सा च षष्ठी प्रकीर्तिता । शिशूनां प्रतिविश्वेषु प्रतिपालनकारिणी । तपस्विनी विष्णुभक्ता कार्त्तिकेयस्य कामिनीम्" इत्याद्युक्तां देवीम्, **आहरत** आवाहयत, पुनः **जातमातृपटलं** जात नाम गोघृतप्राशनादिना संस्कारविशेषः, तदधिष्ठातृभूतं मातृपटलं-गौरीपद्मादिदेवीषोडशकम्, **आलिखत** चित्रयत, पुनः **आर्यवृद्धासपर्याम्** आर्याणां-श्रेष्ठानाम्, वृद्धानां-वृद्धस्त्रीणाम्, सपर्यां पूजाम्, **आरभध्वं** प्रारभध्वम्; पुनः **शयनस्य** जातकशय्यायाः, **पर्यन्तेषु** प्रान्तभूमिषु, **सद्यः** तत्क्षणम्, **अभिमन्त्रितां** मन्त्रेण संस्कृताम्, **रक्षाभूतिरेखां** रक्षार्थभस्मरेखाम्, **निधत्त** स्थापयत, रचयतेत्यर्थः, **इत्यादि** इत्याद्यादेशवाक्यम् । पुनः कीदृशेन शुद्धान्तजरतीजनेन ? **तल्पनिकटोपविष्टेन** जातकशय्यासमीपोपविष्टेन । पुनः कीदृशं प्रसूतिकागृहम् ? **अविरतचलत्तालवृन्तनिर्वाप्यमाणसनागरक्षोदपानोदकशरावम्** अविरतं-निरन्तरम्, चलद्भिः उत्पतद्भिः, तालवृन्तैः-तालव्यजनैः, निर्वाप्यमाणाः-शीतलतामापाद्यमानाः, सनागरक्षोदाः शुण्ठीचूर्णसहिताः, पानोदकशरावाः-पेयजलाधारमृत्पात्रविशेषा यस्मिंस्तादृशम् । पुनः **मङ्गलप्रदीपैः** मङ्गलार्थप्रकल्पितप्रदीपैः, **प्रकाशिताभ्यन्तरं** प्रकाशितम्-उद्भासितम्, अभ्यन्तरं-मध्यं यस्य तादृशम् । कीदृशैः ? **अधिकोदञ्चितात्मभिः** अधिकम्-अत्यन्तं यथा स्यात् तथा, उदञ्चितः-उद्वेलितः, आत्मा-स्वरूपं येषां तादृशैः, पुनः **अचञ्चलावस्थानैः** निश्चेष्टं सन्तिष्ठमानैः, अत एव **उत्थाय** उद्बुध्य, **विस्मितैरिव** सञ्जाताश्चर्यैरिवेत्युत्प्रेक्षा, **त्रिभुवनातिशायिशोभं** त्रिभुवनातिशायिनी-भुवनत्रयोत्कृष्टा, शोभा यस्य तादृशम्, **अर्भकरूपं** जातकस्वरूपम्, **अवलोकयद्भिः** पश्यद्भिः । पुनः कीदृशम् ? **अदूरस्थितात्मव्यापारसत्वरसूतिकम्** अदूरे-समीपे स्थिताः, आत्मव्यापारे-प्रसवसम्बन्धिस्वकार्ये, सत्वरा-ससम्भ्रमा, सूतिका-कृतप्रसवा यस्मिंस्तादृशम् [ भ ] ।

**स** पुनः, **सतर्षं** साभिलाषम्, **प्रविश्य** अन्तः प्रवेशं कृत्वा, **उद्भूतप्रहर्षस्मितः** उद्भूतम्-उत्पन्नम्, प्रहर्षेण-अतिहर्षेण, स्मितं-मन्दहासो यस्य तादृशः, यद्वा उद्भूतेन प्रहर्षेण स्मितः-मन्दं हसितः सन्, **विस्मयस्तिमितपक्ष्मणा** विस्मयेन-आश्चर्येण, स्तिमिते-निःस्पन्दे, पक्ष्मणी-नेत्रोपरितनरोमलेखे यस्य तादृशेन, **लोचनयुगेन** नयनद्वयेन, **स्फुटविभाव्यमानसकलचक्रवर्तिलक्षणाम्** स्फुटं यथा स्यात् तथा, विभाव्यमानानि-प्रतीयमानानि, सकलानि-समस्तानि, चक्रवर्तिनां-षट्खण्डाधिपानाम्, लक्षणानि-जातकीयहस्तादिगतचक्रादिचिह्नानि यस्यां तादृशीम्, **शस्यां** प्रशंसनीयाम्, **सूनोः** सुतस्य, **त्रिभुवनविलक्षणां** भुवनत्रयादुत्कृष्टाम्, **अवयवश्रियम्** अङ्गशोभाम्, **प्रतिक्षणं** क्षणे क्षणे, **अवलोक्य** निरीक्ष्य, **अमन्दनिर्गतानन्दाश्रुबिन्दुः** अमन्दं यथा स्यात् तथा, निर्गताः-नयनाभ्यां निःसृताः, आनन्दाश्रुबिन्दवः-

निवर्तिताम्नप्राशनादिसकलसंस्कारस्य समाहृतसमग्रमङ्गलोपकरणाभिरन्तःपुरवृद्धाभिस्त्रिसंध्यामारभ्यमाणावतारणकक्रियस्य सर्वायुर्वेदपारगैर्भिषग्भिर्मन्त्रसिद्धिलब्धप्रसिद्धिभिश्च महानरेन्द्रैरतन्द्रितैर्मुहुर्मुहुः प्रतिजागर्यमाणस्य प्रकटितसंभ्रमाभिरन्तःपुरिकाभिराहूयाहूय गाढमाश्लिष्यमाणस्य स्थानस्थानारोपितमहाप्रभावानेकमणिभिः प्रधानभूषणैः प्रसाधितललितसर्वाङ्गस्य धृतायुधान्तर्वंशिकव्रातसततानुगम्यमानमार्गस्य स्वभावरम्येषु मणिकुट्टिमेषु क्रीडाशैलकटकेषु नन्दनवनप्रासादकेषु कृत्रिमापगापुलिनेषु च कपोलदोलायमानकमनीयकाकपक्षैः क्षितिपालदारकैः सह क्रीडासुखमनेकप्रकारमनुभवतो निरङ्कुशप्रचारस्य पञ्च वर्षाणि तस्यान्तःपुरेऽतिचक्रमुः [ल] ॥

अवतीर्णे च षष्ठे किञ्चिदुपजातदेहसौष्ठवस्य व्यक्तवर्णवचनप्रवृत्तेर्विनयारोपणाय राजा राजकुलाभ्यन्तर एव कारितानवद्यविद्यागृहः सम्यगासेवितगुरुकुलानामवगताखिलशास्त्रमर्मनिर्मलोक्तियुक्तीनामुत्तमान्वयलब्ध-

---

वर्धमाना, अवयवकान्ति –अङ्गशोभा यस्य तादृशस्य । पुन **अखिलवेदोक्तविधिविदा** वैदिकाशेषविधानाभिज्ञेन, **अपरेण** द्वितीयेन, **वेधसा** ब्रह्मणेवेत्युत्प्रेक्षा, **पुरोधसा** पुरोहितेन, **स्वयम्** आत्मना, **निवर्त्तितान्नप्राशनादिसंस्कारस्य** निवर्त्तिता –निष्पादिता , अन्नप्राशनादय संस्कारा यस्य तादृशस्य । पुन **समाहृतसकलमङ्गलोपकरणाभिः** समाहृतानि–संगृहीतानि, सकलानि सर्वाणि, मङ्गलोपकरणानि–मङ्गलसाधनवस्तूनि याभिस्तादृशीभि , **अन्तःपुरवृद्धाभिः** अन्त –पुरस्थवृद्धस्त्रीभि , **त्रिसन्ध्यं** प्रातर्मध्याह्नसायरूपासु तिसृषु सन्ध्यासु **आरभ्यमाणावतारणकक्रियस्य** आरभ्यमाणा–अनुष्ठीयमाना अवतारणकक्रिया–लवणाद्यवतारणात्मकमाङ्गलिकक्रियाविशेषो यस्य तादृशस्य पुन **सर्वायुर्वेदपारगैः** सर्व –समग्र , य आयुर्वेद. वेदोपाङ्गभूतं चिकित्साशास्त्रम् , तत्पारगै –तदन्तगै , **मन्त्रसिद्धिलब्धप्रसिद्धिभिश्च** मन्त्रसिद्ध्या लब्धा–प्राप्ता, प्रसिद्धि –लोके ख्यातिर्यैस्तादृशैश्च, **अतन्द्रितैः** अनलसै , **महानरेन्द्रैः** महामन्त्रवादिभि , विशिष्टनृपैश्च, **मुहुर्मुहुः** पुन. पुन , **प्रतिजागर्यमाणस्य** प्रतिक्रियमाणस्य । पुन **प्रकटितसम्भ्रमाभिः** प्रकटित –प्रदर्शित , सम्भ्रम –वात्सल्यातिशयजन्यमौत्सुक्य याभिस्तादृशीभि., **अन्तःपुरिकाभिः** अन्त पुरस्त्रीभि , **आहूयाहूय** पुन पुनराहूय, **गाढम्** अत्यन्तम्, **आश्लिष्यमाणस्य** आलिङ्ग्यमानस्य, पुन **स्थानस्थानारोपितमहाप्रभानेकमणिभिः** स्थाने स्थाने–तत्तदङ्गे आरोपिता निवेशिता , महाप्रभा.–उत्कृष्टप्रभाशालिन , अनेके मणयो येषु तादृशै , **प्रधानभूषणैः** उत्तमालङ्करणै , **प्रसाधितललितसर्वाङ्गस्य** प्रसाधितानि–अलङ्कृतानि, ललितानि–मनोहरणानि सर्वाणि समस्तानि, अङ्गानि–हस्तपादादीनि यस्य तादृशस्य । पुन **धृतायुधान्तर्वंशिकव्रातसततानुगम्यमानमार्गस्य** धृता –तद्रक्षार्थं गृहीता , आयुधा –बाणा यैस्तादृशा ये अन्तर्वंशिका अन्त पुररक्षका कुब्ज-वामनादय , तेषां व्रातेन–समूहेन, सतत-सर्वदा, अनुगम्यमान –अनुस्रियमाण , मार्गो यस्य तादृशस्य । पुन **स्वभावरम्येषु** स्वभावतो मनोहरेषु, **मणिकुट्टिमेषु** मणिबद्धभूमिषु, **क्रीडाशैलकटकेषु** क्रीडार्थे ये शैला –पर्वता , तत्कटकेषु–तन्नितम्बोपरि, **नन्दनवनप्रासादकेषु** नन्दनवनं नाम–मेरुपर्वतोपरितनमिन्द्रवनम्, तत्सदृशं यद् वनम्, तत्रत्या प्रासादा –राजगृहा एव प्रासादकास्तेषु, यद्वा नन्दयति–आनन्दयतीति नन्दन यद् वन तत्रत्यप्रासादेषु, **प्रसादकेष्वि**ति पाठकल्पे तु नन्दनवनवत्प्रसादजनका ये क्रीडाशैलकटकास्तेष्विति विशेषणवधया व्याख्येयम् । **च** पुन , **कृत्रिमापगापुलिनेषु** कृत्रिमा –क्रियया निर्वृत्ता , क्रीडार्थमुत्खाता इत्यर्थ , या आपगा–नद्य , तत्पुलिनेषु–तदीयसैकतप्रदेशेषु, **कपोलदोलायमानकमनीयकाकपक्षैः** कपोलेषु–गण्डस्थलेषु, दोलायमाना –इतस्ततश्चलन्त , कमनीया मनोहरा ,काकपक्षा –मस्तकाभयपार्श्वलम्बमाना "बालानां तु शिखा प्रोक्ता काकपक्ष " इत्युक्तबालककेशपाशा येषां तादृशै , **क्षितिपालदारकैः** राजशिशुभि सह, **अनेकप्रकारं** बहुविधम्, **क्रीडासुखं** क्रीडाजन्यमानन्दम्, **अनुभवतः** अनुभवगोचरीकुर्वाणस्य । पुन **निरङ्कुशप्रचारस्य** निर्बाधगमनस्य, स्वेच्छाचारिण इत्यर्थ [ल]।

**च** पुन , **षष्ठे** षष्ठवर्षे **अवतीर्णे** प्रारब्धे सति, **किञ्चिदुपजातदेहसौष्ठवस्य** किञ्चिदुपजातम्–ईषदुत्पन्नम् , देहसौष्ठव–शरीरसौन्दर्यं यस्य तादृशस्य, पुन **व्यक्तवर्णवचनप्रवृत्तेः** व्यक्तानां–स्फुटानाम्, वर्णानाम्, वचने-प्रतिपादने, प्रवृत्तिर्यस्य तादृशस्य तस्य बालकस्य, **विनयारोपणाय** विनयशिक्षणाय, **राजा** मेघवाहन , **राजकुलाभ्यन्तर एव** राजधानीमध्य एव, **कारितानवद्यविद्यागृहः** कारित–निर्मापितम्, अनवद्य–मनोहरम्, विद्यागृहं–विद्याध्ययनगृहं येन तादृश सन्, **अहरहः** प्रतिदिनम्, **विद्यागुरूणां** विद्याध्यापकानाम्, **संग्रहं** सञ्चयम्, **अकरोत** कृतवान् । कीदृशानाम् ? **सम्य**

निवर्तिताम्नप्राशनादिसकलसंस्कारस्य समाहृतसमग्रमङ्गलोपकरणाभिरन्तःपुरवृद्धाभिस्त्रिसंध्यामारभ्यमाणावतारणकक्रियस्य सर्वायुर्वेदपारगैर्भिषग्भिर्मन्त्रसिद्धिलब्धप्रसिद्धिभिश्च महानरेन्द्रैरतन्द्रितैर्मुहुर्मुहुः प्रतिजागर्यमाणस्य प्रकटितसंभ्रमाभिरन्तःपुरिकाभिराहूयाहूय गाढमाश्लिष्यमाणस्य स्थानस्थानारोपितमहाप्रभावानेकमणिभिः प्रधानभूषणैः प्रसाधितललितसर्वाङ्गस्य धृतायुधान्तर्वंशिकव्रातसततानुगम्यमानमार्गस्य स्वभावरम्येषु मणिकुट्टिमेषु क्रीडाशैलकटकेषु नन्दनवनप्रासादकेषु कृत्रिमापगापुलिनेषु च कपोलदोलायमानकमनीयकाकपक्षैः क्षितिपालदारकैः सह क्रीडासुखमनेकप्रकारमनुभवतो निरङ्कुशप्रचारस्य पञ्च वर्षाणि तस्यान्तःपुरेऽतिचक्रमुः [ल]॥

अवतीर्णे च षष्ठे किञ्चिदुपजातदेहसौष्ठवस्य व्यक्तवर्णवचनप्रवृत्तेर्विनयारोपणाय राजा राजकुलाभ्यन्तर एव कारितानवद्यविद्यागृहः सम्यगासेवितगुरुकुलानामवगताखिलशास्त्रमर्मनिर्मलोक्तियुक्तीनामुत्तमाम्नायलब्ध-

---

वर्धमाना, अवयवकान्ति –अङ्गशोभा यस्य तादृशस्य। पुन अखिलवेदोक्तविधिविदा वैदिकाशेषविधानाभिज्ञेन, अपरेण द्वितीयेन, वेधसा ब्रह्मणेवेत्युत्प्रेक्षा, पुरोधसा पुरोहितेन, स्वयम् आत्मना, निवर्त्तिताम्नप्राशनादिसंस्कारस्य निवर्त्तिता –निष्पादिता, अन्नप्राशनादय संस्कारा यस्य तादृशस्य। पुन समाहृतसकलमङ्गलोपकरणाभिः समाहृतानि–सगृहीतानि, मङ्गलानि सर्वाणि, मङ्गलोपकरणानि–मङ्गलसाधनवस्तूनि याभिस्तादृशीभि, अन्तःपुरवृद्धाभिः अन्त –पुरस्थवृद्धस्त्रीभि, त्रिसन्ध्यं प्रातर्मध्याह्नसायरूपासु तिसृषु सन्ध्यासु आरभ्यमाणावतारणकक्रियस्य आरभ्यमाणा–अनुष्ठीयमाना अवतारणकक्रिया–लवणाद्यवतारणात्मकमाङ्गलिकक्रियाविशेषो यस्य तादृशस्य पुन सर्वायुर्वेदपारगैः सर्व –समग्र, य आयुर्वेद वेदोपाङ्गभूतं चिकित्साशास्त्रम्, तत्पारगै –तदन्तगै, मन्त्रसिद्धिलब्धप्रसिद्धिभिश्च मन्त्रसिद्ध्या लब्धा–प्राप्ता, प्रसिद्धि –लोके ख्यातिर्यैस्तादृशैश्च, अतन्द्रितैः अनलसै, महानरेन्द्रैः महामन्त्रवादिभि, विशिष्टनृपैश्च, मुहुर्मुहुः पुन. पुन, प्रतिजागर्यमाणस्य प्रतिक्रियमाणस्य। पुन प्रकटितसम्भ्रमाभिः प्रकटित –प्रदर्शित, सम्भ्रम –वात्सल्यातिशयजन्यमौत्सुक्य याभिस्तादृशीभि, अन्तःपुरिकाभिः अन्त पुरस्त्रीभि, आहूयाहूय पुन पुनराहूय, गाढम् अत्यन्तम्, आश्लिष्यमाणस्य आलिङ्ग्यमानस्य, पुन स्थानस्थानारोपितमहाप्रभानेकमणिभिः स्थाने स्थाने–तत्तद्देशे आरोपिता निवेशिता, महाप्रभा –उत्कृष्टप्रभाशालिन, अनेके मणयो येषु तादृशै, प्रधानभूषणैः उत्तमालङ्करणै, प्रसाधितललितसर्वाङ्गस्य प्रसाधितानि–अलङ्कृतानि, ललितानि–मनोहराणि सर्वाणि समस्तानि, अङ्गानि–हस्तपादादीनि यस्य तादृशस्य। पुन धृतायुधान्तर्वंशिकव्रातसततानुगम्यमानमार्गस्य धृता –तद्रक्षार्थं गृहीता, आयुधा –बाणा यैस्तादृशा ये अन्तर्वंशिका –अन्त पुररक्षका कुब्ज-वामनादय, तेषां व्रातेन–समूहेन, सतत- सर्वदा, अनुगम्यमान –अनुस्रियमाण, मार्गो यस्य तादृशस्य। पुन स्वभावरम्येषु स्वभावतो मनोहरेषु, मणिकुट्टिमेषु मणिबद्धभूमिषु, क्रीडाशैलकटकेषु क्रीडार्थं ये शैला –पर्वता, तत्कटकेषु–तन्नितम्बोपरि, नन्दनवनप्रासादकेषु नन्दनवनं नाम–मेरुपर्वतोपरितनमिन्द्रवनम्, तत्सदृश यद् वनम्, तत्रत्या प्रासादा –राजगृहा एव प्रासादकास्तेषु, यद्वा नन्दयति–आनन्दयतीति नन्दन यद् वन तत्रत्यप्रासादेषु, प्रसादकेष्विति पाठकल्पे तु नन्दनवनवत्प्रसादजनका ये क्रीडाशैलकटकास्तेष्विति विशेषणत्वधया व्याख्येयम्। च पुन, कृत्रिमापगापुलिनेषु कृत्रिमा –क्रियया निर्वृत्ता, क्रीडार्थमुत्खाता इत्यर्थ, या आपगा –नद्य, तत्पुलिनेषु–तदीयसैकतप्रदेशेषु, कपोलदोलायमानकमनीयकाकपक्षैः कपोलेषु–गण्डस्थलेषु, दोलायमाना –इतस्ततश्चलन्त, कमनीया मनोहरा, काकपक्षा –मस्तकाभयपार्श्वलम्बमाना "बालाना तु शिखा प्रोक्ता काकपक्ष" इत्युक्तबालककेशपाशा येषा तादृशै, क्षितिपालदारकैः राजशिशुभि सह, अनेकप्रकारं बहुविधम्, क्रीडासुखं क्रीडाजन्यमानन्दम्, अनुभवत. अनुभवगोचरीकुर्वाणस्य। पुन निरङ्कुशप्रचारस्य निर्बाधगमनस्य, स्वेच्छाचारिण इत्यर्थ [ल]। च पुन, षष्ठे षष्ठवर्षे अवतीर्णे प्रारब्धे सति, किञ्चिदुपजातदेहसौष्ठवस्य किञ्चिदुपजातम्–ईषदुत्पन्नम्, देहसौष्ठव–शरीरसौन्दर्यं यस्य तादृशस्य, पुन व्यक्तवर्णवचनप्रवृत्ते. व्यक्तानां–स्फुटानाम्, वर्णानाम्, वचने-प्रतिपादने, प्रवृत्तिर्यस्य तादृशस्य तस्य बालकस्य, विनयारोपणाय विनयशिक्षणाय, राजा मेघवाहन, राजकुलाभ्यन्तर एव राजधानीमध्य एव, कारितानवद्यविद्यागृहः कारितं–निर्मापितम्, अनवद्य–मनोहरम्, विद्यागृहं–विद्याध्ययनगृहं यन तादृश सन्, अहरहः प्रतिदिनम्, विद्यागुरूणां विद्याध्यापकानाम्, सग्रहं सञ्चयम्, अकरोत् कृतवान्। कीदृशानाम्? सम्य

विवेद, विशेषतश्चित्रकर्मणि वीणावाद्ये च प्रवीणतां प्राप [ ह ] । भुजबलं चास्य विस्मापितसुरासुरं केसरिकिशोरस्येव सहजं शारीरमभवत्, आरब्धकार्यस्य त्रिभुवनेऽप्यशक्यमविजेयमसाध्यं च किमपि न प्रायेणाभूत् [ क्ष ] । एवं च परिणताशेषशास्त्रमासादितसकलास्त्रविद्यापारमुपलब्धसर्वबुधजनसाधुवादमारूढनवतारुण्यलक्ष्मीलब्धपरिपूर्णसर्वावयवशोभमनुमोदितविद्यागुरुजनेन हरिवाहनमतिक्रान्ते षोडशे वर्षे हर्षनिर्भरो राजा विसर्जितैराकारणाय सादरमुदाराकारवेषैः प्रधानपुरुषैरनुगम्यमानमतिभूयसा विभवेन स्वभवनमानिनाय [ ज्ञ ] ॥

निवर्तिताखिलगृहप्रवेशमङ्गलश्चास्य नगरबाह्यायामलघुवप्रालङ्कृतप्राकारलङ्घिताभ्रमदभ्रतोरणस्तम्भमुभयतो निखातशातकुम्भपूर्णकुम्भोद्भासितद्वारदेशमनेकगजतुरङ्गशालाभिरामं कुमारभवनमकारयत् [ अ ] । कर्तुकामश्च यौवराज्याभिषेकं तस्य साहाय्यकार्थमाज्ञाभरसहं प्रज्ञया पराक्रमेणाकारेण विनयेन वचनविन्यासेनोद्यमेना-

---

विदितवान् । च पुनः, **विशेषतः** विशेषेण, **चित्रकर्मणि** चित्रणकलायाम्, **च** पुन, **वीणावाद्ये** वीणारूपवाद्यवादनकलायाम्, **प्रवीणतां** कुशलताम्, **प्राप** प्राप्तवान् [ह] । च पुन, **अस्य** राजपुत्रस्य **भुजबलं** बाहुबलम्, **विस्मापितसुरासुरं** विस्मापिता - विस्मयमापादिता, सुरा - देवा असुरा - राक्षसाश्च येन तादृशम्, अभवत्, किमिव ? **केसरिकिशोरस्य** सिंहशिशो **सहजं** स्वाभाविकम्, **शारीरं** शरीरसम्बन्धि, बलमिव । **आरब्धकार्यस्य** प्रारब्धव्यापारस्य तस्य कुमारस्य, **त्रिभुवनेऽपि** लोकत्रयेऽपि, किमपि **अशक्यं** शक्त्यसाध्यम्, **अविजेयं** विजेतुमशक्यम्, **असाध्यं** साधयितुमशक्यं च, **प्रायेण** बाहुल्येन, न, **अभूत्** आसीत् [ क्ष ] । **एवम्** अनेन प्रकारेण षोडशे वर्षे **अतिक्रान्ते** व्यतीते सति, **हर्षनिर्भरः** आनन्दपूर्णः, **राजा** मेघवाहन, **अतिभूयसा** अत्यधिकेन, **विभवेन** वित्तसाध्योत्सवेन, **हरिवाहनं** तन्नामकं स्वकुमारम्, **स्वभवनं** स्वगृहम्, **आनिनाय** आनीतवान् । कीदृशम् ? **परिणताशेषशास्त्रं** परिणतानि - परिपक्वानि, दृढमभ्यस्तीकृतानीति यावत्, अशेषाणि - समस्तानि, शास्त्राणि - ग्रन्था यस्य तादृशम्, पुन **आसादितसकलास्त्रविद्यापारम्** आसादित - प्राप्त, सकलायाः - समग्रायाः, अस्त्रविद्यायाः - बाणविद्यायाः, पार - अन्तो येन तादृशम्, पुन **उपलब्धसर्वबुधजनसाधुवादम्** उपलब्ध - प्राप्त, सर्वेषां बुधजनानां - विद्वज्जनानाम्, साधुवाद - 'अयं कुमारः साधुः, विद्यावतामुत्तमः' इत्याकारकः प्रशंसावादो येन तादृशम्, पुन **आरूढनवतारुण्यलक्ष्मीलब्धपरिपूर्णसर्वावयवशोभम्** आरूढया - आपन्नया, नवतारुण्यलक्ष्म्या - नवयौवनसंपदा, लब्धा - प्राप्ता, सर्वेषामवयवानाम् - अङ्गानाम्, शोभा - सौन्दर्यं येन तादृशम्, पुन विद्यागुरुजनेन, **अनुमोदितं** गृहं गन्तुमनुमतम्, पुनः **आकारणाय** तस्याह्वानाय, **सादरम्** आदरपूर्वकम्, **विसर्जितैः** प्रेषितैः, **उदाराकारवेषैः** समृद्धाकारवेषशालिभिः, **प्रधानपुरुषैः** मन्त्रिजनैः, **अनुगम्यमानम्** अनुस्रियमाणम् [ ज्ञ ] ।

**अस्य** हरिवाहनस्य, **निवर्तिताखिलगृहप्रवेशमङ्गलः** निवर्तितं - सम्पादितम्, अखिलं - समग्रम्, गृहप्रवेशाय - कुमारस्य गृहाद्गृहान्तरागमनाय, मङ्गलं - माङ्गलिकमनुष्ठानं येन तादृशः, राजेति शेषः, **नगरबाह्यायां** नगराद्बहिर्भूतायां भूमौ, **कुमारभवनं** कुमारप्रासादम्, **अकारयत्** निरमापयत् । कीदृशम् ? **अलघुवप्रालङ्कृतप्राकारलङ्घिताभ्रमदभ्रतोरणस्तम्भम्** अलघुना - महता, वप्रालङ्कृतेन - परिखोद्धृतमृत्तिकास्तूपभूषितेन, प्राकारेण, लाङ्घतानि - अधःकृतानि, आभ्रमन्ति - समन्तादितस्ततश्चलन्ति, अभ्राणि - मेघा एव तोरणस्तम्भा - द्वारस्तम्भा यस्य तादृशम्, मेघादप्युन्नतमित्यर्थः, यद्वा अलघुवप्रालङ्कृतेन प्राकारेण लङ्घितानि अभ्राणि मेघा येन तादृशम्, पुन अदभ्रतोरणस्तम्भम् - अनल्पद्वारस्तम्भम्, पुन **उभयतः** पार्श्वद्वये, **निखातशातकुम्भपूर्णकुम्भोद्भासितद्वारदेशं** निखाता - निखननेन निवेशिताः, ये शातकुम्भस्य - सुवर्णस्य पूर्णकुम्भा - पूर्णकलसाः, तैरुद्भासित - उद्दीपितः द्वारदेशो यस्य तादृशम्, पुन **अनेकगजतुरङ्गशालाभिरामम्** अनेकेषां - बहूनाम्, गजानां - हस्तिनाम्, तुरङ्गाणाम् - अश्वानां च, शालाभिः - गृहैः, अभिरामं - मनोहरम् [ अ ] । **च** पुन, **तस्य** कुमारस्य, **यौवराज्याभिषेकं** युवराजत्वाभिषेकविधिम्, **कर्तुकामः** चिकीर्षुः, **साहाय्यकार्थं** तत्साहाय्यार्थम्, **आदरप्रेषितैः** आदरेण प्रस्थापितैः, **प्रणिधिपुरुषैः** अनुचरजनैः, **उर्वीपतिकुमारं** कमपि राजकुमारम्, **अनिशं** सततम्, **अन्वियेष** अन्विष्यति स्म । कीदृशम् ? **आज्ञाभरसहम्** तदाज्ञापालनभारक्षमम्, **प्रज्ञया** विवेकेन, **पराक्रमेण** सामर्थ्येन, **आकारेण** आकृत्या, **विनयेन** प्रभुभक्तिनम्रतया, **वचनविन्यासेन** वाक्यरचनाचातुर्येण, **उद्यमेन** उद्योगेन,

गतप्रीतिः 'प्रवेशय' इति तां सादरमवदत् [ ई ]। अथ पार्थिववचनानन्तरमेव सा 'यदाज्ञापयति देवः' इत्युक्त्वा सत्वरमास्थानमण्डपान्निर्जगाम [ उ ]। क्षणमात्रनिर्गतायां च तस्यां द्वारदेशप्रहितलोचनो महीपतिः प्रविशन्तमीषत्क्षामवपुषमुपरचितराजदर्शनोचितवेषमचिरस्नातमपि मार्गवातातपप्लुष्टगात्रत्वक्तया मलिनमिवोपलक्ष्यमाणमतिचिरदर्शनादपरिचितमिव परकीयमिवान्यथाभूतमिव राजकुलमाकलयन्तमवनिपालदर्शनोत्सुकतया च संभाषणगोचरागतानिष्टानपि सकृद्दृष्टानिव राजपुंगवानल्पविस्तरमालपन्तमुत्तरीयपटगोपायितोपायनेन पश्चाद्व्रजता पुरुषेणानुगम्यमानं विजयवेगमपश्यत् [ ऊ ]॥

दृष्ट्वा च कृतस्मितो दूरादेव संभ्रमवता संभाषणेनैनमनुजग्राह । सरभसोपसृतं च तं कृतप्रणाममासक्तकुट्टिमरजोधूसरललाटजानुकरपुटमुपविष्टमन्तिकोपनीते सविनयम् आसने प्रीतिप्रसन्नतारकेण चक्षुषा क्षणमात्रमवलोक्य जगाद—'विजयवेग! कुशलमखिलवीरचक्रप्रकाण्डस्य महादण्डाधिपतेः पृथिव्यामप्रतिहतायुधस्य सराजलोकस्य वज्रायुधस्य' [ ऋ ]। स च किञ्चिदुज्झितासनो विनयविरचिताञ्जलिः प्रणम्याब्रवीत्—

---

प्रवेशं कारय, इति, तां द्वारपालिकाम्, सादरम् आदरपूर्वकम्, अवादीत् उक्तवान् [ ई ]। अथ अनन्तरम्, पार्थिववचनानन्तरमेव पार्थिवस्य-राज्ञः, वचनानन्तरमेव—प्रवेशानुमतिप्रतिपादनानन्तरमेव, सा द्वारपालिका, देवः भवान्, यत्, आज्ञापयति आदिशति तत् करोमीति शेषः, इति उक्त्वा कथयित्वा, सत्वरं शीघ्रम्, आस्थानमण्डपात् सभामण्डपात्, निर्जगाम निर्गता [ उ ]। तस्यां द्वारपालिकायाम्, क्षणमात्रनिर्गतायां क्षणमात्रनिष्क्रान्तायां सत्याम्, द्वारदेशप्रहितलोचनः द्वारदेशप्रहितदृष्टिः, महीपतिः मेघवाहनः, विजयवेगं तन्नामानं प्रधानपुरुषम्, अपश्यत् दृष्टवान्। कीदृशम्? प्रविशन्तम् अन्तः प्रवेशमाचरन्तम्, ईषत्क्षामवपुषं किञ्चित्कृशकलेवरम्; पुनः उपरचितराजदर्शनोचितवेषम् उपरचितः—विरचितः, राजदर्शनोचितः—राजदर्शनयोग्यो वेषो येन तादृशम्, पुनः अचिरस्नातमपि सद्यः स्नातमपि, मार्गवातातपप्लुष्टगात्रत्वक्तया मार्गस्य यो वातः—पवनः, आतपः—सूर्यकिरणश्च, ताभ्यां प्लुष्टा—दग्धा, सन्तप्तेति यावत्, गात्रत्वक्—शरीरत्वक् यस्य तद्भावस्तत्ता तया, मलिनमिव उपलक्ष्यमाणं प्रतीयमानम्, पुनः अतिचिरदर्शनात् अतिदीर्घकालोत्तरमवलोकनात्, अपरिचितमिव अजातपरिचयमिव, परकीयमिव अन्यदीयमिव, अन्यथाभूतमिव प्रकारान्तरप्राप्तमिव, राजकुलम्, आकलयन्तम् अवगच्छन्तम्, पुनः अवनिपालदर्शनोत्सुकतया अवनिपालस्य—राज्ञः, यद्दर्शनं तत्रोत्सुकत्वेन हेतुना, सम्भाषणगोचरागतान् प्रतिपाद्यरूपेणागतान्, इष्टान् प्रियान्, अपि, असकृद्दृष्टानपीति यावत्, सकृद्दृष्टानिव एकवारमेवावलोकितानिव, राजपुङ्गवान् नृपश्रेष्ठान्, अल्पविस्तरम् अनतिविस्तरम्, परिमितमिति यावत्, आलपन्तम् आभाषमाणम्, पुनः उत्तरीयपटगोपायितोपायनेन उत्तरीयपटेन—उत्तरीयवस्त्रेण, गोपायितम्—आच्छादितम्, उपायनं—प्राभृतं येन तादृशेन, पश्चाद् व्रजता पुरुषेण, अनुगम्यमानम् अनुस्त्रियमाणम् [ ऊ ]।

दृष्ट्वा च तमवलोक्य च, कृतस्मितः कृतमन्दहासः दूरादेव दूरत एव, सम्भ्रमवता प्रीतिप्रयुक्तत्वराशालिना, सम्भाषणेन आलापेन, एनं विजयवेगम्, अनुजग्राह अनुगृहीतवान्, स राजेति शेषः। सरभसोपसृतं सवेगमन्तिकमागतम् तं विजयवेगम्, प्रीतिप्रसन्नतारकेण प्रीत्या—प्रेम्णा, प्रसन्ना—विकसिता, तारका—कनीनिका यस्य तादृशेन, चक्षुषा नेत्रेण, क्षणमात्रं किञ्चित्कालम्, अवलोक्य, जगाद उक्तवान्। कीदृशं तम्? कृतप्रणामं कृताभिवादनम्; पुनः आसक्तकुट्टिमरजोधूसरललाटजानुकरपुटम् आसक्तेन संलग्नेन कुट्टिमरजसा मणिबद्धभूमिधूलिकया, धूसरा—ईषत्पाण्डुवर्णा, ललाटं भालस्थलम्, जानू—ऊरुजङ्घामध्यभागौ, करपुटः—हस्तपुटश्च यस्य तादृशम्, पुनः अन्तिकोपनीते समीपमानीते, आसने, सविनयं विनयपूर्वकम्, उपविष्टं कृतोपवेशनम्। किं जगादेत्याह—विजयवेग! अखिलवीरचक्रप्रकाण्डस्य समस्तवीरमण्डलप्रशस्तस्य, पुनः महादण्डाधिपतेः महतश्चतुरङ्गसेनाधिनायकस्य, पुनः पृथिव्यां जगति, अप्रतिहतायुधस्य अकुण्ठितबाणस्य, सराजलोकस्य राजजनसहितस्य, वज्रायुधस्य, कुशलं भद्रम्, अस्ति किम्? इति शेषः [ ऋ ]। च पुनः, सः विजयवेगः, किञ्चिदुज्झितासनः किञ्चित्त्यक्तासनः सन्, विनयरचिताञ्जलिः विनय-

'देव ! स कृतो यं न कश्चिदन्यः करोति, आकर्णयतु देवः, इतः समनन्तरातीतवर्षे निवृत्तास्वविरलजलासार-वर्षासु वर्षासु प्रवृत्ते संवर्तितसिन्धुपूरपयसि परिणमत्कलमकपिलायमानकैदारिके बद्धस्तम्बतृणसंबाधग्राम-सीम्नि जनितविजिगीषुपार्थिवजनोत्साहे शरत्समये सेनापतिरर्थशास्त्रपरामर्शपूतमतिभिरमात्यैः सह कृतकार्य-वस्तुनिर्णयः प्रशस्तेऽहनि समस्तबलपरिवृतश्चरणतलमृदितभुजबलावलिप्तारिभूपालशिरःशेखरं कुसुमशेखर-नामानमवनिपालमुन्मूलयितुकामः कुण्डिनपुरात् काञ्चिमण्डलाभिमुखमचलत् [ ऌ ] । क्रमेण चाबद्ध-दृढकक्षाभिराटोपकम्पमानविततकेतुवनराजिभिरभ्यर्थनापदेशस्तम्भितोदयमगस्त्यमुनिमभियोद्धुमुच्चलिताभि-र्विन्ध्यशिखरावलीभिरिव करिघटाभिरन्धकारितैराज्ञाकृष्टानां दुष्टसामन्तानामनीकैरापूर्यमाणकटकविनिवेशः

---

टिप्पनकम्—वर्ष-वृष्टिः । कैदारिकं-केदारसमूह. [ ऌ ] । कक्षा-करिमध्यवस्त्रा, कक्ष.-सतृणप्रदेशः । अपदेश.-व्याजम् । अतियोक्तुं-[ अभियातुं-] गृहीतुम् [ प ] ।

---

**जगाद** उवाच । **देव !** राजन्!, **स** तादृश', उपकार इति शेष , **कृतः** विहित', **यं** यादृशमुपकारम्, **कश्चित्** कोऽपि, **अन्यः** तद्व्यतिरिक्त, न करोति, **देवः** भवान्, **आकर्णयतु** शृणोतु । **इतः** वर्तमानवर्षात्, **समनन्तरातीतवर्षे** अव्यवहितभूतपूर्ववर्षे, परुदित्यर्थ. । **अविरलजलासारवर्षासु** अविरलम्-अविच्छिन्नम्, जलस्य आसारवर्ष-धारासम्पाति वर्षणं यासु तादृशीषु, **वर्षासु** वर्षर्तौ, **निवृत्तासु** व्यतीतासु, पुन **शरत्समये** शरदृतौ, **प्रवृत्ते** प्रारब्धे सति, कीदृशे तस्मिन्? **संवर्तितसिन्धुपूरपयसि** सवर्तित-सकोचितम्, सिन्धुपूरस्य-नदीप्रवाहसम्बन्धि, पयो-जल येन तादृशे, पुन. **परिणमत्कलमकपिलायमानकैदारिके** परिणमद्भि -परिपाकावस्थामापाद्यमानै , कलमै -धान्यविशेषै , कपिलायमान-पिङ्गलायमानम्, कैदारिक-केदारसमूहो यस्मिंस्तादृशे, पुन **बद्धस्तम्बतृणसंबाधग्रामसीम्नि** बद्ध -उद्गृहीत , स्तम्ब -काण्डो यैस्तादृशै., तृणै , सबाधा.-सकीर्णा , ग्रामसीमानो यस्मिंस्तादृशे, पुन. **जनितविजिगीषुपार्थिवजनोत्साहे** जनित -उद्भावित , विजिगीषूणा-विजयेच्छूनाम्, पार्थिवजनाना-नृपजनानाम्, उत्साहो येन तादृशे । **सेनापतिः** वज्रायुध , **अर्थशास्त्रपरामर्शपूतमतिभिः** , अर्थशास्त्रस्य-अर्थनीतिशास्त्रस्य, परामर्शेन-परिशीलनेन, पूता-परिमार्जिता, मति -बुद्धिर्येषां तादृशै , **अमात्यैः** सचिवै , सह, **कृतकार्यवस्तुनिर्णयः** कृत , कार्यवस्तूनां-कर्तव्यवस्तूनाम्, निर्णय.-निश्चयो येन तादृश सन्, **प्रशस्ते** शुभे, **अहनि** दिवसे, **समस्तबलपरिवृतः** समग्रसैन्यपरिवेष्टित सन्, **चरणतलमृदित-भुजबलावलिप्तारिभूपालशिरःशेखर** चरणतलेन-पादाधस्तलेन, मृदिता-मर्दिता, भुजबलावलिप्तानां-बाहुबलगर्विता-नाम्, अरिभूपालानां-शत्रुभूताना राज्ञाम्, शिर शेखरा -शिरोमुकुटा येन तादृशम्, **कुसुमशेखरनामानं** तत्सज्ञकम्, **अवनिपालं** राजानम्, **उन्मूलयितुकामः** उच्छेत्तुमिच्छु , **कुण्डिनपुरात्** कुण्डिनपुराख्यनगरात्, **काञ्चिमण्डलाभि-मुखं** काञ्चिदेशाभिमुखम्, **अचलत्** अगच्छत् । [ ऌ ] । **च** पुन , **क्रमेण** क्रमश , **विन्ध्यशिखरावलीभिरिव** विन्ध्यगिरिशिखरपङ्क्तिभिरिव, **आबद्धदृढकक्षाभिः** आ-समन्तात्, बद्धा , दृढा -प्रबला , कक्षा -बन्धनरज्जवो याभि-स्तादृशीभि , पक्षे आबद्धा -सन्निवेशिता , स्थिता इत्यर्थ., दृढा -सान्द्रा , कक्षा -लता शुष्कतृणपुञ्जा शुष्कवनानि वा यासु तादृशीभि., पुन. **आटोपकम्पमानविततकेतुवनराजिभिः** आटोपेन अतिशयेन, कम्पमाना -व्याधूयमाना , वितता -विस्तृता , केतव -पताका एव, वनराजि -वनपङ्क्ति , पक्षे विततकेतु.-विस्तृतद्युतिर्वनराजिर्यासु तादृशीभि , पुन. **अभ्यर्थ-नापदेशस्तम्भितोदयम्** अभ्यर्थनापदेशेन-प्रार्थनाव्याजेन, स्तम्भित.-निरुद्ध , उदय -वृद्धिर्येन तादृशम्, अगस्त्यमुनिम्, **अभियोद्धुम्** अभि-सर्वतोभावेन, योद्धुम्, **अभियोक्तुमि**ति पाठे अभियातुमित्यर्थः, **उच्चलिताभिः** उत्थिताभि , **करिघटाभिः** हस्तियूथै ; **अन्धकारितैः** कृतान्धकारै , आज्ञया-नियोगेन, आकृष्टानाम्-आहूतानाम्, **दुष्टसामन्तानाम्** दुष्टविषयान्तरवर्तिनृपतीनाम्, **अनीकैः** सैन्यै , **आपूर्यमाणकटकनिवेश.** आपूर्यमाण -व्याप्यमान , कटकनिवेश.-सैन्यावासो येन तादृश , काञ्चिदेशम्, **अविशत्** प्रविष्टवान् । सुरगिरिस्पर्धयोन्नमन्त विन्ध्यगिरिमवलोक्य तेनादित्यगतिप्रति-रोधेन जगतामन्धकारमयत्वभयेन तत्पार्श्वे गत्वा यावदहं न प्रत्यागच्छामि तावत् त्वया न वर्धनीयमिति वरमभ्यर्थ्य गतो, न

सरभसप्रधाविताभिरनीकिनीभिरागत्य विहितोपरोधः पर्यन्तेषु काञ्च्याः स्कन्धावारममुञ्चत् । कृतासारसंरोधश्च प्रावृषेण्यजलधरव्यूह इव पौरलोकानां महन्तमातङ्कमकरोत् । सामन्ताश्च सज्जीकृतसमदसामजघटा विघटनाय दुर्गस्य तेन कृतविसर्गाः क्रमेण निर्जग्मुः [ ओ ] । आविष्कृताटोपदुष्प्रसहैश्च तैः सह प्राकारशिखरवर्तिनः कुसुमशेखरराजलोकस्यान्योऽन्यकृतनिर्भर्त्सनानि समत्सरसुभटसिंहनादबधिरीकृताभ्यर्णवासिजनकर्णरन्ध्राणि नीरन्ध्रपाषाणक्षेपक्षणमात्रस्थलीकृताम्बरतलानि निर्दयप्रहततूर्यरवपर्यासितकातरकरशस्त्राणि यन्त्रविक्षिप्ताग्नितप्ततैलच्छटाविघटमानविकटपदातिगुम्फानि बद्धस्फरतिरोहितपुरुषखन्यमानप्राकारमूलबन्धानि क्रोधदष्टौष्ठवण्ठश्रूयमाणदुर्गस्थवैरिनिष्ठुराक्रोशानि शिरस्थितफरकफारकप्रार्थ्यमानप्राकारखण्डीप्रवेशानि तृणपूल-

---

**टिप्पनकम्—कृतासारसंरोधश्च** आसारः-वेगवद्वृष्टिर्मित्रबलं च [ ओ ] । बद्धस्फुरः-चर्मकटी [ औ ] ।

---

यावत्, **पृतनाधिपोऽपि** सेनापतिरपि, **तस्य** कुसुमशेखरस्य, **तथाविधं** तादृशम्, **समारम्भं** उद्यमम्, **प्रणिधिपुरुषेभ्यः** चरजनेभ्यः, **उपलभ्य** विदित्वा, **अधिकोपजातसंरम्भः** अधिकम्-अत्यन्तम्, उपजात-उत्पन्न, संरम्भः-उत्साहजनितवेगो यस्य तादृश सन्, **सरभसप्रधाविताभिः** सवेग धाविताभि, **अनीकिनीभिः** सेनाभि, आगत्य, **विहितोपरोधः** विहित-कृत, उपरोध-राजधान्या अवरोधो येन तादृश, **काञ्च्याः** काञ्चिनगर्याः, **पर्यन्तेषु** प्रान्तभूमिषु, **स्कन्धावारं** सैन्यावासम्, **अमुञ्चत्** अस्थापयत् । **च** पुन, **प्रावृषेण्यजलधरव्यूह इव** प्रावृषेण्यानां-वर्षाकालिकानाम्, जलधराणा-मेघानाम्, व्यूह-समूह इव, **कृतासारसंरोधः** कृत आसारस्य-धारासम्पातस्य, पक्षे मित्रसैन्यस्य, संरोध-अवरोधो येन तादृश सन्, पौरलोकानां-पुरवासिजनानाम्, **महान्तं** प्रचुरम्, **आतङ्कं** त्रासम्, अकरोत् । **च** पुन, **दुर्गस्य** प्राकारस्य, **विघटनाय** भञ्जनाय, **तेन** सेनापतिना, **कृतविसर्गाः** कृतो विसर्गो-विसर्जनं त्याग इति यावत्, येषां तादृशा, पुन **सज्जीकृतसमदसामजघटाः** सज्जीकृता-सन्नाहिता, समदाना-मत्तानाम्, सामजाना-गजानाम्, घटा-समूहो यैस्तादृशा, **सामन्ताः** स्वविषयान्तर्वर्त्तिनो नृपा, **क्रमेण** पर्यायेण, **निर्जग्मुः** निर्गता, [ ओ ] । **च** पुन, **आविष्कृताटोपदुष्प्रसहैः** आविष्कृतेन-प्रकटितेन, आटोपेन-आडम्बरेण, दुष्प्रसहै-दुर्धर्षै, **तैः** सामन्तै सह, **प्राकारशिखरवर्तिनः** प्राकारोपरिवर्तिन, **कुसुमशेखरराजलोकस्य** कुसुमशेखरराजजनस्य, **प्रतिदिनं** दिने दिने, **आयोधनानि** संग्रामा, **अभवन्** बभूवु । कीदृशानि ? **अन्योऽन्यकृतनिर्भर्त्सनानि** अन्योऽन्य-परस्परम्, कृतं निर्भर्त्सनं-प्रहारो येषु तादृशानि, पुन **समत्सरसुभटसिंहनादबधिरीकृताभ्यर्णवासिजनकर्णरन्ध्राणि—** समत्सराणां-स्पर्धावताम्, सुभटानां-सुयोधानाम्, सिंहनादेन-सिंहस्येव गर्जनेन, बधिरीकृतानि-बधिरत्वमापादितानि, पूरितानीति यावत्, अभ्यर्णवासिना-निकटवासिनाम्, जनानां-लोकानाम्, कर्णरन्ध्राणि-कर्णविवराणि येषु तादृशानि, पुन **नीरन्ध्रपाषाणक्षेपक्षणमात्रस्थलीकृताम्बरतलानि** नीरन्ध्रपाषाणक्षेपेण अनवरतप्रस्तरप्रक्षेपेण, क्षणमात्र क्षणमात्रेण ता, स्थलीकृतं-स्थलत्वमापादितम्, अम्बरतलम्-आकाशतलं येषु तादृशानि, पुन **निर्दयप्रहततूर्यरवपर्यासितकातरकरशस्त्राणि** निर्दयं-दयारहितम्, तीव्रमित्यर्थ, यथा स्यात् तथा, प्रहतानां-ताडितानाम्, तूर्याणां-वाद्यविशेषाणाम्, रवेण ध्वनिना, पर्यासितानि-करात् प्रच्यावितानि, कातराणां-भीरूणाम्, करशस्त्राणि-हस्तस्थितशस्त्राणि येषु तादृशानि, पुन. **यन्त्रविक्षिप्ताग्नितप्ततैलच्छटाविघटमानविकटपदातिगुम्फानि** यन्त्रेण विक्षिप्ता-विकीर्णा या अग्नितप्तस्य तैलस्य छटा-धारास्ताभि, विघटमान-विश्लिष्यमाण, विकटानां-प्रबलानाम्, पदातीनां-पदगामिना सैनिकानाम्, गुम्फ-समूहो येषु तादृशानि, पुन **बद्धस्फरतिरोहितपुरुषखन्यमानप्राकारमूलबन्धानि** बद्धा-शिरसि निहिता, स्फरा-शिरोरक्षकफलका यैस्तादृशै, तिरोहितै-प्रच्छन्नै, पुरुषै-लोकै, खन्यमान-उद्भिद्यमान, प्राकारस्य मूलबन्धो येषु तादृशानि; पुनः **क्रोधदष्टौष्ठवण्ठश्रूयमाणदुर्गस्थवैरिनिष्ठुराक्रोशानि** क्रोधेन दष्टौ-कृतदशनौ, ओष्ठौ येषां तादृशै, वण्ठै-ह्रस्वजनै, श्रूयमाण, दुर्गस्थानां-प्राकारोपरिस्थानाम्, वैरिणाम्, निष्ठुर-कठोर, आक्रोश-स्पर्धाव्यञ्जक शब्दो येषु तादृशानि, पुनः **शिरःस्थितफरकफारकप्रार्थ्यमानप्राकारखण्डीप्रवेशानि** शिरसिस्थिता· फरकाः-शिरोरक्षकफलका

शालाभ्यो निर्गतेषु चिरनिरोधखिन्नतनुषु नियोगिषु, पुरःसरद्वित्रदीपिकेषु व्रजत्सु निजशिविराणि तारतरकरेणुघण्टाक्वणितसूचितेषु सामन्तेषु, आपणिकसंवृतसायंतनपण्यसंततिषु विकटायमानेषु विपणिवीथीचतुष्पथेषु, शिविरपर्यन्तवद्धगुल्मकेषु स्थित्वा स्थित्वा युगपदारटत्सु वाह्यतन्त्रपदातिवृन्देषु, विश्रान्तजनरवनिरङ्कुशप्रसरेष्वितस्ततः श्रूयमाणेष्वापानकमृदङ्गध्वनिषु, शयनमन्दिराङ्गणनिहितशय्यानिषण्णे संनिहितकतिपयप्रणयिनि प्रारब्धमदनजागरस्य जायाजनस्य गीतकान्याकर्णयति परितः परित्यक्तविग्रहकथानिरवग्रहमनसि सेनाधिपे, सहसैव संत्रासितकटकलोकस्त्रासतरलमन्दुरातुरङ्गश्रेणिश्रुतः सत्वरापसृतपृष्ठप्रसुप्ताधोरणानामपहायापहाय पांशुतल्पान्युत्तिष्ठतामिभपतीनां चरणशृङ्खलारणितजरठेन जर्जरीकृतः कण्ठगर्जितेन, गजगर्जितारवश्रवणकुपितानां पञ्जरकेसरिणां सरभसकरास्फालितशलाकाप्रतिनादबृंहितेन वहलीकृतः फूत्कृतेन, प्रतिसैन्यमाहतानां प्रसृत-

---

टिप्पनकम्—गुल्मकं-स्थानकम्। निरवग्रहम्-उच्छृङ्खलम्। मन्दुरा-अश्वशाला। काहलः-भव्यकः।

---

**नियोगिषु** भृत्येषु, **निजनिजकर्मशालाभ्यः** स्वस्वकार्यगृहेभ्यः, **निर्गतेषु** निष्क्रान्तेषु; पुनः **तारतरकरेणुघण्टाक्वणितसूचितेषु** तारतरेण-तीव्रतरेण, करेणूनां-हस्तिनाम्, घण्टाक्वणितेन-घण्टानादेन, सूचितेषु-संकेतितेषु, **सामन्तेषु** स्वविषयान्तर्वर्त्तिनृपेषु, **पुरःसरद्द्वित्रदीपिकेषु** पुरः-अग्रे, सरन्तः-गच्छन्तः, द्वित्राः-द्वौ वा त्रयो वा, दीपिकाः-दीपवाहका येषां तादृशेषु, **निजशिविराणि** स्वसैन्यावासान्, **व्रजत्सु** गच्छत्सु; पुनः **आपणिकसंवृतसायन्तनपण्यसन्ततिषु** आपणिकैः-विक्रेतृभिः, संवृताः-उपसंहृताः, सायन्तनपण्यानां-सायंकाले विक्रयणार्थं प्रस्तुतवस्तूनाम्, सन्ततयः-पङ्क्तयो येषु तादृशेषु, **विपणिवीथीचतुष्पथेषु** विपणिविथीनाम्-आपणमार्गाणाम्, चतुष्पथेषु चतुर्दिगभिमुखमार्गेषु, **विकटायमानेषु** प्रकटायमानेषु, पुनः **शिविरपर्यन्तवद्धगुल्मकेषु** शिविरपर्यन्ते-सैन्यावासप्रान्ते, वद्धगुल्मकेषु-बद्धपङ्क्तिकेषु, **वाह्यतन्त्रपदातिवृन्देषु** वाह्यतन्त्रपदातीनां-वाह्यराष्ट्रियपदगामिनाम्, वृन्देषु-समूहेषु, **स्थित्वा स्थित्वा मुहुर्मुहुः** स्वगमनमवरुध्य, **युगपत्** सहैव, **आरटत्सु** शब्दायमानेषु, पुनः **विश्रान्तजनरवनिरङ्कुशप्रसरेषु** विश्रान्तः-निवृत्तो यो जनरवः-लोकशब्दस्तेन निरङ्कुशप्रसरेषु-अप्रतिबद्धप्रचारेषु, **आपानशालामृदङ्गध्वनिषु** आपानशालायाः-मद्यपानसभायाः, मृदङ्गध्वनिषु-वाद्यमानमृदङ्गनादेषु, **इतस्ततः** अभितः, श्रूयमाणेषु, पुनः **शयनमन्दिराङ्गणनिहितशय्यानिषण्णे** शयनमन्दिराङ्गणे-शयनभवनप्राङ्गणे, निहितायां स्थापितायाम्, शय्यायां निषण्णे-उपविष्टे, **सन्निहितकतिपयप्रणयिनि** समीपस्थकतिपयस्नेहास्पदजने, **प्रारब्धमदनजागरस्य** प्रारब्धा मदनजागरा-कामदेवोद्देश्यकजागरणं येन तादृशस्य, **जायाजनस्य** स्त्रीजनस्य, **गीतकानि** गानानि, **आकर्णयति** शृण्वति सति, पुनः **परितः** सर्वतः, **परित्यक्तविग्रहकथानिरवग्रहमनसि** परित्यक्ता-निवारिता या, विग्रहकथा-युद्धवार्ता, तया निरवग्रहं-प्रतिवन्धरहितमुच्छृङ्खलमिति यावत्, मनो यस्य तादृशे, **सेनाधिपे** सेनापतौ सति, **महान्** गम्भीरः, **कलकलारवः** कोलाहलध्वनिः, **उद्भूत्** प्रादुरभूत्। कीदृशः ? **सहसा** शीघ्रम्, **संत्रासितकटकलोकः** भीषितसैन्यजनः, पुनः **त्रासतरलमन्दुरातुरङ्गश्रेणिश्रुतः** त्रासेन-भयेन, तरला-चञ्चला या, मन्दुरायाः-अश्वशालायाः, तुरङ्गश्रेणिः-अश्वपङ्क्तिः, तया श्रुतः-श्रवणगोचरीकृतः, पुनः **सत्वरापसृतपृष्ठप्रसुप्ताधोरणानां** सत्वरं-शीघ्रम्, अपसृताः-दूरीभूताः, पृष्ठप्रसुप्ताः-पृष्ठभागमधिशयिताः, आधोरणाः-हस्तिपका येषां तादृशानाम्, पुनः **प्रांशुतल्पानि** उन्नतशय्याः, **अपहाय अपहाय** त्यक्त्वा त्यक्त्वा, **उत्तिष्ठताम्** उत्थानं कुर्वताम्, **इभपतीनां** महागजानाम्, **चरणशृङ्खलारणितजरठेन** चरणशृङ्खलायाः-चरणबन्धनविशेषस्य, रणितेन-शब्देन, जरठेन-वृद्धेन, **कण्ठगर्जितेन** कण्ठकृतगर्जनेन, **जर्जरीकृतः** मिश्रितः, पुनः **गजगर्जितारवश्रवणकुपितानां** गजानां-हस्तिनाम्, यद् गर्जितं-गर्जनम्, तद्रूपस्य आरवस्य-शब्दस्य, श्रवणेन, कुपितानाम्-ईर्ष्यितानाम्, **पञ्जरकेसरिणां** पञ्जरबद्धसिंहानाम्, **सरभसकरास्फालितशलाकाप्रतिनादबृंहितेन** सरभसं-सवेगं यथा स्यात् तथा, कराभ्याम्-अग्रिमपादाभ्याम्, आस्फालिताः-आहता याः, शलाकाः-पञ्जरस्थलौहयष्टयः, तासां प्रतिनादेन-प्रतिध्वनिना, बृंहितेन-वर्धितेन, **फूत्कृतेन** फूत्कारेण, **बहलीकृतः**-वर्धितः, पुनः **प्रतिसैन्यं** प्रतिसेनासम्भवेन, **आहतानां** नादितानाम्, **सन्नाहपटहानां** युद्धार्थंकवचपरिधानद्योतकवाद्यविशेषाणाम्, **प्रसृततारतरकाहलाक्वणितकाहलेन** प्रसृतेन-प्रवृद्धेन, तारतरेण-अतितीव्रेण,

पुरःप्रवर्तितैः पादैराकम्पितक्षितिराक्षेपदूरोच्छलितहारविप्रकीर्णेन नीहारनिकरस्पर्द्धिना किरणविसरेण संवर्द्धयन्निवारातिसैन्यसंदर्शनाय चन्द्रातपमनुमार्गप्रधावितेन संभ्रमस्खलितगतिना वीरलोकेन गमनवेगानिलाकृष्टेनेवानुसृतगतिरतिजवेन राजकुलान्निरगच्छत् [ अः ] । द्वारदेशावस्थितश्चाग्रतो दत्तदृष्टिरतिवेगादापतन्तावतिशयच्छेकपाटहिकताडितपटहनादपटुतरेण दूरादेव खुरपुटध्वनिना प्रकटीकृतावुरःकपाटघटितातनुतनुत्राणौ तत्क्षणविपाटितकाषायपटार्धान्तपीडितोत्तमाङ्गौ गृहीतनिशितप्रासमुष्टिना वामेन किञ्चिदुत्क्षिप्तवल्गौ दक्षिणेन च करतलेन त्रासतरलिताक्षतुरगतिर्यगवलोकितोत्क्षेपां कशामुद्वहन्तावश्वदर्शनसरभसप्रधावितैः शिविरवेसरैरिव धूसरैः खुररजोभिः पश्चादनुगम्यमानावनवरतदोलायमानजङ्घाकाण्डतया तुरगपृष्ठवर्तिनावपि धावन्ताविवोपलक्ष्यमाणावासन्नवर्तिना शिविरलोकेन किं किमेतदिति संभ्रान्तेन पृच्छ्यमानौ मनोरथाविव मनसो जीवाविव जवस्य चारकाविव वायोरुत्सेकाविवौत्सुक्यस्य विगतपर्याणतुरङ्गमाधिरूढौ **काचरक-काण्डरात-**

---

**टिप्पनकम्**—सम्भ्रमश्च-आकुलता [ अः ] । प्रासः-सेल्ल. [ क ] ।

---

अभिमुखम्-अग्रे, प्रकटिता-आविर्भूता, असियष्टि-कृपाणदण्डो यस्यां तादृशीम्, **आत्मच्छायां** स्वच्छायाम्, **अभिहन्तुमिव** अपहर्तुमिव, **पुरःप्रवर्त्तितैः** अग्रे प्रेरितैः, **पादैः** चरणैः, **आकम्पितक्षितिः** ईषत्कम्पितभूतलः, पुन **अरातिसैन्यसन्दर्शनाय** शत्रुसैन्यसमवलोकनाय, **चन्द्रातपं** चन्द्रिकाम्, **आक्षेपदूरोच्छलितहारविप्रकीर्णेन** आक्षेपेण-सञ्चालनेन, दूरोच्छलितात्-दूरमुत्पतितात्, हारात्-रत्नमाल्यात्, विप्रकीर्णेन-प्रसृतेन, पुन **नीहारनिकरस्पर्धिना** हिमौघानुकारिणा, **किरणविसरेण** किरणपुञ्जेन, **संवर्धयन्निव** सम्यग् वर्धयन्निवेत्युत्प्रेक्षा, पुन **अनुमार्गप्रधावितेन** प्रतिमार्गं कृतातिधावनेन, अत एव **गमनवेगानिलाकृष्टेनेव** धावनवेगोत्थितवायुकृताकर्षणेनेव, **सम्भ्रमस्खलितगतिना** वेगस्खलितगमनेन, **वीरलोकेन** सुभटजनेन, **अनुसृतगतिः** अनुसृतगमन [ अः ] । **च** पुन, **द्वारदेशावस्थित** द्वारदेशे कृतावस्थितिक सन्, **अग्रतः** अग्रे, **दत्तदृष्टिः** व्यापारितनयन, **प्रज्ञाततमौ** अतिपरिचितौ, काचरक—काण्डरातनामानौ, **अश्ववारौ** अश्वारोहिणौ, **अद्राक्षीत्** दृष्टवान्, स सेनापतिरिति शेष । कीदृशौ तौ ? **अतिवेगात्** अतिजवात्, **आपतन्तौ** आगच्छन्तौ, पुन **अतिशयच्छेकपाटहिकताडितपटहनादपटुतरेण** अतिशयेन, छेक -निपुणो य, पाटहिक -पटहाख्यवाद्यविशेषवादनशिल्पी, तेन, ताडितस्य-नादितस्य, पटहस्य, नादेन-ध्वनिना, पटुतरेण-स्फुटतरेण, मिश्रितेनेत्यर्थ, **खुरपुटध्वनिना** खुरपुटशब्देन, **दूरादेव** दूरत एव, **प्रकटीकृतौ** प्राकट्यमापादितौ, पुन **उरःकपाटघटितातनुतनुत्राणौ** वक्ष स्थलघृतविशालकवचौ, पुन **तत्क्षणविपाटितकाषायपटार्धान्तपीडितोत्तमाङ्गौ** तत्क्षण-तत्काले, विपाटितस्य-विदारितस्य, काषायपटस्य-कषायरक्तवस्त्रस्य, यद् अर्धम्-अर्धभाग, तस्यान्तेन-अञ्चलेन, पीडितं-घटितम्, उत्तमाङ्गं-शिरो ययोस्तादृशौ, पुन. **गृहीतनिशितप्रासमुष्टिना** गृहीता-धृता, निशितस्य-तीक्ष्णस्य, प्रासस्य-कुन्तस्य, मुष्टि -मुष्टिधार्यभागो येन तादृशेन, **वामेन**-दक्षिणेतरेण, करतलेन, **किञ्चिदुत्क्षिप्तवल्गौ** किञ्चिद्-ईषद्, उत्क्षिप्ता-उन्नमिता, वल्गा-अश्वमुखस्थरज्जुर्याभ्यां तादृशौ, **च** पुन, **दक्षिणेन** वामेतरेण, **करतलेन** हस्ततलेन, **त्रासतरलिताक्षतुरगतिर्यगवलोकितोत्क्षेपा** त्रासेन-भयेन, तरलिते-चञ्चलिते, अक्षिणी-नेत्रे यस्य तादृशेन, तुरगेण-अश्वेन, तिर्यक्-सकटाक्षपातम्, अवलोकितो दृष्ट, उत्क्षेप -उद्यमन यस्यास्तादृशीम्, **कशाम्** अश्वताडनीम्, **उद्वहन्तौ** दधानौ, पुन **अश्वदर्शनसरभसप्रधावितैः** अश्वदर्शनेन, सरभस-सवेगम्, प्रधावितै -प्रकर्षेण धावितै, **शिविरवेसरैरिव** सैन्यखेचरैरिव, **धूसरैः** तद्वर्णैः, **खुररजोभिः** अश्वशफोद्गतधूलिभि, **पश्चात्** पृष्ठदेशे, **अनुगम्यमानौ** अनुस्त्रियमाणौ, **च** पुन, **अनवरतदोलायमानजङ्घाकाण्डतया** अनवरत-सततम्, दोलायमानौ-इतस्तत. सञ्चलन्तौ, जङ्घाकाण्डौ-जङ्घारूपस्तम्भौ ययोस्तादृशतया, **तुरगपृष्ठवर्त्तिनावपि** अश्वपृष्ठाधिष्ठितावपि, **धावन्ताविव** धावन कुर्वन्ताविव, **उपलक्ष्यमाणौ** प्रतीयमानौ, पुनः **आसन्नवर्त्तिना** निकटवर्तिना, **सम्भ्रान्तेन** सम्भ्रमान्वितेन, **शिविरलोकेन** सैनिकजनेन, **एतत्** पुरो दृश्यम्, किं किं भवतीति **पृच्छ्यमानौ** जिज्ञासां ज्ञाप्यमानौ, पुन **मनसः** हृदयस्य, **मनोरथाविव** अभिलाषभूताविव, पुन **जवस्य** वेगस्य, **जीवाविव** प्राणभूताविव, पुन **वायोः** पवनस्य, **चारकाविव** नियामकाविव, पुनः

गम्यमानो युगपदाहतानां कुपितयमहुङ्कारानुकारिभाङ्कारभैरवमतिगम्भीरमारसन्तीनां समरढक्कानां ध्वनितेन पातयन्निव सबन्धनान्यरातिहृदयानि, तारतरव्याहारिणां वन्दिवृन्दानां हृदयहारिणा जयशब्दाडम्बरेण मुखरिताम्बरः शिबिरान्निरगच्छत् । कृतव्यूहविरचनश्च समरसंक्षोभक्षमायामुपान्तभूमावस्थात् [ ग ] ॥

अथाकर्णितसमरभेरीनिनादजृम्भितानन्दाः सरसरोचनारचितललाटतिलकबिन्दवो दूर्वाप्रवालदन्तुरैः शिरोभिरभ्यर्णचारिचारणोच्चार्यमाणवीर्यसंपदस्त्वरितपदसंचाराभिरागत्यागत्य करिघटाभिः समन्ततः ससामन्तचक्राः परिवारयांचक्रुरेनं सेनापतयः, प्रत्येकं पातितस्निग्धदृष्टिना च तेन सप्रसादमादिष्टाः प्रणम्य निजनिजस्थानेषु तस्थुः [ घ ] ॥

अथ निशीथानुभावभास्वरेण विषममुन्मीलता निमीलता च दीपिकानिवहेन पिशुनितममञ्जुगुञ्ज-

---

**टिप्पनकम्—उदरविनिहितमहाहिभीषणास्त्रम्** एकत्र महाहय एव भीषणानेकास्त्राणि, अन्यत्र महाहिवत् । **पत्त्ररथराजं** गरुडम् [ ग ] ।

---

**उदरविनिहितमहाहिभीषणानेकास्त्रम्** उदरे—मध्यभागे, विनिहितानि—स्थापितानि, महाहिभीषणानि—महासर्पवद् भयानकानि, अस्त्राणि यस्मिन्, पक्षे महाहय एव—महासर्पा एव, भीषणानि अस्त्राणि येन तादृशम्, **रथाङ्गपाणिः** रथाङ्गं—चक्रम्, पाणौ—हस्ते यस्य स विष्णुः, **पत्त्ररथराजमिव** पत्त्राणि—पक्षा एव, रथा —रथा इव गमनसाधनानि येषा ते पत्त्ररथा —पक्षिण, तेषां राजा—गरुड, तमिव, रथम्, **अध्यास्य** अधिरुह्य, **यथासन्निहितेन** यावान् सन्निहित आसीत् तावता, **आत्मसैन्येन** स्वसैनिकेन, **अनुगम्यमानः** अनुस्रियमाण, **युगपदाहतानां** युगपत् ताडितानाम्, **कुपितयमहुङ्कारानुकारिभाङ्कारभैरवं** कुपितस्य—क्रुद्धस्य, यमस्य यो हुङ्कारस्तदनुकारिणा, भाङ्कारेण—ध्वनिविशेषेण, भैरवं—भीषणम्, तथा **अतिगम्भीरम्** अतिस्फुटं च यथा स्यात् तथा, **आरसन्तीनाम्** आनदन्तीनाम्, **समरढक्कानां** सग्रामवाद्यविशेषाणाम्, **ध्वनितेन** ध्वनिना, **सबन्धनानि** भयादिनियन्त्रितानि, **अरातिहृदयानि** शत्रुहृदयानि, **पातयन्निव** भ्रंशयन्निव, पुन **तारतरव्याहारिणाम्** अत्युच्चैरुच्चारिणाम्, **वन्दिवृन्दानां** स्तुतिपाठकसमूहानाम्, **हृदयहारिणा** हृदयप्रियेण, **जयशब्दाडम्बरेण** जयकाराडम्बरेण, **मुखरिताम्बरः** ध्वनितगगनमण्डल, **शिबिरात्** सैन्यावासात, **निरगच्छत्** निष्क्रान्त । **च** पुन, **कृतव्यूहविरचनः** कृता—विहिता, व्यूहस्य सैन्यसन्निवेशविशेषस्य, विरचना येन तादृश सन्, **समरसंक्षोभक्षमायां** सग्रामसञ्चारसमर्थायाम्, **उपान्तभूमौ** पर्यन्तभूमौ, **अस्थात्** स्थितवान् [ ग ] ॥ **अथ** तत्र स्थित्यनन्तरम्, **आकर्णितसमरभेरीनिनादजृम्भितानन्दाः** आकर्णितेन—श्रुतेन, समरभेरीनिनादेन—सग्रामढक्काध्वनिना, जृम्भित —प्रकटित, आनन्दो येषां तादृशा, पुन **सरसरोचनारचितललाटबिन्दवः** सरसया—आर्द्रया, रोचनया—गोरोचनया, रचिता —कल्पिता, ललाटतिलकबिन्दव —ललाटे तिलकरेखा यैस्तादृशा, पुन **दूर्वाप्रवालदन्तुरैः** दूर्वाख्यतृणविशेषनूतनदलव्याप्तै, **शिरोभिः** मस्तकै, उपलक्षिता, पुन **अभ्यर्णचारिचारणोच्चार्यमाणवीर्यसम्पदः** अभ्यर्णचारिभि —निकटगामिभि, चारणै —वन्दिभि, उच्चार्यमाणा —स्तूयमाना, वीर्यसम्पद —पराक्रमसम्पत्तयो येषां तादृशा, **ससामन्तचक्राः** स्वविषयान्तर्वर्तिनृपसमुदायसहिता, सेनापतय, **त्वरितपदसञ्चाराभिः** त्वरित —शीघ्र, पदसञ्चार —चरणसञ्चारो यासा तादृशीभि, **करिघटाभिः** हस्तियूथै, **आगत्यागत्य** उपस्थायोपस्थाय, **समन्ततः** सर्वत, **एनं** चतुरङ्गसेनानायकम्, **परिवारयाञ्चक्रुः** परिवेष्टन्ते स्म । **च** पुन, **प्रत्येकं** एकैकस्मिन्, **पातितस्निग्धदृष्टिना** पातिता—प्रक्षिप्ता, स्निग्धा—स्नेहार्द्रा, दृष्टिर्येन तादृशेन, **तेन** सेनानायकेन, **सप्रसादं** प्रसन्नतापूर्वकम्, **आदिष्टाः** आज्ञप्ता सन्त, **प्रणम्य** नमस्कृत्य, **निजनिजस्थानेषु** स्वस्वस्थानेषु, **तस्थुः** स्थिता [ घ ] ॥ **अथ** अनन्तरम्, **प्रतिपन्थिबलं** शत्रुसैन्यम्, **चक्षुषः पथि** दृष्टिमार्गम्, **अढौकत** प्राप्तम् । कीदृशम्? **निशीथानुभावभास्वरेण** निशीथानुभावेन—मध्यरात्रप्रभावेण, भास्वरेण—प्रकाशमानेन, पुन **विषमं** विषमप्रकार यथा स्यात् तथा, **उन्मीलता** दीप्यमानेन, **निमीलता** संकुचता च, **दीपिकानिवहेन** प्रदीपसमूहेन, **पिशुनितं** सूचितम्, पुन **अमञ्जुगुञ्जत्काहलम्**

प्रचलितरसाकुलभूभृच्चक्रवालकृततुमुलः प्रसृतरभसोत्तालगजदानवारिरार्तत्रिदशदारिकान्विष्यमाणरमणसार्थो निपीतनरवशाविस्वरविसारिशिवाफेत्कारडामरः [च] । सतारकावर्ष इव वेतालदृष्टिभिः, सोल्कापात इव निशितप्रासवृष्टिभिः, सनिर्घातपात इव गदाप्रहारैः, ससंवर्तकाम्बुदुर्दिन इव करिशीकरासारैः, सोत्पातरविमण्डल इव कीलालितकरालचक्रमुक्तिभिः, सवैद्युतस्फूर्ज इव जवापतज्ज्वलितशक्तिभिः, सखण्डपरशुताण्डव इव प्रचण्डानिलधूतध्वजसहस्रैः, सकालाग्निधूम इव प्रकुपितसुभटभ्रुकुटीतमिस्रैरजायत महाप्रलयसंनिभः

---

**टिप्पनकम्—प्रचलितरसाकुलभूभृच्चक्रवालकृततुमुलः** एकत्र प्रचलितवसुन्धराकुलगिरिचक्रविहिताकुल शब्द', अन्यत्र प्रचलितवीररसाकुलनृपचक्रकृताकुलारव । **प्रसृतरभसोत्तालगजदानवारिः** एकत्र प्रसृतं-प्रवृत्तम्, रभसोत्तालगजानाम्—उत्सुकोद्भटकरिणाम्, दानवारि—मदजलं यत्र स तथोक्त., अन्यत्र प्रसृत उत्तालगजवद् दानवारिः—शङ्करो यत्र स तथोक्त' । **आर्तत्रिदशदारिकान्विष्यमाणरमणसार्थः** एकत्र आर्ताभिस्त्रिभिर्दशभिश्च, दारिकाभि.—अङ्गनाभि., अन्विष्यमाणो भर्तृसंघातो यत्र स तथा, अन्यत्र आर्तदेवपुत्रिकागवेष्यमाणभर्तृसंघातः । **निपीते** त्यादि—शिवाफेत्कारडामर —एकत्र चामुण्डाफेत्कारेण डामर.—रौद्र., अन्यत्र कोष्ट्री० [ च ] । कीलालित —सरुधिर. । स्फुर्ज.—स्फुरणम् । खण्डपरशु.—शङ्करः । कालाग्निः—पातालरुद्र [ छ ] ।

---

पक्षे तद्रूपमद्यपानपात्रविशेषा यस्मिंस्तादृश , पुन **प्रचलितरसाकुलभूभृच्चक्रवालकृततुमुलः** प्रचलितेन—उच्छलितेन, रसेन—वीररसेन, आकुलानाम्—आप्लुतानाम्, भूभृता—राज्ञाम्, चक्रवालेन—मण्डलेन, कृत तुमुल—सान्द्रयुद्धं यस्मिन्, पक्षे प्रचलिताया —प्रकम्पिताया , रसाया —पृथिव्या , कुलभूभृतां—महेन्द्रादिकुलपर्वतानाम्, चक्रवालेन—समूहेन, कृतम्, परस्परोपरि पतनरूप सान्द्र युद्ध यस्मिंस्तादृश , पुन **प्रसृतरभसोत्तालगजदानवारिः** प्रसृतं—विस्तृतम्, रभसोत्तालाना—वेगोद्धतानाम्, गजानां, दानवारि—मदजल यस्मिंस्तादृश , पक्षे प्रसृत —सहर्तुं व्यापृत , रभसोत्ताल — औत्सुक्योन्नतो हर्षमेदुरो वा, गजदानवस्य—गजासुरस्य, अरि —शत्रु शिव सहारभैरव इति यावत्, यस्मिंस्तादृश , पुन **आर्तत्रिदशदारिकान्विष्यमाणरमणसार्थः** आर्ताभि —विरहव्यग्राभि , त्रिदशदारिकाभि —देवाङ्गनाभि , अन्विष्यमाण , रमणसार्थ —प्रियसमूहो यस्मिंस्तादृश , युद्धे मृताना देवत्वप्राप्ते प्रसिद्ध्या वैधव्यविधुरिताना तद्वनिताना वरान्वेषणोपपत्ते , पक्षे त्रिदशाभि —त्रिरावृत्तदशसख्यकाभि , त्रिंशत्सख्यकाभिरिति यावत्, उपलक्षणत्वाद् बहुसख्यकाभिरित्यर्थ , दारिकाभि —अङ्गनाभि , अन्विष्यमाण , रमणसार्थ —भर्तृगणो यस्मिंस्तादृश , पुन **निपीतनरवशाविस्वरविसारिशिवाफेत्कारडामरः** निपीता—नितरा पानकर्मतामापादिता या, नराणा—मनुष्याणाम्, वशा—धातुविशेष , तया विस्वरेण—विकृतस्वरेण, विसारिणीना—प्रसारिणीनाम्, शिवाना—शृगालीनाम्, पक्षे विसारिण्या शिवाया —चण्डिकाया , फेत्कारेण—ध्वनिविशेषेण, डामर —व्याप्त , रौद्र इति यावत् [ च ], पुन **वेतालदृष्टिभिः** वेतालाना—मल्लविशेषाणाम्, पक्षे शिवानुचरविशेषाणाम्, दृष्टिभि —दृष्टिपातै , **सतारकावर्ष इव** तारकाणा ताराणाम्, यद् वर्ष—वृष्टि , तत्सहित इवेत्युत्प्रेक्षा, पुन **निशितप्रासवृष्टिभिः** निशिताना—तीक्ष्णानाम्, प्रासाना—कुन्ताख्यास्त्राणाम्, या वृष्टयस्ताभि , **सोल्कापात इव** उल्कापातसहित इवेति चोत्प्रेक्षा, पुन **गदाप्रहारैः** गदाप्रक्षेपै , **सनिर्घातपात इव** वज्रपातसहित इव, पुन **करिशीकरासारैः** गजमदजलकणधारासम्पातै , **ससंवर्त्तकाम्बुदुर्दिन इव** सवर्तकस्य—तदाख्यमेघविशेषस्य, अम्बुभि —जलै , यद् दुर्दिन—मेघाच्छन्नदिनम्, तत्सहित इव, पुन **कीलालितकरालचक्रमुक्तिभिः** कीलालित—रुधिरार्द्रीभूतम्, कराल—भयानक च, यच्चक्र—तदाख्यमस्त्रम्, तन्मुक्तिभि —तद्विमोचनै , **सोत्पादरविमण्डल इव** उत्पातरविमण्डलेन—जगत्सहारसूचकसूर्यमण्डलेन, सहित इव, पुन **जवापतज्ज्वलितशक्तिभिः** जवेन—वेगेन, आपतन्तीभि —निपतन्तीभि , ज्वलिताभि —दीप्ताभि , शक्तिभि —तदाख्यास्त्रविशेषै , **सवैद्युतस्फूर्ज इव** वैद्युतेन—विद्युत्सम्बन्धिना, स्फूर्जेन—स्फुरणेन, सहित इव, पुन **प्रचण्डानिलधूतध्वजसहस्रैः** प्रचण्डेन—उद्दण्डेन, अनिलेन—वायुना, धूता —कम्पिता , ये ध्वजास्तेपा सहस्रै , **सखण्डपरशुताण्डव इव** खण्डपरशो —शिवस्य, ताण्डवेन—नृत्येन, सहित इव, पुन **प्रकुपितसुभटभ्रुकुटीतमिस्रैः** प्रकुपितानाम्—अतिक्रुद्धानाम्, सुभटाना—सुयोधानाम्, भ्रुकुटीभि —नेत्रोपरितनरोमराजिकौटिल्यै , यानि तमिस्राणि—अन्धकारास्तै , **सकालाग्निधूम इव** कालाग्ने —प्रलयकालिकाग्ने , धूमेन सहित इवेति

प्रतिक्षणमुद्धुरैर्गुणध्वनिभिरज्ञायत धनुष्मतामिषुव्यापारः, शस्त्रशिखिकणद्योतेन पदमदीयत प्रचलितैः प्रत्यरिपदातिभिः, अविदितात्मीयपरविभागेन व्यलम्ब्यत मुहूर्तमुद्गूर्णहेतिनापि सुभटलोकेन, प्रभूतपिशिताभ्यवहारजनिततीव्रोदन्येन कर्दमप्रायमपीयत क्षतजापगाम्बु कौणपगणेन [झ] ॥

एवं च भीषणावद्धतुमुले कुतूहलोत्तालकालदूताकुलितदशदिशि क्रव्यादकुलविलुप्यमानवीरलोके नृत्यत्परेतपरिषदि कृतान्तमहोत्सव इव निर्भरं प्रवृत्ते समरसंरम्भे क्षीयमाणेषु क्षितिपतिषु निपतत्सु पादातेषु सीदत्सु सादिषु व्रजत्सु विधुरतामाधोरणेषु प्रहारविकलकायेष्वितस्ततः परिस्खलत्सु शून्यासनेषु सप्तिषु स्फुरत्कृपाणचक्रत्रिशूलकार्मुकप्रायप्रहरणदुरालोकायामनेकशवमुण्डमालामालितवपुषि चण्डिकायामिव रूपपरिवर्तेन कृतसंनिधावुपलक्ष्यमाणायां क्षितावमर्षमय इव क्रौर्यमय इव वैरमय इव व्याजमय इव हिंसामय इव विभाव्यमाने जगति त्रिभागशेषस्थितौ त्रियामायाममर्षगतमरणशङ्कानिरङ्कुशप्रवृत्तिभिर्वीरलोकैरहंप्रथमिकया

---

**टिप्पनकम्**—उदन्या-तृषा । कौणपाः-राक्षसाः [ झ ] । क्रव्यादाः-राक्षसाः । परेताः-पिशाचाः [ ञ ] ।

---

क्षणे क्षणे, **उद्धुरैः** उच्चैः, **गुणध्वनिभिः** आकृष्टमौर्वीशब्दैः, **धनुष्मतां** धनुर्धारिणाम्, **इषुव्यापारः** बाणविक्षेपात्मको व्यापारः, **अज्ञायत** ज्ञायते स्म । **प्रचलितैः** प्रस्थितैः, **प्रत्यरिपदातिभिः** उपस्थितशत्रुपदगामिसैनिकैः, **शस्त्रशिखिकणद्योतेन** शस्त्रशिखिनः-खड्गादिरूपाग्नेः, कणानां-स्फुलिङ्गानाम्, द्योतेन-प्रकाशेन, **पदं** चरणम्, **अदीयत** आरोप्यते स्म । **उद्गूर्णहेतिनापि** उद्यतबाणेनापि, **सुभटलोकेन** सुयोधजनेन, **अविदितात्मीयपरविभागेन** अविदितः-अप्रतीतः, आत्मीयानां-स्वजनानाम्, परेषाम्-अनात्मीयजनानाम्, शत्रुजनानामिति यावत्, विभागः-पार्थक्यं येन तादृशेन सता, **मुहूर्तं** क्षणम्, **व्यलम्ब्यत** बाणविक्षेपे विलम्बः कृतः । **प्रभूतपिशिताभ्यवहारजनिततीव्रोदन्येन** प्रभूतस्य प्रचुरस्य, पिशितस्य-मांसस्य, अभ्यवहारेण-भक्षणेन, जनिता-उत्पन्ना, तीव्रा-दुःसहा, उदन्या-पिपासा यस्य तादृशेन, **कौणपगणेन** राक्षसगणेन, **कर्दमप्रायं** पङ्कमयम्, **क्षतजापगाम्बु** रुधिरनदीजलम्, **अपीयत** पीयते स्म [ झ ] ॥ **एवम्** अनेन प्रकारेण, **भीषणावद्धतुमुले** भीषणं-भयानकम्, आवद्ध-समन्तात् प्रवर्तितम्, तुमुलं-सान्द्रयुद्धं यस्मिंस्तादृशे, पुनः **कुतूहलोत्तालकालदूताकुलितदशदिशि** कुतूहलेन-औत्सुक्येन, उत्तालैः-उद्धतैः, कालदूतैः-यमदूतैः, आकुलिताः-आक्रान्ताः, दश दिशो यस्मिंस्तादृशे, पुनः **क्रव्यादकुलविलुप्यमानवीरलोके** क्रव्यादानां-राक्षसानाम्, कुलेन-समूहेन, विलुप्यमानाः-मांसार्थमुत्कृत्यमानाः, वीरलोकाः-युद्धमृतवीरपुरुषा यस्मिंस्तादृशे, पुनः **नृत्यत्परेतपरिषदि** नृत्यन्ती-हर्षेणोच्छलन्ती, परेतानां-व्यन्तरविशेषाणाम्, परिषत्-सभा समूह इति यावत्, यस्मिंस्तादृशे, पुनः **कृतान्तमहोत्सव इव** यमराजमहोत्सव इव, **निर्भरम्** अत्यन्तम्, **प्रवृत्ते** प्रारब्धे, **समरसंरम्भे** संग्रामसंघर्षे, **क्षितिपतिषु** नृपेषु, **क्षीयमाणेषु** म्रियमाणेषु, पुनः **पदातिषु** पदगामिसैनिकसमूहेषु, **निपतत्सु** अधः स्खलत्सु, पुनः **सादिषु** अश्वारोहिसैनिकेषु, **सीदत्सु** व्यथमानेषु, पुनः **आधोरणेषु** हस्तिपकेषु, **विधुरतां** क्लेशम्, **व्रजत्सु** अनुभवत्सु, पुनः **प्रहारविकलकायेषु** प्रहारेण-खड्गाघातेन, विकलः-भग्नः, कायः-शरीरं येषां तादृशेषु, **शून्यासनेषु** पर्याणादिरहितेषु, **सप्तिषु** अश्वेषु, **इतस्ततः** अत्र तत्र, **परिस्खलत्सु** परिपतत्सु, पुनः **स्फुरत्कृपाणचक्रत्रिशूलकार्मुकप्रायप्रहरणदुरालोकायां** स्फुरन्ति-उज्ज्वलन्ति, यानि कृपाणचक्रत्रिशूलकार्मुकाणि, कृपाणः-खड्गः, चक्रं-चक्राकारोऽस्त्रविशेषः, त्रिशूलं-यस्य शूलाकाराणि त्रीणि शिखाग्राणि भवन्ति तादृगस्त्रविशेषः, कार्मुकं नाम-धनुः, तत्प्रायैः-तत्प्रचुरैः, प्रहरणैः-अस्त्रैः, दुरालोकाया-दुःखेन दृश्यायाम्, **च** पुनः, **अनेकशवमुण्डमालामालितवपुषि** अनेकेषां शवानां-मृतकानाम्, या मुण्डमाला-मस्तकस्थितमाला, पक्षे मस्तकपङ्क्तिः, तया मालितं-शोभितम्, वपुः-शरीरं यस्यास्तादृश्याम्, **क्षितौ** पृथिव्याम्, **रूपपरिवर्तेन** स्वरूपपरिवर्तनेन, **कृतसंनिधौ** कृतसमीपावस्थानायाम्, **चण्डिकायामिव** तदाख्यदेव्यामिव, **उपलक्ष्यमाणायां** प्रतीयमानायां सत्याम्, पुनः जगति, **अमर्षमय इव** क्रोधमय इव, पुनः **क्रौर्यमय इव** क्रूरतामय इव, पुनः **वैरमय इव** शात्रवमय इव, पुनः **व्याजमय इव** पारस्परिकच्छलमय इव, पुनः **हिंसामय इव** हिंसाप्रचुर इव, **विभाव्यमाने** प्रतीयमाने सति, पुनः **त्रियामाया** रात्रौ, **त्रिभागशेषस्थितौ** त्रिभागरूपा-

सेनाधिपोऽपि गम्भीरमधुरेण तेन व्याहृतध्वनिना प्रथमजलधरस्तनितेनेव विन्ध्यः सद्य एवोद्भिन्नसरसरोमाञ्चकन्दलः कोपविस्फारितपुटेन कवलयन्निव तारकोदरप्रतिबिम्बितं सप्रगल्भचलितपक्ष्मणा लोचनद्वयेन सतुरङ्गरथमातङ्गपार्थिवं प्रतिपक्षम् 'इत इतः पश्य माम्' इति व्याहरन्नेव वाहितरथः समेत्य तस्येक्षणपथे समस्थित [ठ]। वारंवारमन्योऽन्यकृततर्जनयोश्च तयोराकर्णान्ताकृष्टमुक्तास्तुल्यकालमास्वादितगलामिषा विसारिणो, लङ्घितदशदिशो दूराध्वगा, राजकार्योपयोगिनस्तीक्ष्णाः, परितोषितसुराङ्गनाः सुपर्वाणो, महाजवा वाजिनश्चापलतोपिताः क्षितिपालदारका, विषमाश्वमण्डलभेदिनः प्राप्तमोक्षा, दत्तदीर्घनिद्रा महासंनिपाताः,

---

टिप्पनकम्—आस्वादितगलासिपाः, विसारिणः मत्स्या, कीदृशा ? आस्वादित–भक्षितम्, गलामिषं–वडिसीमासं यैस्ते तथोक्ता., अन्यत्र प्रसरणशीलास्तथा आस्वादितग्रीवामासा । लङ्घितदिशः, दूराध्वगाः दूरपथिका, कीदृशा ? लङ्घितदिश.–अतिक्रान्ताशा भवन्ति, दूरमार्गगन्तारो लङ्घितदिशश्च । राजकार्योपयोगिनस्तीक्ष्णाः एकत्र तीक्ष्णा –घातका, ते नृपार्थसाधका., अन्यत्र निशाता । परितोषितसुराङ्गनाः, सुपर्वाणः एकत्र देवा, अन्यत्र शोभनग्रन्थिद्वयमध्या, उभयेऽपि हर्षितदेवयोषा । महाजवा वाजिनः एकत्र वाजिनोऽ[श्वा, अ]न्यत्र सपिच्छा., उभयेऽपि महावेगा । चापलतोपिताः, क्षितिपालदारकाः एकत्र राजपुत्रा, कीदृशा ? चापलतोषिता.–चपलत्व-हर्षिता', अन्यत्र नृपविदारकाः, धनुर्लतास्थिता. । विषमाश्वमण्डलभेदिनः, प्राप्तमोक्षाः एकत्र प्राप्तनिर्वाणा.,

---

क्षणमात्रं–मुहूर्तमात्रम्, मन्थरिता–शिथिलिता, रथस्य गति –गमन यस्य तादृश, वज्रायुध! वज्रायुध! इति भो वज्रायुध' भो वज्रायुध' इति, सगर्वं गर्वपूर्वकम्, व्याहरन् ब्रुवन्, वाहिनीभर्त्तुः अनुपदोक्तनामकस्य सेनापते॰, अन्तिकं समीपम्, अभ्यागच्छत् आगतवान् [ट] ॥ सेनाधिपोऽपि सेनापतिरपि, प्रथमजलधरस्तनितेन प्रथममेघगर्जितेन, विन्ध्य इव तदाख्यकुलपर्वत इव, गम्भीरमधुरेण गम्भीरेण–तीव्रेण, मधुरेण च, व्याहृतध्वनिना कथितशब्देन, सद्य एव तत्क्षणमेव, उद्भिन्नसरसरोमाञ्चकन्दलः उद्भिन्नानि–उन्मीलितानि, सरसानि–रसान्वितानि, रोमाञ्चकन्दलानि–रोमाञ्चरूपनवाङ्कुराणि यस्य तादृश. सन्, कोपविस्फारितपुटेन कोपेन–क्रोधेन, विस्फारितौ पुटौ–पुटाकारकनीनिकावरणत्वचौ यस्य तादृशेन, पुन सप्रगल्भचलितपक्ष्मणा सप्रगल्भ–निर्भयं यथा स्यात् तथा, चलिते पक्ष्मणी–नेत्रावरणरोमलेखे यस्य तादृशेन, लोचनद्वयेन नेत्रद्वयेन, तारकोदरप्रतिबिम्बितं तारकयो –नेत्रमध्यवर्तिकनीनिकयो, उदरे–मध्ये, प्रतिबिम्बितम्, सतुरङ्गरथमातङ्गपार्थिवं तुरगै –अश्वै, रथै -स्यन्दनै., मातङ्गै –हस्तिभि, पार्थिवै –नृपैश्च, सहितम्, प्रतिपक्षं शत्रुम्, कवलयन्निव ग्रसन्निव, इत इतः अत्र अत्र, मां वज्रायुधम्, पश्य, इति व्याहरन्नेव कथयन्नेव, वाहितरथः प्रस्थापितरथ, समेत्य समीपमागत्य, तस्य राजकुमारस्य, ईक्षणपथे दृष्टिपथे, समस्थित सतिष्ठते स [ठ] ॥ च पुन, वारं वारं मुहुर्मुहु, अन्योऽन्यकृततर्जनयोः अन्योऽन्य–परस्परम्, कृतं तर्जन–प्रहारो याभ्या तादृशयो, तयोः सेनापति-राजकुमारयो, शराः बाणा, प्रसस्रुः प्रसृता । कीदृशा ? विसारिणः प्रसरणशीला मत्स्यरूपाश्च, केन साधर्म्येण ? आकर्णान्ताकृष्टमुक्ताः आकर्णान्त–कर्णान्तपर्यन्तम्, आकृष्टा –पूर्वं कृताकर्षणा, पश्चान्मुक्ता –लक्ष्येषु निपातिता, पक्षे वडिशसूच्या कर्णान्तं यावदाकृष्टा –जलादुद्धृता, पश्चान्मुक्ता –वडिशान्निष्कासिता, पुन आस्वादितगलामिषाः आस्वादितं–भक्षितम्, गलामिषं- ग्रीवास्थमासम्, पक्षे ग्रीवामास च यैस्तादृशा, वडिशसूचीग्रथितमामिष भक्षता मत्स्याना तेन सह तद्विद्धस्वग्रीवास्थमासभक्षणस्याप्यवर्जनीयताया लोकप्रसिद्धत्वात्, पुन. लङ्घितदशदिशः लङ्घिता –त्वरितगत्या कृतलङ्घना, दश दिशो यैस्तादृशा, अत एव दूराध्वगाः दूरमार्गगामिन, दूरगामिपथिकरूपाश्च, पुन राजकार्योपयोगिनः राज्ञा यानि कार्याणि तदुपयोगिन –तत्साधका, तीक्ष्णाः निशिता, तीव्रा आत्मत्यागिनो वा, पुन परितोषितसुराङ्गनाः परितोषिता –सन्तोषिता, सुराङ्गना –देव्यो यैस्तादृशा, सुपर्वाणः सुष्ठु पर्व ग्रन्थिद्वयमध्यभागो येषा तादृशा, पक्षे देवस्वरूपाश्च, युद्धे स्वमारितानां योधाना देवत्वापादनेन तै पतिरहिताना देवीना सन्तोषणोपपत्ते, पुन महाजवा अतिवेगशालिन, वाजिन. वाज –पक्षोऽस्ति येषा तादृशा, पक्षे अश्वस्वरूपाश्च; पुन चापलतोपिताः चाप –धनुरेव लतेति चापलता, तस्याम् उषिता –कृतनिवासा, पक्षे चपलस्य भाव –चापलम्, तेन तोपिता –हर्षिता, क्षितिपालदारकाः क्षितिपालान् सग्रामसमवेतनृपान् दारयन्ति-विदारयन्ति, भिन्दयन्तीति यावद्

नीलत्विषो वाणतां द्विधाकृतोद्दण्डपुण्डरीकाः कादम्वाभिधामारवमुखरिताशामुखाः शिलीमुखाभिख्यां मुख्यामुद्वहन्तः, सायकाः प्रसस्रुः [ड]। अतिसंहततया च तेषामन्तरितचक्षुरिन्द्रियाः पुरोवर्तिनामपि वीराणां रणमतीन्द्रियं नाद्राक्षुरमरपङ्क्तयः, समीपेऽपि त्रिदशतां सुभटजनमुपागतं न स्वयानमारोपयितुमपारयन्नप्सरसः, समासन्नस्यापि न कवन्धस्य स्कन्धरुधिरधारया कपालान्यपूरयन् परेतयुवतयः, निरुद्धचन्द्रालोकवद्धान्धकारेषु च रुधिरनिम्नगातीरेषु प्ररूढतालतरुवनशङ्कया निर्विशङ्कमध्यासितोर्ध्ववेतालमण्डलमध्याभिरमराङ्गनाभिररम्यन्त समरासादिताः पत्तयः [ढ]। मुहूर्ताच्च प्रीतहृदयः स नरपतिकुमारः सेनाधिपतिमवदत्—'वज्रायुध! तवानेन सकललोकविस्मयकारिणा भुजवलेन धनुरिवावर्जितं मम निसर्गस्तब्धमपि हृदयम्, आशैशवादपारपौरुषमदोन्मादपरवशस्य मे शतशः संगरेषु संवृत्तः प्रवेशः, जातश्च सहस्रसंख्यैर्धन्विभिः सह समागमः,

---

वाणतां चोद्वहन्त'। द्विधाकृतोद्दण्डपुण्डरीकाः कादम्वाभिधां द्विधाकृतानि–छिन्नानि, उद्धतदण्डानि पुण्डरीकाणि–छत्राणि यैस्ते तथोक्ता', अन्यत्र छिन्नोद्दण्डपद्मा, कादम्वा–हंसाश्च। आरवमुखरिताशामुखाः शिलीमुखाभिख्यां शब्दशब्दितदिङ्मुखा, शिलीमुखाभिख्या, शिलीमुखाः–भ्रमरा· [ड]।

---

शरताम्, पक्षे नीलझिण्टीनामकवाणवृक्षताम्, उद्वहन्त, तद्वृक्षाणामपि तादृक्कान्तिकत्वेन साधर्म्यात्, पुन, द्विधाकृतोद्दण्डपुण्डरीकाः द्विधाकृतानि–खण्डितानि, उद्दण्डानि–ऊर्ध्वदण्डावलम्बितानि, पुण्डरीकाणि–रिपुभूतनृपच्छत्राणि, पक्षे उद्दण्डानि–ऊर्ध्वनालावलम्बितानि, पुण्डरीकाणि–कमलानि यैस्तादृशा, अत एव कादम्वाभिधां कादम्वेति कलहंससाधारणसञ्ज्ञाम्, उद्वहन्त, कलहंसानां शराणां च कादम्वसञ्ज्ञकत्वात्, पुन आरवमुखरिताशामुखाः आरवै–स्वशब्दै, मुखरितानि–प्रतिनादितानि, आशामुखानि–दिङ्मुखानि यैस्तादृशा, अत एव मुख्यां प्रधानभूताम्, शिलीमुखाभिख्यां भ्रमरसाधारणशिलीमुखेति सञ्ज्ञाम्, उद्वहन्त, शराणा भ्रमराणा च शिलीमुखेतिसञ्ज्ञकत्वात् [ड]। च पुन, तेषां वाणानाम्, अतिसंहततया अन्योऽन्यमतिमिलिततया, अन्तरितचक्षुरिन्द्रियाः अन्तरित–व्यवहितम्, चक्षुरिन्द्रिय यासा तादृश्य, अमरपङ्क्तयः पङ्क्तिवद्धदेवगणा, पुरोवर्त्तिनामपि अग्रे स्थितानामपि, वीराणां सुयोधानाम्, अतीन्द्रियम् इन्द्रियागोचरम्, रणं सङ्ग्रामम्, चक्षुषा नेत्रेण, न अद्राक्षु द्रष्टुमशक्नुवन्। पुन समीपेऽपि पार्श्वेऽपि, पार्श्वस्थितमपीत्यर्थः, त्रिदशतां सङ्ग्राममरणजन्यदेवत्वम्, उपागतं प्राप्तम्, सुभटजनं सुयोधजनम्, स्वयानं स्ववाह्यरथम्, आरोपयितुम् आरोहयितुम्, अप्सरसः स्वर्वेश्या, न अपारयन् अशक्नुवन्, निरन्तरवाणप्रहारजनितान्धकारमयत्वेन पार्श्ववर्तिनोऽपि मृतसुभटा न दृष्टिगोचरीभवितुमशकन्निति भाव। एवं समासन्नस्यापि पार्श्वस्थस्यापि, कवन्धस्य "मनुष्याणा सहस्रेषु हतेषु हतमूर्धसु। तदावेशात् कवन्ध स्यादेकोऽमूर्धा क्रियान्वित ॥" इत्यन्यत्रोक्तशिरोरहितसक्रियशरीरस्य, स्कन्धरुधिरधारया स्कन्धरुधिरस्य–स्कन्धस्यन्दितशोणितस्य, धारया–प्रवाहेण, परेतयुवतयः पिशाचयुवतय, कपालानि स्वकर्परान्, न अपूरयन् न पूरयितुमपारयन्। च पुन, निरुद्धचन्द्रालोकवद्धान्धकारेषु निरुद्ध–अनवरतवाणवर्षणावरुद्ध, चन्द्रालोक–चन्द्रप्रकाशो येषु तादृशेषु, अत एव वद्ध–स्थापित, अन्धकारो येषु, यद्वा निरुद्धेन चन्द्रालोकेन वद्धोऽन्धकारो येषु तादृशेषु, रुधिरनिम्नगातीरेषु शोणितनदीतटेषु, प्ररूढतालतरुवनशङ्कया प्रवृद्धतालाख्यवृक्षविशेषवनसन्देहेन, निर्विशङ्कं निश्शङ्क यथा स्यात् तथा, अध्यासितोर्ध्ववेतालमण्डलमध्याभिः अध्यासितम्–अधिष्ठितम्, ऊर्ध्ववेतालानाम्–ऊर्ध्ववर्तिव्यन्तरविशेषाणाम्, मण्डलमध्यं–मण्डलमध्यभागो याभिस्तादृशीभि, अमराङ्गनाभिः देवाङ्गनाभि, समरासादिताः समरात्–रणात्, आसादिता–प्राप्ता, पत्तयः पदातय, अरम्यन्त रम्यन्ते स्म [ढ]। च पुन, मुहूर्तात् क्षणात्, प्रीतहृदयः प्रसन्नमना, स नरपतिकुमारः राजकुमार, सेनाधिपतिं सेनानायकं वज्रायुधम्, अवदत् उक्तवान्, वज्रायुध! हे तत्सञ्ज्ञकसेनापते! सकललोकविस्मयकारिणा सकललोकाना–सर्वजनानाम्, विस्मयकारिणा–आश्चर्यजनकेन, अनेन तव भुजवलेन वाहुविक्रमेण, निसर्गस्तब्धमपि निसर्गेण–स्वभावेन, स्तब्धमपि–निश्चेष्टमपि, मम हृदय, धनुरिव चापदण्ड इव, आवर्जितं नमितम्, सचेष्टतामापादितमित्यर्थ। आ शैशवात् आवाल्यात्, अपारपौरुषमदोन्मादपरवशस्य अपारम्–अत्यन्तम्, यत् पौरुषं पराक्रम, तज्जन्येन मदेन–अभिमानेन, य उन्माद–

मांसभेदे, मन्दं मेदसि, मुखरमस्थिषु, मन्थरं स्नायुग्रन्थिष्वसंख्यमसृजन्मार्गणव्रातम् [ण]। अतिवेगव्यापृतोऽस्य तत्र क्षणे प्रोत इव तूणीमुखेषु, लिखित इव मौर्व्याम्, उत्कीर्ण इव पुङ्खेषु, अवतंसित इव श्रवणान्ते तुल्यकालमलक्ष्यत वामेतरः पाणिः [त]। अविरलशरासारत्रासिता हंसीव मेघागमे पल्वलमनवलोकिताश्रयविसंस्थुला सैन्यपतिवक्षःस्थलममुञ्चद् राजलक्ष्मीः; उद्भ्रान्तहृदया च क्षणं वाहुशिरसि, क्षणं धनुषि, क्षणं कृपाणधाराम्भसि, क्षणमातपत्रे, क्षणं पालिध्वजेषु, क्षणं चामरेष्वकुरुत स्थितिम्। [थ]। अहं तु ता तस्य विपदमप्रतिविधेयामुपनतामवलोक्य किंकर्तव्यतामूढः स्तम्भित इव मुहूर्तमतिष्ठम्, प्रयत्नवशाच्च प्रत्यानीतधैर्य इतस्ततश्च धावता हृदयेन तस्य प्राणपरिरक्षणोपायान् मृगयमाणः सततमासन्नवर्त्यपि व्याकुलतया मुहूर्तमपसृतं स्मृतेर्झगिति तत्पुरा परमेश्वरेण प्रहितमङ्गुलीयकं वालारुणमस्मरम्, उच्छ्वसितहृदयश्च तदभिनन्द्य वहुप्रकारमादरकृतप्रणामः पाणिना दक्षिणेनोदक्षिपम्, आक्षेपस्खलद्वाणिश्च तत्क्षणमरातिवाणोन्मथितकेतुच्छत्रकार्मुकं

---

टिप्पनकम्—पालिध्वजा...... [थ]।

---

परिजनै, परिगतं—व्याप्तमिवेति सर्वत्रोत्प्रेक्षा, पुन **मांसभेदे** मासभेदनावसरे, **मूकं** नि शब्दम्, पुन **मेदसि** वसायां मासजन्यधातुविशेषे इति यावत्, तद्भेदने इत्यर्थ, **मन्दम्** अतीक्ष्णम्, पुन **अस्थिषु** अस्थिभेदने, **मुखरं** वाचालम्, पुन **स्नायुग्रन्थिषु** शारीरिकवायुवाहकनाडीविशेषग्रन्थिभेदने, **मन्थर** जडम्, शिथिलप्रवृत्तिकमिति यावत् [ण]। **तत्र** तस्मिन्, **क्षणे** मुहूर्ते, **अस्य** नृपकुमारस्य, **अतिवेगव्यापृत** वेगातिशयेन कृतव्यापार, **वामेतरः** दक्षिण, **पाणिः** हस्त, **तुल्यकालं** समकालमेव, **अलक्ष्यत** लक्षित। कीदृश? **तूणीमुखेषु** इषुधिमुखेषु, **प्रोत इव** गुम्फित इव, पुन **मौर्व्यां** ज्यायाम्, **लिखित इव** चित्रित इव, पुन **पुङ्खेषु** वाणमूलेषु, **उत्कीर्ण इव** उत्क्षिप्त इव, पुन **श्रवणान्ते** कर्णान्तभागे, **अवतंसित इव** अलङ्करणतामापादित इवेति सर्वत्रोत्प्रेक्षा [त]। **मेघागमे** वर्षागमे, **अनवलोकिताश्रयविसंस्थुला** अनवलोकित—अदृष्ट, आश्रय—स्थान यया तादृशी, अत एव विसंस्थुला—शिथिला, हंसी, **पल्वलं** क्षुद्रजलाशयमिव, **अविरलशरासारत्रासिता** अविरलेन—निरन्तरेण, शराणा—वाणानाम्, आसारेण—धारापातेन, त्रासिता सती, **राजलक्ष्मीः** राजोपास्यलक्ष्मीनामकदेवी, **सैन्यपतिवक्षःस्थलं** सैन्यपते—सेनानायकस्य, वज्रायुधस्य, वक्ष स्थलं—वक्ष प्रदेशम्, **अमुञ्चत्** त्यक्तवती। **च** पुन, **उद्धान्तहृदया** उद्धान्तम्—उज्झितम्, हृदय-सेनापतिवक्षो यया तादृशी सती, अत्र **उद्भ्रान्तहृदयेति** पाठे उद्भ्रान्तं—निजाश्रयविश्लेषवशेन, सम्भ्रान्तं—हृदयं यस्यास्तादृशी सतीत्यर्थ, राजलक्ष्मीरिति शेष। **क्षणं** किञ्चित् कालम्, **वाहुशिरसि** वाहूर्ध्वभागे, पुन क्षणं **धनुषि** धनुर्दण्डोपरि, पुन क्षणं **कृपाणधाराम्भसि** खड्गधारात्मकजले, पुन क्षणम् **आतपत्रे** छत्रोपरि, पुन **क्षण** किञ्चित् कालम्, **पालिध्वजेषु** कोणस्थितध्वजेषु, पुन क्षण **चामरेषु** राजव्यजनेषु, **स्थितिं** निवासम्, **अकुरुत** कृतवती [थ]। **अहं तु** विजयवेगस्तु, **तस्य** सेनापते, **अप्रतिविधेयाम्** अप्रतिकार्याम्, **उपनताम्** उपस्थिताम्, ता **विपदं** विपत्तिम्, **अवलोक्य** दृष्ट्वा, **किंकर्तव्यतामूढः** कर्तव्यविवेकरहित, **स्तम्भित इव** कृतस्तम्भन इव, **मुहूर्त्तं** क्षणम्, **अतिष्ठं** स्थितवान्। **च** पुन, **प्रयत्नवशात्** आयासवशात्, **प्रत्यानीतधैर्यः** प्रत्यानीत—पुनरावाहित धैर्यं येन तादृश सन्, **इतस्ततः** अत्र तत्र, **धावता** भ्रमता, **हृदयेन** मनसा, **तस्य** सेनापते, **प्राणपरिरक्षणोपायान्** प्राणपरिरक्षणस्य—जीवनरक्षाया, **उपायान्** प्रतीकारान्, **मृगयमाणः** अन्विष्यन्, **सततं** सदैव, **आसन्नवर्त्यपि** पार्श्ववर्त्यपि, **व्याकुलतया** व्यग्रतया, **मुहूर्तं** क्षणम्, **स्मृतेः** स्मृतिपथात्, **अपसृतं** भ्रष्टम्, **पुरा** पूर्वम्, **परमेश्वरेण** परमेश्वरतुल्यप्रभावेण भवता, **प्रहितं** प्रेषितं, तत्, **वालारुणं** तन्नामकम्, **अङ्गुलीयकम्** अङ्गुलिभूषणम्, **झटिति** शीघ्रम्, **अस्मर** स्मृतवान्। **च** पुन, **उच्छ्वसितहृदयः** उद्वलितहृदय सन्, तत् अङ्गुलीयकम्, **बहुप्रकार** बहव प्रकारा यस्मिंस्तादृश यथा स्यात् तथा, **अभिनन्द्य** स्तुत्वा, **आदरकृतप्रणामः** आदरेण न तूपेक्षया कृत प्रणामो नमस्कारो येन तादृश, **दक्षिणेन** वामेतरेण, **पाणिना** हस्तेन, **उदक्षिपम्** उत्क्षिप्तवान्। **च** पुन, **आक्षेपस्खलद्वाणिः** आक्षेपेण—रिपुकृतापमानेन, स्खलन्ती—स्खलनमाश्रयन्ती, वाणी—वचन यस्य तादृश, **तत्क्षणं** तत्कालम्, **अरातिवाणोन्मथितकेतुच्छत्रकार्मुकम्**

अथ तस्य संनिहितदीपिकाखण्डकरदण्डताडिताः कोपेनेव प्रजज्वलुः प्राज्यतेजसो मणयः, प्रचिक्षिपुश्च दिङ्मुखेषु क्षेपीयः कटाक्षानिव दीर्घारुणानंशून् [न]। तैश्च प्रभापीतचन्द्रातपैः समन्ततः परामृष्टमभिनवार्ककिरणस्पृष्टमिव कुमुदकाननं सद्य इव निद्रया प्रत्यपद्यत प्रतिपक्षसैन्यम्, उद्दामदानपङ्कलमानीव नोद्धर्तुमङ्कुशानि शेकुरनेकपकपोलकूटेभ्यो निषादिनः, सुराङ्गनादर्शनोपारूढमदेव सद्योऽमुकुलायत दृष्टिः सुभटानाम्, परिशिथिलकन्धरासंधीनि शिरांसि योधानाम्, कृतकचग्रहकालदूताकृष्यमाणानीव शनैः शनैरवनेमुः परिशिथिलकन्धरासंधीनि शिरांसि योधानाम्, विघटितमुष्टिबन्धविगलितासयश्च कृपाणिकाग्रहणस्पृहयेव निपेतुर्जघनपार्श्वेषु प्रहारदानाय दूरोत्क्षिप्ता दक्षिणपाणयः पादातस्य, अर्धावकृष्टस्रस्तकार्मुकनिरस्ताश्चार्धपथे एवाधोमुखीवभूवुरप्राप्तशरव्यात्रपयेव सायका धनुष्मताम्, दृष्टसुरवधूविभ्रमाविर्भूतमदनार्तानामिव प्रावर्तन्त जम्भिका मुखेषु रथारोहाणाम्, स्वप्नदृष्टाचिरविमुक्तोद्बाष्पनिजजायाजनितदुःखानामिव प्रसस्रुरायतानि श्वसितान्यश्ववाराणाम्, श्रवणप्रविष्टारातिसिंहनादमुहूर्तविस्फा-

---

पुन वाडवार्चिषा वडवानलज्वालया, समुद्रोर्मिरिव समुद्रतरङ्ग इव [ध]॥ अथ अङ्गुलीयकधारणानन्तरम्, तस्य अङ्गुलीयकस्य, प्राज्यतेजसः प्रचुरतेजस , मणय , प्रजज्वलुः प्रज्वलन्ति स्म, कीदृशा· केनेव ? सन्निहितदीपिकाखण्डकरदण्डताडिताः सन्निहिताना–पार्श्वस्थितानाम्, दीपिकाना–प्रदीपानाम्, य खण्डः–समूह·, तदीयकरदण्डै·–हस्तदण्डाभेदेनाध्यवसीयमानकिरणदण्डै , ताडिता –आहता , अत एव कोपेनेव ताडनजन्यक्रोधेनेवेति प्रज्वलनहेतूत्प्रेक्षा। च पुन , दिङ्मुखेषु दिङ्नायिकामुखेषु, नायकविधया कटाक्षानिव, क्षेपीयः अतिशीघ्रम्, दीर्घारुणान् दीर्घान्–आयतान्, अरुणाश्च, अंशून् किरणान्, प्रचिक्षिपुः प्रक्षिप्तवन्त [न]। च पुन , प्रभापीतचन्द्रातपैः प्रभया–कान्त्या, पीत , चन्द्रातप –चन्द्रिका यैस्तादृशै , तैः मणिकिरणै , समन्ततः सर्वत , परामृष्टं स्पृष्टम्, प्रतिपक्षसैन्यं शत्रुसैन्यम्, अभिनवार्ककिरणस्पृष्टम् अभिनवस्य–उदयकालिकस्य, अर्कस्य–सूर्यस्य, किरणै स्पृष्टम्, कुमुदकाननं कुमुदवनमिव, सद्य एव तत्क्षणमेव, निद्रया प्रत्यपद्यत प्राप्यत, अभिभूतमिति यावत्। निषादिनः हस्तिपका , उद्दामदानपङ्कलग्नानीव उद्दामा–उद्गाढो यो दानपङ्क –मदकर्दम , तत्र लमानीव–मग्नानीव, अङ्कुशानि हस्तिनियामकास्त्रविशेषान्, अनेकपकपोलकुटेभ्य अनेकपाना–हस्तिनाम्, कपोलकुटेभ्य –गण्डमण्डलेभ्य , उद्धर्तुं निष्कासयितुम्, न शेकुः शक्नुवन्ति स्म। सुभटानां सुयोधानाम्, दृष्टि, सुराङ्गनादर्शनोपारूढमदेव सुराङ्गनानां–देवाङ्गनानाम्, दर्शनेन–अवलोकनेन, उपारूढ –उद्भूत , मद –व्यामोहो यस्यास्तादृशीव, सद्यः तत्क्षणम्, अमुकुलायत समकुचत्। परिशिथिलकन्धरासन्धीनि परिशिथिल –अतिशिथिल , कन्धरासन्धि –ग्रीवासन्धिर्येषा तादृशानि, योधानां सुभटानाम्, शिरांसि मस्तकानि, कृतकचग्रहकालदूताकृष्यमाणानीव कृत कचग्रह –केशाकर्षण यैस्तादृशै , कालदूतै –यमराजदूतै , आकृष्यमाणानीव–कृताकर्षणानीव, शनैः शनैः मन्द मन्दम्, अवनेमुः अवनमन्ति स्म। च पुन , विघटितमुष्टिबन्धविगलितासयः विघटित –विश्लिष्टो यो मुष्टिबन्ध –अङ्गुलिसन्निवेश , तेन विगलिता –स्खलिता , असय –कृपाणा येभ्यस्तादृशा , प्रहारदानाय प्रहारकरणाय, दूरोत्क्षिप्ताः दूरमुत्पातिता , पादातस्य पादगामिसैनिकसमूहस्य, दक्षिणपाणयः दक्षिणहस्ता , कृपाणिकाग्रहणस्पृहयेव कर्तरिकाग्रहणकामनयेव, जघनपार्श्वेषु कटिपुरोभागनिकटेषु, निपेतुः निपतिता । च पुन , अर्धावकृष्टस्रस्तकार्मुकनिरस्ताः प्राग् अर्धम् अवकृष्टानि–आकृष्टानि, पश्चात् स्रस्तानि–स्खलितानि यानि कार्मुकाणि–धनूषि तेभ्यो निरस्ता –स्खलिता , धनुष्मतां धनुर्धारिणाम्, सायकाः बाणा , अप्राप्तशरव्याः अप्राप्तलक्ष्या , अर्धपथ एव अर्धमार्ग एव, अधोमुखीवभूवुः अधोमुखीभूता । पुन दृष्टसुरवधूविभ्रमाविर्भूतमदनार्तानामिव दृष्टै –अवलोकितै , सुरवधूना–देववधूनाम्, विभ्रमै –विलासै , आविर्भूतेन–प्रकटितेन मदनेन–कामेन, आर्तानामिव–पीडितानामिव, रथारोहाणां रथारूढसैनिकानाम्, मुखेषु जम्भिकाः–मुखविकाशा , प्रावर्तन्त प्रवर्त्तन्ते स्म। पुन· स्वप्नदृष्टाचिरविमुक्तोद्बाष्पनिजजायाजनितदुःखानामिव स्वप्नदृष्टाभि –स्वप्नावस्थाऽवलोकिताभि , अचिरविमुक्तोद्बाष्पाभि –तत्क्षणविगलितोद्गताश्रुभि , निजजायाभि –स्ववधूभि , जनितम्–अनुभावितं दु खं येषां तादृशानामिव, अश्ववाराणाम् अश्वारोहिसैनिकानाम्, आयतानि दीर्घाणि, श्वसितानि नि श्वासा , प्रसस्रुः प्रसरन्ति स्म। पुनः श्रवणप्रविष्टारातिसिंहनादमुहूर्तविस्फारितापि श्रवणयो·–कर्णयो , प्रविष्टै , अरातीनां–शत्रूणाम्, सिंहनादै·–सिंहनादसदृशनादै

अत्रान्तरे लब्धरोषनिर्यातनावसराणि 'हत हत, उपसर्पतोपसर्पत, गृह्णीत गृह्णीत' इत्यनवरतकृतकोलाहलानि बद्धवेगद्विरदपृष्ठशारिदोलायमानसकलसायासप्रासपूलानि चलितरथचक्रचीत्कारचकितशाकिनीचक्रवालार्घावलोकितान्युद्गूर्णकृपाणपादातपादपातकम्पितधराण्यधावन्त सर्वतोऽस्मत्सैन्यकानि [ब] ॥

सेनाधिपस्तु तस्य महात्मनस्त्रिभुवनाभिभाविना भुजवीर्येण निर्व्याजमावर्जितमनास्तानि तथाविधप्रकटितसंरम्भाणि सर्वतः प्रधावितान्यवलोक्य संभ्रमोत्क्षिप्तबाहुयुगलो गद्गदिकागृह्यमाणगलनिर्गलदपर्याप्ताक्षरं 'रे रे स देवस्योत्तरकोशलेश्वरस्य पादपङ्कजेभ्यः शपते, योऽस्मै कुप्यति' इति स्वशक्त्या व्याहरन् पुनः पुनरादिष्टसूतसत्वरप्रवर्तितरथ्येन रथेन तं प्रदेशमागच्छत् [भ]। अद्राक्षीच्च तं समासन्नदीपिकालोकप्रकाशितमासक्तसान्द्रसमररेणुधूसराभिरामवपुषम्, औषधीनाथमिव पार्वणमस्तपर्वतप्रस्थे पृथुनि रथपृष्ठे पर्यस्तम्,

---

**टिप्पनकम्**—रथ्या-अश्वाः [भ]। तापिच्छं-काकतुण्डिका [म]।

---

त्सङ्गं रथमध्यम्, **अगमत्** गतवान् [फ] ॥ **अत्रान्तरे** अस्मिन्नवसरे, **अस्मत्सैन्यकानि** अस्मत्सैन्यसमूहा, **सर्वतः** सर्वदिक्षु, **अधावन्त** धावन्ते स्म, कीदृशानि? **लब्धरोषनिर्यातनावसराणि** लब्ध-प्राप्त., रोषेण-क्रोधेन, निर्यातनाया-शत्रुपीडनाया, अवसरो यैस्तादृशानि, पुन **हत हत** मारयत मारयत, **उपसर्पत उपसर्पत** उपगच्छत उपगच्छत, शत्रूनिति शेष, **गृह्णीत गृह्णीत**, अस्त्राणीति शेष, **इति** इत्थम्, **अनवरतकृतकोलाहलानि** अनवरतं-निरन्तरम्, कृत कोलाहलो यैस्तादृशानि, पुन **बद्धवेगद्विरदपृष्ठशारिदोलायमानसकलसायासप्रासपूलानि** बद्धवेगाः-श्रितत्वरा, ये द्विरदा-हस्तिन, तेषा पृष्ठशारिषु-पृष्ठाधिष्ठितपर्याणेषु, दोलायमानानि-सञ्चलन्ति, सकलाना समस्तानाम्, सायानां बाणानाम्, आसाना-विक्षेप्यास्त्रविशेषाणाम्, प्रासाना-कुन्तानाम्, पूलानि-भारा येषु तादृशानि, पुन **चलितरथचक्रचीत्कारचकितशाकिनीचक्रवालार्घावलोकितानि** चलितानि यानि रथचक्राणि-रथसमूहा, तेषां चीत्कारेण-ध्वनिविशेषेण, चकितं-विस्मितम्, शाकिनीना-देवीविशेषाणाम्, यच्चक्रवालं-समूहस्तेन, अर्घम्, अवलोकितानि-दृष्टानि, पुन **उद्गूर्णकृपाणपादातपादपातकम्पितधराणि** उद्गूर्णा-उत्थापिता, कृपाणा-खड्गा येन तादृशस्य, पादातस्य-पदगामिसैनिकसमूहस्य, पादपातेन-चरणाघातेन, कम्पिता-आन्दोलिता, धरा-पृथ्वी यैस्तादृशानि [ब] ॥

**सेनाधिपस्तु** सेनानायकस्तु, **पुनः पुनः** वारं वारम्, **आदिष्टसूतसत्वरप्रवर्त्तितरथ्येन** आदिष्ट-आज्ञप्तो य, सूत-सारथि, तेन सत्वरं-शीघ्रम्, प्रवर्तितौ-प्रेरितौ, रथ्यौ-अश्वौ यस्य तादृशेन रथेन, **तं प्रदेशं** यत्र कुमार आसीदित्यर्थ, **आगच्छत्** आगतवान्। कीदृश? **महात्मनः** महिमशालिन, **तस्य** नृपकुमारस्य, **त्रिभुवनाभिभाविना** जगत्त्रयविजयिना, **भुजवीर्येण** बाहुविक्रमेण, **निर्व्याजं** निष्कपट यथार्थमिति यावत्, **आवर्जितमनाः** हृतहृदय, पुन **तथाविधप्रकटितसंरम्भाणि** तथाविधम्-उक्तप्रकारं यथा स्यात् तथा, प्रकटित-आविष्कृत, सरम्भ-वेग उत्साहो वा यैस्तादृशानि, सर्वत, **प्रधावितानि** अतिसत्वरं गतानि, **तानि** सैनिकानि, **अवलोक्य** दृष्ट्वा, **सम्भ्रमोत्क्षिप्तबाहुयुगलः** वेगोत्थापितभुजयुगल, किं कुर्वन्? **गद्गदिकागृह्यमाणगलनिर्गलदपर्याप्ताक्षरं** गद्गदिकया-शोकादिजन्याव्यक्तोच्चारणक्रियया, गृह्यमाणात्, गलात्-कण्ठात्, निर्गलन्ति-निस्सरन्ति, अपर्याप्तानि-अपरिपूर्णानि, अक्षराणि यस्मिंस्तादृशं यथा स्यात् तथा, **रे रे** इति सम्भ्रमद्योतकम्, **उत्तरकोशलेश्वरस्य** कोशलराष्ट्रोत्तरविभागेश्वरस्य, **देवस्य** राज्ञ, **पादपङ्कजेभ्यः** चरणकमलेभ्य., स शपते, य, **अस्मै** नृपकुमाराय, **कुप्यति** कोप करोति, इति **स्वशक्त्या** स्वसामर्थ्येन, **व्याहरन्** ब्रुवन् [भ]। **च** पुन, **तं** नृपकुमारम्, **अद्राक्षीत्** दृष्टवान्। कीदृशम्? **समासन्नदीपिकालोकप्रकाशितं** समासन्नै-सन्निकटै, दीपिकालोकै-दीपवाहकजनै, यद्वा समासन्नाया-पार्श्ववर्त्तिन्या, दीपिकाया, आलोकै-प्रभाभि, प्रकाशितम्, पुन **आसक्तसान्द्रसमररेणुधूसराभिरामवपुषम्** आसक्तै-सलग्नै, सान्द्रै-निविडै, समररेणुभि-सङ्ग्रामोद्भूतधूलिभि., यो धूसर-किञ्चित्पाण्डुवर्णं, तेन अभिरामम्-मनोहरम्, वपु-शरीरं यस्य तादृशम्, पुन **अस्तपर्वतप्रस्थे** अस्तपर्वतस्य अस्ताचलस्य, प्रस्थे-शिखरे, **पार्वणं** पूर्णिमासम्बन्धिनम्, **औषधीनाथमिव** चन्द्रमिव, **पृथुनि** विशाले, **रथपृष्ठे**

आसादितविजयरिपुदर्शनपरिजिहीर्षयेव निमिषितेक्षणारविन्दम्, आजिशिपिषसुभटजीवितसंजिहीर्षायातयम-दर्शनागतया यमुनयेवात्यन्तविकटतरङ्गया भ्रुकुट्याऽन्धकारितललाटभित्तिम्, उपरि रिपुशिलीमुखासारेणाधस्ताच्च रणरससरोमाञ्चजालकेन जर्जरितमुच्छ्वसितमिव मूर्च्छान्धकारमुचितप्रतापिच्छनीलमसृणं कालायसकवचमुर-स्थलेनोद्वहन्तम्, उत्खातचापयष्टिना वामेन दक्षिणेन च स्फुरितदीर्घनखकिरणेन तत्क्षणभग्नकरवालान्वेषिणेव पाणिना विराजमानम्, उपान्तकेतुस्तम्भविन्यस्तदेहभारैश्च निद्रापूरमुकुलकण्ठनालैरात्मयोधैः परिवृतं प्रफुल्लसरः-कुमुदवनमध्यवर्तिनमिव प्रतिमादिनकरम्, अव्याजशौर्यावर्जितहृदयैरागत्यागत्य वीरसमूहैर्बध्यमानव्रणमो-द्भ्रान्तरुधिरबिन्दुनिकरं कुमारम् [म], उपजातविस्मयश्च निश्चलस्निग्धतारकेण चक्षुषा सुचिरमवलोक्य तद्व-लोकनप्रीतमनसा समीपवर्तिना सामन्तलोकेन सह बहुप्रकारमारब्धतच्छौर्यगुणस्तुतिस्तस्मिन्नेव प्रदेशे मुहूर्त-मात्रमतिष्ठत्। तदनुतत्त्वाभ्यसनकुतूहलश्च निपुणतरमपि व्यापारितया दृष्ट्या यदा प्रतिपक्षपक्षे कमपि पुरुषं

---

रणप्रस्थानाग्रे पर्यस्तं क्षेत्रम्; पुनः आसादितविजयरिपुदर्शनपरिजिहीर्षयेव आसादितः-प्राप्तः विजयो येन तादृशस्य रिपोः-शत्रोः यद् दर्शनम् तत्परिजिहीर्षयेव-तत्परिहारेच्छयेव निमिषितेक्षणारविन्दं निमीलितनयनार विन्दम्; पुनः भ्रुकुट्या वैरोपरिलग्नललितरोमराज्या अन्धकारितललाटभित्तिम् अन्धकारिता-अन्धकारव्याप्तिता, ललाटभित्तिः-ललाटस्थलं यस्य तादृशम्, कीदृश्या? आजिशिपिषसुभटजीवितसंजिहीर्षायातयमदर्शनागतया आजौ-संग्रामे शिपिषाः-स्रस्ता ये सुभटाः-सुयोधाः तेषां यानि जीवितानि-प्राणाः तत्संजिहीर्षया-तत्संहरणेच्छया आया-तस्य-आगतस्य यमस्य-यमराजस्य दर्शनाय-अवलोकनाय आगतया-उपस्थितया यमुनयेव तदाख्यनद्येव अत्यन्त विकटतरङ्गया अत्यन्ता-रचिताः विकटाः-विषमाः तरङ्गा यया तादृश्या पुनः कालायसकवचं लोहनिर्मितं कवचम्, उरःस्थलेन वक्षःस्थलेन उद्वहन्तं धारयन्तम्, कीदृशं कवचम्? उपरि ऊर्ध्वभागे रिपुशिलीमुखासारेण रिपुशिलीमुखानां-बाणानां आसारेण-धारापातेन च पुनः अधस्तात् अधोभागे रणरससरोमाञ्च जालकेन रणरसेन-संग्रामप्रेम्णा सञ्जाते यो रोमाञ्चः-पुलकः तज्जालकेन-तत्पुञ्जेन जर्जरितं छिद्रीकृतम् अत एव उच्छ्वसितम् इव, मूर्च्छान्धकारमिव मूर्च्छाजन्यान्धकारमिवेत्युत्प्रेक्षा पुनः उचितप्रतापिच्छनीलम् उचित-उत्तमो यस्तापिच्छः-तमालः तद्वन्नीलम्, पुनः मसृणं स्निग्धम्; पुनः कीदृशं कुमारम्? उत्खातचापयष्टिना उत्खाता-आकृष्टा चापयष्टिः-धनुर्दण्डो येन तादृशेन वामेन दक्षिणेतरेण पाणिना हस्तेन च पुनः स्फुरितदीर्घनख किरणेन स्फुरिताः-व्याप्ताः दीर्घाः नखकिरणाः-नखकान्तयो यस्मिन् तादृशेन, तत्क्षणभग्नकरवालान्वेषिणेव तत्क्षण-भग्नस्य, भग्नः-खण्डशः पतितो यः करवालः-खड्गः तदन्वेषिणेव-तदन्वेषणव्यापृतेनेव दक्षिणेन पाणिना हस्तेन विराजमानं शोभमानम्; च पुनः उपान्तकेतुस्तम्भविन्यस्तदेहभारैः उपान्तेषु-निकटस्थेषु केतुस्तम्भेषु-ध्वज दण्डेषु, विन्यस्तः-न्यस्तः देहभारो यैस्तादृशैः पुनः निद्रापूरमुकुलकण्ठनालैः निद्रया घूर्णमानानि-प्रकम्पमानानि मुकुलायितानि कण्ठनालानि येषां तादृशैः आत्मयोधैः स्वकीयसुभटैः परिवृतं परिवेष्टितम्, अत एव प्रफुल्लसरः-कुमुदवनमध्यवर्तिनं प्रफुल्लं-विकसितम् यद् सरःकुमुदवनं-सरोवरकुमुदवनम् तन्मध्यवर्तिनम् प्रतिमादिनकरमिव सूर्यप्रतिबिम्बमिव, च पुनः, अव्याजशौर्यावर्जितहृदयैः अव्याजेन-वास्तविकेन शौर्येण आवर्जितम्-वशीकृतमिव हृदयं येषां तादृशैः वीरसमूहैः भटसमूहैः आगत्य आगत्य उपस्थायोपस्थाय बध्यमानव्रणमोद्भ्रान्तरुधिरबिन्दुनिकरं बध्यमानाः-बद्धाः ये व्रणाः-क्षताः बध्यमानानां-बन्धनानिर्यातानाम्, रुधिरबिन्दूनां-शोणितबिन्दूनाम्, निकरः-समूहो यस्य तादृशम् [म]। च पुनः उपजातविस्मयः उत्पन्नाश्चर्यः निश्चलस्निग्धतारकेण निश्चला-निः स्पन्दाः स्निग्धा-आर्द्रा च तारका-कनीनिका यस्मिन् तादृशेन चक्षुषा नेत्रेण सुचिरम् अतिदीर्घकालम् अवलोक्य दृष्ट्वा तदवलोकनप्रीत मनसा तदवलोकनप्रहृष्टचेतसा समीपवर्तिना पार्श्ववर्तिना सामन्तलोकेन अधिपतिजनेन सह बहुप्रकारम् अनेकप्रकारं यथा स्यात् तथा आरब्धतच्छौर्यगुणस्तुतिः आरब्धा-प्रारब्धा, तच्छौर्यगुणानां-तत्पराक्रमगुणानाम् स्तुतिः-प्रशंसा येन तादृशः तस्मिन्नेव प्रदेशे रणकुमारावस्थितिप्रदेशे मुहूर्तमात्रं क्षणमात्रम्, अतिष्ठत् स्थितवान् स्थितवानिति शेषः। च पुनः तदनुतत्त्वाभ्यसनकुतूहलः रणकुमारतत्त्वाभ्यासे जातकुतूहलः-जातोत्कण्ठः निपुणतरमपि

चैतन्यालिङ्गितं नाद्राक्षीत्, तदाऽस्य चामरग्राहिणीमप्राक्षीत्—'बालिके! कथय कोऽयम्, कस्य वाऽपत्यम्, किमभिधानः, किंनिमित्तमनपेक्षितात्मविनिपातः पतङ्ग इव पावके सहसैवास्मत्सैन्ये प्रविष्टः, किमर्थमसमर्थसहायेनानेन साहसप्रायमिदमतिदुष्करं कर्माध्यवसितम्, कया प्रत्याशया शक्तेनापि शत्रुवधकर्मणि न कृतो दिवस एवाभियोगः, किं फलमभिलष्य निर्व्याजपौरुषेणाप्यङ्गीकृतः क्षुद्रक्षत्रियलोकसूत्रितः सौप्तिकयुद्धमार्गः' [य]। सैवमापृष्टा सेनाधिपेन किमपि ध्यात्वा परामृष्टनयनबाष्पसलिला विलोक्याभिमुखमन्तर्दुःखावेगपिशुनमत्यायतं निःश्वस्य च शनैरवादीत्—'महाभाग! किं कथयामि मन्दभाग्या, कीदृशोऽयमिदानीं कथ्यते, गता खल्वस्तमस्य कथा, कथ्यमानापि कीदृशी भवत्येतदवस्थस्यास्य पूर्वावस्था, तथापि श्रूयताम्—एष खल्वशेषद्वीपावनीपालमौलिमालामलनदुर्ललितपादयुगलस्य युगायतभुजप्राकाररक्षितनिजक्षितेरवधीरितविषधरेन्द्रोग्रवदननिःश्वासविषवेगेनागणितकालकूटज्वालाटोपेनानपेक्षितरामविशिखशिखिशिखाडम्बरेणाविज्ञात-

---

अवधानातिशयपूर्वकमपि यथा स्यात् तथा, **व्यापारितया** प्रेरितया, **दृष्ट्या** चक्षुषा, **यदा** यस्मिन् काले **प्रतिपक्षपक्षे** शत्रुपक्षे, **कमपि** एकमपि, पुरुष, **चैतन्यालिङ्गितं** चैतन्यवन्तम्, न, **अद्राक्षीत्** दृष्टवान्, तदा **अस्य** राजकुमारस्य, **चामरग्राहिणीं** चामरवाहिनीं दासीम्, **अप्राक्षीत्** पृष्टवान्, किमित्याह–**बालिके!** भो बाले!, **कथय** ब्रूहि, **कोऽयम्** अय राजकुमार क ?, **वा** अथवा, कस्य **अपत्यं** पुत्र ?, **किमभिधानः** किंनामा ?, **किंनिमित्तं** कस्माद्धेतो ?, **पावके** अग्नौ, पतङ्ग इव, **अनपेक्षितात्मविनिपात** अनपेक्षित –उपेक्षित, आत्मविनिपात –स्वविनाशो येन तादृश, **सहसैव** अविविच्यैव, **अस्मत्सैन्ये** अस्मत्सेनामध्ये, **प्रविष्टः** आपतित, **किमर्थम्** किमुद्दिश्य, **असमर्थसहायेन** असमर्थ –शक्तिशून्य, सहायो यस्य तादृशेन, **अनेन** राजकुमारेण, **साहसप्रायम्** अविवेकप्रयुक्तम्, **अतिदुष्करम्** अत्यन्तकठिनम्, इदं, **कर्म** कार्यम्, **अध्यवसितं** कर्तुं विचारितम् ?, कया **प्रत्याशया** सम्भावनया, **शत्रुवधकर्मणि** रिपून्मूलनात्मककार्ये, **शक्तेन** समर्थेनापि, **दिवस एव** दिनमध्य एव, **अभियोगः** सङ्घर्ष, न कृत ?, **किं फलं** कं परिणामम्, **अभिलष्य** उद्दिश्य, **निर्व्याजपौरुषेणापि** वास्तविकपराक्रमशालिनापि, अनेनेति शेष, **क्षुद्रक्षत्रियलोकसूत्रितः** क्षुद्रै–राजनीतिज्ञानशून्यै, क्षत्रियलोकै –क्षत्रियजनै, सूत्रित –रचित, **सौप्तिकयुद्धमार्गः** सुप्तिकालिकस्य–रात्रिकालिकस्य, युद्धस्य, मार्ग –रीति, **अङ्गीकृतः** स्वीकृत ? [य]। **एवम्** अनेन प्रकारेण, उक्तप्रकारेणेत्यर्थ, **सेनाधिपेन** सेनापतिना, **आपृष्टा** समन्ताज्जिज्ञासा ज्ञापिता, **सा** चामरग्राहिणी बालिका, **किमपि** किञ्चित्, **ध्यात्वा** विचिन्त्य, **परामृष्टनयनबाष्पसलिला** परामृष्टानि–प्रोञ्छितानि, नयनयो, बाष्पसलिलानि–अश्रुजलानि यया तादृशी सती, **अभिमुखं** सम्मुखम्, **विलोक्य** निरीक्ष्य, **च** पुन, **अन्तर्दुःखावेगपिशुनम्** हार्दिकवेदनातिशयसूचकम्, **अत्यायतम्** अतिदीर्घं यथा स्यात् तथा, **निःश्वस्य** नि श्वास कृत्वा, **शनैः** मन्दम्, **अवादीत्** उक्तवती। किमित्याह–**महाभाग!** हे महोदय!, **मन्दभाग्या** तुच्छभाग्या, अहमिति शेष, **किं कथयामि** किमुत्तरयामि, अतिदु खाकुलतया न किमपि वक्तुमर्हामीत्यर्थ। **इदानीम्** अस्मिन् विपदवसरे, **अयं** नृपकुमार, **कीदृश**• कथम्भूतावस्थ, **कथ्यते** वर्ण्यते, **खलु** निश्चयेन, **अस्य** राजकुमारस्य, **कथा** वार्ता, **अस्तं** विनाशम्, **गता** प्राप्स्यति। **एतदवस्थस्य** एषा मरणरूपा, अवस्था यस्य तादृशस्य, **अस्य** नृपकुमारस्य, **कथ्यमानापि** वर्ण्यमानापि, **पूर्वावस्था** पुरातनवृत्तम्, **कीदृशी** कथम्भूता, दु खावहेत्यर्थ, **भवति** सम्पद्यते। **तथापि** तादृश्यपि, **श्रूयतां** श्रवणगोचरीक्रियताम्। **एषः** अयम्, **खलु** निश्चयेन, **सिंहलद्वीपभर्तुः** सिंहलाख्यो यो द्वीप –जलमध्यवर्तिस्थलप्रदेश, तद्भर्तु –तदधिपते, **महानरेन्द्रस्य** महानृपते•, अतिसमृद्धनृपतेरित्यर्थ, **चन्द्रकेतोः** तन्नामकस्य, **आत्मजः** औरसपुत्र, **समरकेतुः** तत्सञ्ज्ञक, अस्तीति शेष, **नामेति** वाक्यालङ्कारे। कीदृशस्य ? **अशेषद्वीपावनीपालमौलिमालामलनदुर्ललितपादयुगलस्य** अशेषा –समस्ता ये, द्वीपाना–जलमध्यवर्तिस्थलप्रदेशानाम्, अवनीपाला –नृपा, तन्मौलिमालाना–तन्मस्तकस्थमालानाम्, तन्मुकुटपङ्क्तीना वा, मलनेन–सम्पर्केण, दुर्ललित–सङ्घर्षणदु खेन, ललित–सुन्दरम्, पादयुगल–चरणद्वय यस्य तादृशस्य, पुन **युगायतभुजप्राकाररक्षितनिजक्षितेः** युगो नाम वृषस्कन्धारोप्यरथावयवविशेष, तद्वद् आयतौ–दीर्घौ यौ, भुजौ–बाहू, तद्रूपेण

पारवश्यदहनदाहवेदनायोगेन जलनिधिनाऽप्यसोढनौतलपरिसृप्तप्रयाणसंमर्दस्य समदसैन्यकरिविषाणकोटिविघटितत्रिकूटकटकभित्तेरवस्कन्दपातभीतेनेव सर्वदा शर्वरीषु विहितप्रचारेण नक्तञ्चरचक्रवर्तिना लङ्केश्वरेणापि सततमभिशङ्कितोत्साहस्य सिंहलद्वीपभर्तुर्महानरेन्द्रस्य चन्द्रकेतोरात्मजः सर्वातिशायिना भुजवीर्यविलसितेनास्त्रशिक्षाकौशलेन च विस्मापितसकलपार्थिवः पार्थवत् पृथिव्यामेकधन्वी समरकेतुर्नाम [२]। सोऽयं महाबलतया बाल एवाधिगतयौवराज्याभिषेकः सकलसागरान्तरालद्वीपविजिगीषया गतोऽपि दूरमतिसत्वरः पितुराज्ञया राज्ञोऽस्य कुसुमशेखरस्य साहाय्यकं कर्तुमासन्नवर्तिभिः कतिपयैरेव नृपतिभिरनुगम्यमानः काञ्चीमनुप्राप्तः। स्थितश्चात्र पञ्चषाण्यपि दिनानि दूनचेतोवृत्तिः, अद्य तु प्रातरेव हेतुना केनापि विधृतोदारशृङ्गारवेषः परि

---

प्राकारेण—दुर्गेण समावृतलङ्केश्वरः रक्षिता—पालिता निशाचराः—राक्षसा येन तादृशस्य; पुनः जलनिधिनापि समुद्रेणापि असोढनौतलपरिसृप्तप्रयाणसम्मर्दस्य असोढः—असह्यमानः नौतलस्य—नौकातलस्य परिसृप्तस्य—प्रचलितस्य प्रयाणस्य—प्रस्थानस्य सम्मर्दः—आक्रमणं यस्य तादृशस्य समुद्रयात्रोपक्रमणेऽपि विजितसेनस्य; विशेषेण जलधिना ! अवधीरितविषधरेन्द्रोग्रफणमणिश्वासविषवेगेन अवधीरित—तिरस्कृतः विषधरेन्द्रस्य—महासर्पस्य वासुकिप्रभृतेः पातालस्थितनागस्येत्यर्थः उग्रो फणमणिःश्वासविषवेग—भुजगनिःश्वासजनितविषवेगो येन तादृशेनापि पुनः अगणितकालकूटज्वालाटोपेन अगणितः—तुच्छत्वेनोपेक्षितः कालकूटस्य—"देवासुररणे देवैर्हतस्य पृथुमालिनः। दैत्यस्य रुधिराज्जातस्त्वश्वत्थाकारवान् द्रुमः ॥ निर्यासः कालकूटोऽस्य मुनिभिः परिकीर्तितः ॥" इत्यमरकोशटीकोक्तस्य विषविशेषस्य ज्वालाटोपः—ज्वालाविस्तारो येन तादृशेनापि पुनः अनपेक्षितरामविशिखशिखिशिखाडम्बरेण अनपेक्षित—उपेक्षितः रामस्य—दाशरथेः विशिखशिखिनः—बाणस्याग्नेः, शिखाडम्बर—ज्वालाविस्तारो येन तादृशेनापि पुनः अविज्ञातपारवश्यदहनदाहवेदनायोगेन अविज्ञात—अननुभूतः अवज्ञातेति पाठे—अवज्ञातः तिरस्कृतः पारवश्यस्य—पारवश्ये दाहवेदनाया—दाहजन्यदुःखस्य योगः—सम्बन्धो येन तादृशेनापि । पुनः कीदृशस्य चन्द्रकेतोः ! समदसैन्यकरिविषाणकोटिविघटितत्रिकूटकटकभित्तेः समदानां—मत्तानां सैन्यकरिणां—सैन्यसम्बन्धिहस्तिनाम् विषाणकोटिभिः—दन्ताग्रभागैः विघटिता—विभेदिता त्रिकूटस्य—लङ्काधिष्ठितत्रिकूटपर्वतस्य कटकभित्तिः—नितम्बभित्तिर्येन तादृशस्य; अत एव लङ्केश्वरेणापि रावणेनापि सततम् अनवरतम्, अभिशङ्कितोत्साहस्य अभिशङ्कितः आशङ्कितः उत्साहः—संग्रामोत्साहो यस्य तादृशस्य; कीदृशेन तेन ! अवस्कन्दपातभीतेनेव अवस्कन्दः—सैन्यविशेषस्थानम् तस्य—तद्युक्तसैन्यस्य यः पातः—आकस्मिकमाक्रमणम्, तद्भीतेनेव सर्वदा सर्वस्मिन् दिने शर्वरीषु रात्रिषु एव विहितप्रचारेण कृतसंचारेण अत एव नक्तञ्चरचक्रवर्तिना रात्रिचराधिपेन राक्षसस्वभावेऽपि स्वाभाविकेऽपि तदीयरात्रिचरत्वे हेतुविधया तद्भयोत्प्रेक्षाऽत्र बोध्या। कीदृशः समरकेतुः ! सर्वातिशायिना सर्वोत्कृष्टेन भुजवीर्यविलसितेन बाहुविक्रमविलसितेन च पुनः अस्त्रशिक्षाकौशलेन अस्त्रविद्यानैपुण्येन विस्मापितसकलपार्थिवः विस्मापिता—आश्चर्यमनुभाविताः सकलाः—समस्ताः पार्थिवाः—राजानो येन तादृशः पुनः पार्थवत् पार्थः—अर्जुनः तद्वत् पृथिव्यां जगति एकधन्वी अद्वितीयधनुर्धरः [२]। सः अनुपदवर्णितविक्रमः अयं पुरो दृश्यमानः कुमारः महाबलतया अतिपराक्रमशालितया, बाल एव बाल्यावस्थ एव अधिगतयौवराज्याभिषेकः अधिगतः—प्राप्तः यौवराज्याय यौवराज्यस्योचितराज्यकार्यकरणाधिकारार्थं अभिषेकः—विधिवत् स्नानं येन तादृशः सन् सकलसागरान्तरालद्वीपविजिगीषया सकला—समस्ता ये सागरान्तरालद्वीपाः—समुद्रमध्यस्थस्थलप्रदेशाः तज्जिगीषया—तज्जयेच्छया दूरं दूरस्थानम्, गतोऽपि प्राप्तोऽपि पितुः जनकस्य आज्ञया आदेशेन अस्य प्रत्यक्षभूतस्य कुसुमशेखरस्य तन्नामकस्य राज्ञः नृपस्य साहाय्यकं साहाय्यम् कर्तुम् आचरितुम्, आसन्नवर्तिभिः पार्श्ववर्तिभिः कतिपयैः परिमितैः नृपतिभिः राजभिः अनुगम्यमानः अनुसृतः काञ्चीं तन्नामकनगरीम् अनुप्राप्तः आगतः। च पुनः दूनचेतोवृत्तिः खिन्नमनोवृत्तिः; अत्र काञ्चीनगर्याम्, पञ्चषाण्यपि पञ्च वा षड् वेति पञ्चषाणि तान्यपि दिनानि स्थितः स्थितिमकार्षीत्। अद्य तु अस्मिन् दिने तु, प्रातरेव प्रभातकाल एव केनापि केनचित् हेतुना निमित्तेन विधृतोदारशृङ्गारवेषः विधृतः—परिगृहीतः उदारः—महान् शृङ्गारवेषः—शृङ्गाररसानुकूलवेषो येन

मितैरेव सह सुहृद्भिर्नरेन्द्रभवनोद्यानभूषणं गतः स्मरायतनम्, आसीनश्च तस्य द्वारदेशे विशन्तमनवरतमन्तरुपरतनिमेषेण चक्षुषा निरीक्षमाणो नगरनारीजनं स्थितो दिनमशेषम् [ल], अवसितायां च यात्रायामधिकतरमारूढगाढारतिः कारयित्वा **मकरकेतोः** पुरः सरोजिनीपत्रशयनम्, 'इहैव मयाद्य शयनीयम्' इत्युदीर्य विसर्जितासन्नपरिजनः केनापि विधिनातिवाह्य प्रदोषमागत्य चार्धरात्रसमये शिबिरमकस्मादेव सज्जीकृतसकलनिजबलः, 'कुमार! नायं क्रमो नयस्य' इति विनिवार्यमाणोऽपि मन्त्रिभिः, 'युवराज! विरम्यतामितो दुरध्यवसायात्' इति निरुध्यमानोऽपि बन्धुभिः, 'कल्याणिन्! अङ्गीक्रियतां यात्रालग्नम्' इति निवर्त्यमानोऽपि मौहूर्तिकैः, 'देव! प्रतिपाल्यतामनुपाति सैन्यम्' इति विज्ञाप्यमानोऽपि प्रधानलोकेन, 'विद्वन्! निवेद्यतां **कुसुमशेखरस्य**' इति वारं वारमभिधीयमानोऽपि विबुधवर्गेण, निर्गतः **काञ्च्याः**। आकृष्यमाणश्च व्यसनैषिणा पुरो विधिना प्रणिधिनेवानाप्तेन प्राप्तो भुवमिमामवस्थां च' [व]। इत्येवमावेदयन्त्यामेव तस्यामुपजातदुःखावेगेव प्रगलिततारका तनिमानमभजत रजनिः, अमरीभूतसुभटनिर्दयाश्लिष्टसुरवधूहारमुक्तमौक्तिक-

---

तादृश सन्, **परिमितैरेव** परिगणितैरेव, **सुहृद्भिः** मित्रै सह, **नरेन्द्रभवनोद्यानभूषणं** राजप्रासादनिकटस्थितारामालङ्करणभूतम्, **स्मरायतनं** कामदेवमन्दिरम्, **गतः** प्राप्त । **च** पुन, **तस्य** कामदेवमन्दिरस्य, **द्वारदेशे** अन्त प्रवेशप्रदेशे, **आसीनः** उपविशन्, **उपरतनिमेषेण** निवृत्तस्पन्दनेन, चक्षुषा, **अनवरतं** निरन्तरम्, **अन्तःविशन्तम्** अन्त प्रवेशं कुर्वन्तम्, **नगरनारीजनं** नागरिकस्त्रीजनम्, **निरीक्षमाणः** अवलोकमान, **अशेष** समस्तं, दिनम्, **स्थितः** स्थितिमकार्षीत् [ ल ]। **यात्रायां** कामदेवमन्दिरयात्रोत्सवे, **अवसितायां** समाप्तायाम्, **अधिकतरम्** अत्यधिकं यथा स्यात् तथा, **आरूढगाढारतिः** आरूढा –उत्पन्ना, गाढा–सान्द्रा, अरति –खेदो यस्य तादृश, **मकरकेतोः** कामदेवस्य, **पुरः** अग्रे, **सरोजिनीपत्रशयनं** कमलिनीपत्रमयीं शय्याम्, **कारयित्वा** निर्माप्य, **अद्य** अस्मिन् दिने, मया, **इहैव** अस्यामेव शय्यायाम्, **शयनीयं** शयनं कर्त्तव्यम्, **इत्युदीर्य** इत्युक्त्वा, **विसर्जितासन्नपरिजनः** दूरीकृतपार्श्ववर्तिपरिवार सन्, **केनापि** अनिर्वाच्येन दु खमयेनेत्यर्थ, **विधिना** प्रकारेण, **प्रदोषं** तद्रात्रिप्रथमभागम्, **अतिवाह्य** व्यतीत्य, **अर्धरात्रसमये** रात्रिमध्यभागे, **शिबिरं** सैन्यसन्निवेशस्थानम्, आगत्य, **अकस्मादेव** अकृतपूर्वविचारमेव, **सज्जीकृतसकलनिजबलः** सज्जीकृतं–सज्जितम्, सकल–समस्तम्, निजबलं-सैन्यं येन तादृश, **कुमार!** भो नृपकुमार!, **नयस्य** नीते, **अयं** रात्रौ युद्धारम्भरूप, **क्रमः** विधि, न, **इति** एवम्, **मन्त्रिभिः** सचिवै, **विनिवार्यमाणोऽपि** गमनान्निवर्त्यमानोऽपि, पुन युवराज!, **इत** अस्मात्, **दुरध्यवसायात्** असमीचीनोद्योगात्, **विरम्यतां** त्वया निवृत्यताम्, **इति** एवम्, **बन्धुभिः** भ्रात्रादिभि, **निरुध्यमानोऽपि** निवार्यमाणोऽपि, पुन **कल्याणिन्!** कल्याणशालिन्!, **यात्रालग्नं** युद्धार्थं प्रस्थाने शुभजनको राशीनामुदय, **अङ्गीक्रियतां** पर्यालोच्यताम्, तत्पर्यालोचनं विना न गम्यतामित्यर्थ, **इति** एवम्, **मौहूर्तिकैः** मुहूर्तज्ञै, **निवर्त्यमानोऽपि** अवरुध्यमानोऽपि, पुन **देव!** राजन्!, **अनुपाति** स्वानुगामि, **सैन्यं** सेनां, **प्रतिपाल्यता** प्रतीक्ष्यताम्, **इति** एवम्, **प्रधानलोकेन** प्रधानजनेन, **विज्ञाप्यमानोऽपि** निवेद्यमानोऽपि, पुन **विद्वन्!** विवेकशालिन्!, **कुसुमशेखरस्य** तत्सञ्ज्ञकस्य राज्ञ, **निवेद्यतां** विज्ञाप्यताम्, सर्वमुक्तपूर्वमिति शेष, **इति** एवम्, **विबुधवर्गेण** विज्ञवर्गेण, **अभिधीयमानोऽपि** उच्यमानोऽपि, **काञ्च्याः** तन्नाम्न्या नगर्या, **निर्गतः** निष्क्रान्त । **च** पुन, **अनाप्तेन** अविश्वस्तेन, **प्रणिधिनेव** चरजनेनेव, **व्यसनैषिणा** दु खाभिलाषिणा, **विधिना** दैवेन, **पुरः** अग्रे, **आकृष्यमाणः** बलादुपनीयमान, इमा, **भुवं** भूमिम्, **अवस्थां** दुर्दशा च प्राप्त [ व ]। **इति** इत्थम्, **तस्यां** बालिकायाम्, **आवेदयन्त्यामेव** कथयन्त्यामेव सत्याम्, **उपजातदुःखावेगेव** उत्पन्नवेदनातिशयेव, **प्रगलिततारका** नष्टतारका, **रजनिः** प्रकृतरात्रि, **तनिमानं** कार्श्यम् शेषावस्थामित्यर्थ **अभजत** प्राप्तवती । पुन **गगनतलम्** आकाशतल कर्तृ, **अमरीभूतसुभटनिर्दयाश्लिष्टसुरवधूहारमुक्तमौक्तिकविसरमिव** अमरीभूतै –युद्धे मृत्वा अमरतामापन्नै, सुभटै –सुयोधै, निर्दय–गाढ यथा स्यात् तथा, आश्लिष्टानाम्–आलिङ्गितानाम्, सुरवधूना–देवाङ्गनानाम्, हारेभ्य –मुक्तामाल्येभ्य,

लोहितायमानवपुरुष्णदीधितिः [ श ]। एवं च प्रवृत्ते प्रत्यूषसि विपक्षविजयाभिलाष इव विलीने तमसि, प्रसरति दिगन्तरेषु देवस्य प्रताप इव पातङ्गे महसि सहसैव प्रत्यबोधि सकलमपि तद्विरोधिसैन्यम्। आसावपि कुमारः प्रनष्टनिद्राविकारो 'वज्रायुध ! मा विषादं व्रज, विश्रब्धमेहि, न तावत् प्रहरामि यावच्च त्वया न प्रहृतम्' इत्यविशदाक्षरं पूर्ववासनावशेन व्याहरन् सुचिरनिद्राविमर्दजडपुटोदरमुदमीलयदीक्षण-युगलम्। अवलोक्य च पुरः परिवेष्टितरथमरातिलोकमात्मानं च तदवस्थमुपजातगुरुविषादो लज्जया पुनर्मोहान्धकारमविक्षत् [ ष ]।

सेनापतिरपि तेन तस्यातर्कितेनासंभावनीयेनादृष्टपूर्वेण प्रत्युज्जीवनेन जनितविस्मयः प्रहर्षमन्दतार-केणानन्दजलबिन्दुसेकादिव विकसता नयनारविन्दद्वयेनोद्भासमानस्तत्कालमासादितमहालाभमिव प्राप्तसकल-कल्याणमिव समृद्धाखिलकाममिव फलिताशेषगुरुजनाशिषमिव कृतार्थमात्मानं मन्यमानो मुहूर्तं स्थित्वा तस्मिन् क्षणे भयतरलेक्षणस्य विपक्षकक्षीकृतस्वामिदर्शनविषण्णबुद्धेरन्धीभूतसकलदिशः कान्दिशीकस्य शत्रुलोक-

टिप्पनकम्—कान्दिशीकः-भयद्रुतः [स]।

इत्यर्थ [ श ]। **एवं च** अनेन प्रकारेण च, **प्रत्यूषसि** प्रभाते, **प्रवृत्ते** प्रारब्धे, **विपक्षविजयाभिलाष इव** रिपु-पराजयमनोरथ इव, **तमसि** अन्धकारे, **विलीने** नष्टे सति । पुन **देवस्य** भवत, **प्रताप इव** प्रभाव इव, **पातङ्गे** पतङ्ग -सूर्य , तत्सम्बन्धिनि, **महसि** तेजसि, **दिगन्तरेषु** दिङ्मध्येषु, **प्रसरति** विस्तारमासादयति सति, **सहसैव** शीघ्रमेव, **तद्विरोधिसैन्यं** तद्विपक्षसैन्यम्, **प्रत्यबोधि** अजागरीत् । **असौ** प्रकृत, **कुमारोऽपि** नृपात्मजोऽपि, **प्रनष्टनिद्राविकारः** क्षीणनिद्रादोष सन्, जागरित सन्निति यावत्, **वज्रायुध!** तत्संज्ञकसेनापते', **विषादं** खेदम्, **मा व्रज** न प्राप्नुहि । **विस्रब्धं** सविश्वास यथा स्यात् तथा, **एहि** आगच्छ । **तावत्** तावत्कालपर्यन्तम्, न **प्रहरामि** बाणप्रहारं करोमि, त्वया, **यावत्** यावत्कालपर्यन्तम्, न **प्रहृतं** प्रहार कृत , **इति** इत्थम्, **अविशदाक्षरम्** अवि-शदानि-अव्यक्तानि, अक्षराणि यस्मिंस्तादृश यथा स्यात् तथा, **पूर्ववासनावशेन** मूर्च्छाप्राक्कालिकसंस्कारवशेन, **व्याहरन्** कथयन्, **सुचिरनिद्राविमर्दजडपुटोदरं** सुचिरनिद्राया -चिरकालिकनिद्राया , विमर्देन-व्याप्त्या, जडं-निष्पन्दम्, पुटयो -नेत्रपुटयो , उदरं-मध्यं यस्य तादृशम्, **ईक्षणयुगलं** नेत्रद्वयम्, **उदमीलयत्** उन्मीलितवान् । **च** पुन , **पुरः** अग्रे, **परिवेष्टितरथं** परिवेष्टित -आक्रान्तो रथो येन, पक्षे यस्य तादृशम्, **अरातिलोकं** शत्रुजनम्, **आत्मानं च** स्वं च, **तदवस्थं** शत्रुमध्यपतितम्, **अवलोक्य** दृष्ट्वा, **उपजातगुरुविषादः** उत्पन्नमहाविषाद , **लज्जया** लज्जावशेन, पुन **मोहान्धकारं** मूर्च्छारूपान्धकारम्, **अविक्षत्** प्रविष्टवान्, प्राप्तवानित्यर्थ [ ष ] ॥

**सेनापतिरपि** व्रजायुधोऽपि, **मुहूर्त्तं** क्षणम्, **स्थित्वा** स्थिरो भूत्वा, **तस्मिन्** दुर्घटनामये, क्षणे, **समन्तात्** सर्वत , **अभयप्रदानपटहं** शत्रुसैनिकभयाभावद्योतकवाद्यविशेषम्, **शत्रुलोकस्य** शत्रुजनस्य, **आश्वसनार्थम्** आश्वा-सनफलकम्, **अदापयत्** दापितवान्, वादितवानित्यर्थ । कीदृश ? **तस्य** नृपकुमारस्य, **तेन** अनुपदमुपवर्णितेन, **अतर्कितेन** आकस्मिकेन, **असम्भावनीयेन** सम्भावयितुमप्यशक्येन, **अदृष्टपूर्वेण** पूर्वं कश्चिददृष्टेन, **प्रत्युज्जीवनेन** पुनरुज्जीवनेन, **जनितविस्मयः** उत्पन्नाश्चर्य , पुन **प्रहर्षमन्दतारकेण** प्रहर्षेण-अतिहर्षेण, मन्दे तारके-कनीनिके यस्मिंस्तादृशेन, तथा **आनन्दजलविन्दुसेकादिव** आनन्दजलविन्दुभि सेचनादिव, **विकसता** विकासमासादयता, **नयनारविन्दद्वयेन** नयनरूपकमलद्वयेन, **उद्भासमानः** प्रकाशमान , पुन **तत्कालं** तत्क्षणम्, **आसादितमहालाभमिव** प्राप्तमहालाभमिव, पुन **प्राप्तसकलकल्याणमिव** आसादिताशेषशुभमिव, पुन **समृद्धाखिलकाममिव** सम्पन्नसमस्ताभिलाषमिव, पुन **फलिताशेषगुरुजनाशिषमिव** फलिता -सफलता गता , अशेषा -समस्ता , गुरुजनाना-श्रेष्ठलोकानाम्, **आशिषः** शुभकामना यस्मिंस्तादृशमिव, **आत्मानं** स्व, **कृतार्थं** सिद्धार्थं मन्यमान । कीदृशस्य शत्रुलोकस्य ? **भयतरलेक्षणस्य** भयचञ्चलनेत्रस्य, पुन **विपक्षकक्षीकृतस्वामिदर्शनविषण्णबुद्धेः** विपक्षेन-हरिवाहनसैन्यजनेन, कक्षीकृतस्य-बद्धस्य, स्वामिनो दर्शनेन विषण्णा-विषादग्रस्ता बुद्धिर्यस्य तादृशस्य, पुन **अन्धीभूतसकलदिशः** अन्धीभूता -अन्धकारव्याप्ता ,

समाश्वासनाय समन्तादभयप्रदानपटहमवादयत् [स]। तदीयसारग्रहणोद्यतं चात्मसैनिकलोकं न्यवारयत्। आसन्नसरिति निर्वर्तितस्नानक्रियश्च दत्त्वा संगरसमाप्तप्राणेभ्यो बान्धवेभ्यः प्रणयिभ्यश्च शोकदीर्घश्वासतरलिततिलोदकं निवापाञ्जलिम्, आदिश्य चायुधप्रहारक्षतमर्मणामरातियोधानामौषधकर्मण्याप्तजनम्, अभिरुह्य च ससंभ्रमाधोरणोपनीतं प्रधानजयवारणम्, आरोप्य पुरः प्रत्यग्रयशःसुधाधवलवपुषमभ्युदयमङ्गलकलशमिव सिंहलाधिपसुतम्, आरब्धयुद्धकथालापवाचालेन प्रणयिना राजपुत्रलोकेनानुगम्यमानः शनैः शनैः शिबिरमागमत् [ह]। क्रमेण चासाद्य निजभवनमुपपादितसमस्ततत्कालोचितकरणीयो निर्वर्तितप्रत्यवसानादिकर्मणः समरकेतोरभ्यन्तर एव स्थितिमकल्पयत्। अधिशायिततल्पस्य च परिचारक इव स्वयं व्रणपट्टबन्धनादिक्रियामन्वतिष्ठत्। आप्तचिकित्सितप्रारब्धोपचारं च तमनतिचिरेणैव प्रगुणीभूतवपुषं प्रशस्तेऽहनि स्नातमुपनिमन्त्र्य सादरममात्यैर्बन्धुभिः सुहृद्भिरपरैश्च प्रधानपुरुषैः सहितमात्मगृहमानयत् [क्ष]। कृतभोजनोपचारं च त

---

सम्भ्रम विशो यस्य तादृशस्य; पुनः कान्दिशीकस्य कां दिशं गच्छामीत्याशयेति कान्दिशीकस्य भयपलायितलोकस्य। [स]। च पुनः तदीयसारग्रहणोद्यतं तदीयानां—तत्सम्बन्धिनाम् साराणां—प्रधानवस्तूनाम्, ग्रहणाय उद्यतम्—उद्युक्तम् आत्मसैनिकलोकं स्वसैनिकजनम् न्यवारयत् तद्ग्रहणान्निवारितवान्। च पुनः आसन्नसरिति निकटनद्याम्, निर्वर्तितस्नानक्रियः सम्पादितस्नानाख्यक्रियः संगरसमाप्तप्राणेभ्यः संगरे—संग्रामे समाप्ताः—नष्टाः प्राणा येषां तादृशेभ्यः बान्धवेभ्यः बन्धुजनेभ्यः च पुनः प्रणयिभ्यः प्रियजनेभ्यः शोकदीर्घश्वासतरलिततिलोदकं शोकेन—विरहेण येन दीर्घो यः श्वासः—मुखनासिकावायुः तेन तरलितं—चञ्चलितम्, तिलोदकं—तिलमिश्रितजलं यत्र तादृशम्, निवापाञ्जलिं पितॄणामुद्देशेन निर्मिताञ्जलिम्, दत्त्वा। च पुनः आयुधप्रहारक्षतमर्मणाम् आयुधप्रहारेण—शस्त्राघातेन क्षतानि—व्रणितानि मर्माणि—मर्मस्थलानि येषां तादृशानाम् अरातियोधानां शत्रुभटानाम्, औषधकर्मणि चिकित्साकार्ये आप्तजनं विश्वस्तजनं निपुणजनं वा आदिश्य नियुज्य। च पुनः ससंभ्रमाधोरणोपनीतं ससंभ्रमेण—सत्वरेण आधोरणेन हस्तिपकेन उपनीतम्—उपस्थापितम् प्रधानजयवारणं प्रधानभूतं जयोपकरणहस्तिनं जयोद्देशारोहणीयगजं वा आरुह्य। च पुनः अभ्युदयमङ्गलकलशमिव अभ्युदयाय—उन्नतये यो मङ्गलकलशः—मङ्गलघटः तमिव—तं यथा पुरः स्थापयति तथैवमत्र प्रत्यग्रयशःसुधाधवलवपुषं प्रत्यग्रम्—अभिनवं यद् यशः तद्रूपाभिः—सुधाभिः—धवलैः धवलं—स्वच्छम्, वपुः—शरीरं यस्य तादृशम्, सिंहलाधिपसुतं सिंहलद्वीपपतिकुमारम् पुरः अग्रे आरोप्य स्थापयित्वा उपवेश्येत्यर्थः। आरब्धयुद्धकथालापवाचालेन आरब्धा—प्रारब्धा या युद्धकथा—युद्धवार्ता तदालापवाचालेन—तदाभाषणमुखरेण प्रणयिना स्नेहास्पदेन राजपुत्रलोकेन राजकुमारजनेन अनुगम्यमानः अनुसृतः। शनैः शनैः मन्दं मन्दम्, शिबिरं सैन्यसन्निवेशस्थानम् आगमत् आयातवान्। [ह]। च पुनः क्रमेण परिपाट्या निजभवनं स्वप्रासादम् आसाद्य प्राप्य उपपादितसमस्ततत्कालोचितकरणीयः उपपादितानि—सम्पादितानि समस्तानि सर्वाणि तत्कालोचितानि—तत्समयोचितानि करणीयानि—कर्तव्यानि येन तादृशः सन् निर्वर्तितप्रत्यवसानादिकर्मणः कृतभोजनादिकार्यस्य समरकेतोः तन्नामकस्य राजकुमारस्य अभ्यन्तर एव पार्श्व एव स्थितिम् अवस्थानम् अकल्पयत् अकरोत्। च पुनः अधिशायिततल्पस्य अधिशायितं—शयनार्थमधिष्ठितम् तल्पं—शय्या येन तादृशस्य तस्य राजकुमारस्य स्वयं स्वयमेव परिचारक इव सेवक इव व्रणपट्टबन्धनादिक्रियां व्रणानाम्—शस्त्राघातकृतशरीरक्षतानाम् पट्टबन्धनादिक्रिया—वस्त्रवेष्टनादिकर्म, अन्वतिष्ठत् अनुष्ठितवान्। च पुनः आप्तचिकित्सितप्रारब्धोपचारम् आप्तेन—विश्वस्तेन भिषजा वा यत् चिकित्सितं—चिकित्सनम् तेन प्रारब्धः उपचारः—परिचर्या यस्य तादृशम्, तम् एव अनतिचिरेणैव अचिरेणैव प्रगुणीभूतवपुषं स्वस्थीभूतशरीरम् प्रशस्ते शुभावहे अहनि दिने स्नातं कृतस्नानम्, तं राजकुमारम् उपनिमन्त्र्य सम्मानमाहूय अमात्यैः मन्त्रिभिः बन्धुभिः भ्रातृभिः सुहृद्भिः मित्रैः अपरैः अन्यैश्च प्रधानपुरुषैः प्रधानजनैः सहितम्, सादरम् आदरपूर्वकम् आत्मगृहं स्वसदनं, आनयत् आनीतवान् [क्ष]। च पुनः कृतभोजनोपचारं कृतः भोजनस्य उपचारः—सेवा यस्य तादृशम्, तं राजकुमारम् वितीर्ण-

वितीर्णकुसुमविलेपनवसनालङ्कारमुपनीतविविधवस्त्रवाहनं प्रत्यर्पिताहवगृहीतनिःशेषकरितुरङ्गस्यन्दनं च विधाय विनोद्य च मुहूर्तमरतिच्छेदकारिभिः कथालापैरभिमुखो भूत्वा कृताञ्जलिरवादीत्—'कुमार! सकलजगदेकवीरस्य करदीकृताशेषसागरान्तरद्वीपभूपतेर्विपक्षव्यसनसङ्कटगतैर्महद्भिरपि भूमिपालैरपेक्षणीयसाहाय्यकस्य चतुरुदधिविख्यातपार्थिवप्रथमसूनोः कथञ्चिद् विधिवशाद् गृहायातस्य परेण परिकल्पिताल्पवृत्तिरस्मद्विधो जनः किं ते प्रियं करोतु, केन वा कृतेनोपचारेण प्रीतिमधिगच्छतु। तथापि यद्यनुग्रहबुद्धिरस्मासु तदेतदङ्गीकुरु सततमादेशकारिणा समीपदेशस्थितेन मया प्रतिपन्नसकलपृथ्वीव्यापारभरनिराकुलो मदीयमाधिपत्यपदम्, अथ तुच्छमिति मन्दाभिलाषस्तदा स परिजन इतो गत्वा तदेव पित्रा प्रतिपादितमतिप्राज्यवैभवमध्यास्स्व निजमेव यौवराज्यम्, मा च मन्येथा यथाहमेतेन निर्जित्य विहितानुग्रहः कथमिदं करोमि, कोऽहं तव पराजये, धृताधिज्यधन्वानमन्योऽपि किमस्ति जगति यस्त्वा समरकर्मणा करोति विमुखम्। यत्तु मुख्यै-

---

**कुसुमविलेपनवसनालङ्कारं** वितीर्णानि—समर्पितानि, कुसुमानि—पुष्पाणि, विलेपनानि—चन्दनादिद्रव्याणि, वसनानि—वस्त्राणि, अलङ्कारा—आभूषणानि च यस्मै तादृशम्, पुन **उपनीतविविधवस्त्रवाहनम्** उपनीतानि—उपस्थापितानि-दत्तानीत्यर्थ, विविधानि—अनेकप्रकाराणि, वस्त्राणि वाहनानि च यस्मै तादृशम्, पुन **प्रत्यर्पिताहवगृहीतनिःशेषकरितुरङ्गस्यन्दनं** प्रत्यर्पिता—प्रत्यावर्त्तिता, आहवे—रणे, गृहीता आयत्तीकृता, करिण—हस्तिन, तुरङ्गा—अश्वा, स्यन्दना—रथा यस्मै तादृशम्, **विधाय** कृत्वा, **च** पुन, **मुहूर्तं** क्षणम्, **अरतिच्छेदकारिभिः** पराजयग्लानिविनाशिभि, **कथालापैः** वार्तालापै, **विनोद्य** विनोदमनुभाव्य, **अभिमुखः** सम्मुखो भूत्वा, **कृताञ्जलिः** रचिताञ्जलि, **अवादीत्** उक्तवान्, सर्वत्र सेनापतिरिति शेष। किमित्याह—**कुमार!** समरकेतो!, **परेण** अन्येन, **परिकल्पिताल्पवृत्तिः** परिकल्पिता—सम्पादिता, अल्पा—परिमिता, वृत्ति—जीविका यस्य तादृश, **अस्मद्विधः** अस्मादृशो जन, **ते** तव, **किं प्रियम्** अभीष्टम्, **करोतु** सम्पादयतु, न किमपि कर्त्तुमर्हतीत्यर्थ। कीदृशस्य ते? **सकलजगदेकवीरस्य** सकले—समस्ते, जगति एकवीरस्य—अद्वितीयवीरस्य, पुन **करदीकृताशेषसागरान्तरद्वीपभूपतेः** करदीकृता—करदायकत्वमापादिता, अधिकृता इति यावत्, अशेषा—समग्रा, सागरान्तरद्वीपाना—समुद्रमध्यवर्तिद्वीपानाम्, भूपतय—नृपतयो येन तादृशस्य, पुन **विपक्षव्यसनसङ्कटगतैः** विपक्षव्यसनै—शत्रुकृतदुःखै, यत् सङ्कटं—दुःखस्थिति, तद्गतै—तत्प्राप्तै, **महद्भिरपि** श्रेष्ठैरपि समृद्धैरपीत्यर्थ, **भूमिपालैः** नृपै, **अपेक्षणीयसाहाय्यकस्य** अपेक्षणीयम्-आश्रयणीयम्, साहाय्यम्—उपकारो यस्य तादृशस्य, पुन **चतुरुदधिविख्यातपार्थिवप्रथमसूनोः** चतुर्णाम् उदधीनां—समुद्राणा समाहार चतुरुदधि, तत्र—तत्परिच्छिन्नभूमण्डल इत्यर्थ, विख्यात—प्रसिद्धो य पार्थिव—चन्द्रकेतु, तस्य प्रथमसूनो—ज्येष्ठपुत्रस्य, पुन **विधिवशाद्** दैवयोगात्, **कथञ्चित्** केनापि प्रकारेण, महता कष्टेनेत्यर्थ, **गृहायातस्य** मद्गृहातिथितामापन्नस्य। **वा** अथवा, **कृतेन** विहितेन, केन **उपचारेण** सेवया, **प्रीतिं** प्रसादम्, **अधिगच्छतु** प्राप्नोतु। **तथापि** भवत्प्रियकरणासम्भवेऽपि, **अस्मासु** अस्मद्विषये, यदि **अनुग्रहबुद्धिः** दयादृष्टि, अस्तीति शेष, **तत्** तर्हि, **सततं** सर्वदा, **आदेशकारिणा** आज्ञाकारिणा, **समीपदेशस्थितेन** पार्श्वस्थितेन, **मया** वज्रायुधेन, **प्रतिपन्नसकलपृथ्वीव्यापारभरनिराकुलः** प्रतिपन्न—स्वीकृतो य, सकलाया—समग्राया, पृथ्व्या, व्यापारभर—शासनकार्यजातम्, तेन निराकुल—स्वस्थ सन्, **एतत्** इदम्, **मदीयं** मत्सम्बन्धि, **आधिपत्यपदं** चतुरङ्गसेनाध्यक्षपदम्, **अङ्गीकुरु** स्वीकुरु। **अथ** यदि, **तुच्छं** तत् पदं न्यूनमिति हेतो, **मन्दाभिलाषः** मन्द—शिथिल, अभिलाष—तत्कामना यस्य तादृश, त्वमसीति शेष, **तदा** तर्हि, **सपरिजनः** सपरिवार, **इतः** अस्मात् स्थानात्, गत्वा, **पित्रा** चन्द्रकेतुना, **प्रतिपादितं** दत्तम्, **अतिप्राज्यवैभवम्** अतिप्राज्यम्—अत्यधिकम्, वैभवं—धनसम्पत्तिर्यस्मिंस्तादृशम्, **निजं** स्वकीयम्, **यौवराज्यमेव** युवराजत्वपदमेव, **अध्यास्स्व** अधितिष्ठ। **च** पुन, **मा मन्यथा** न मन्यस्व, **यथा** यत्, **एतेन** अनेन, **निर्जित्य** पराजित्य, **विहितानुग्रहः** कृतानुग्रह, अह **कथं** केन प्रकारेण, **इदं** यौवराज्यकार्यम्, **करोमि** सम्पादयामि। **तव** रणवीरस्य, **पराजये** पराजयकार्ये, **अहं कः** अकिञ्चित्करत्वान्न कोऽपीत्यर्थ। **जगति** लोके, **अन्योऽपि** मदन्योऽपि,

प्रभृतिभिः, यस्य वेश्मनि व्यवहरन्ति सद्यःकृतापकारे शत्रावपि वितीर्णप्राणसर्वस्वाः स्वभुजविक्रमोत्कीर्तनावसरेऽपि परकीयसामर्थ्यसमर्थनपरास्त्वद्विधा राज्यचिन्तकाः प्रधानसचिवाः । सर्वमुचितमनुचितं च करणीयं मया त्वदीयवचनम्, केवलमिदानीं न वक्तव्योऽहमन्यत् किमपि, यदि च पक्षपातबुद्धिर्मयि ततः किमनया, कुरु कृतार्थं मे चक्षुः, तमेव दर्शय प्रीतिविस्तारितेक्षणवदनेन वज्रिणा त्रिदशसंसदि स्तुतगुणमसमसाहसावर्जितराजलक्ष्मीदर्शितप्रत्यक्षनिजरूपविभ्रममपेतरजसं राजर्षिम्, उपजाततर्षोऽहमतितरां तदङ्घ्रियुगलावलोकने [अ]। इति वदन्तं च तं प्रीतहृदयो दण्डाधिपः प्रत्यवादीत्—'कुमार! यद्येवमद्यैव कुरु प्रस्थानम्' इत्युदीर्य निरवद्येऽह्नि शिक्षयित्वा बहुप्रकारमनुचरीकृतप्रचुरपदातिचक्रेण कृत्वा मया सततकृतसेवं देवपादान्तिकमजीगमत्। सोऽहमादाय तमुदग्ररभसं प्रस्थितः पथि वहन्नहरहः प्रयाणैरलघुभिर्विलङ्घितानेकनगरग्रामजनपदः क्रमेणास्या-

---

यापि महिम्नापि । स राजा देवराजप्रभृतिभिः इन्द्रादिभि, कथमिव कस्मादिव, न प्रशस्यते स्तूयते, प्रशस्यत एवेत्यर्थः । यस्य राज्ञ ; वेश्मनि गृहे, त्वद्विधा भवादृशा, राज्यचिन्तकाः राज्यचिन्तनपरा, प्रधानसचिवाः मुख्यमन्त्रिणः, व्यवहरन्ति योग क्षेमौ निर्वहन्ति । कीदृशा ? सद्यःकृतापकारे तत्क्षणविहिताप्रिये, शत्रावपि रिपावपि, वितीर्णप्राणसर्वस्वाः वितीर्णं–समर्पितम्, प्राणरूपं सर्वस्व–सर्वधनम्, सर्वधनेभ्योऽप्यतिप्रिया प्राणा इत्यर्थः, यद्वा प्राणाः सर्वस्वं च यैस्तादृशा, पुन स्वभुजविक्रमोत्कीर्तनावसरेऽपि निजबाहुबलवर्णनवेलायामपि, परकीयसामर्थ्यसमर्थनपराः परस्य–शत्रोरिदं परकीय तस्य, सामर्थ्यस्य–शक्ते, समर्थने–श्लाघने, परा –प्रवीणा । उचितं योग्यम्, अनुचितम् अयोग्यं च, सर्वं त्वदीयवचनं त्वत्सम्बन्धिकर्तव्यावेदकवाक्यम्, मया, करणीयं कर्तव्यं पालनीयमिति यावत्, केवलं किन्तु, अहम्, इदानीं सम्प्रति, अन्यत् अनुपदवक्ष्यमाणकार्यव्यतिरिक्तम्, किमपि कार्यं, न वक्तव्यः कर्तव्यत्वमेव न ज्ञापनीय । यदि, मयि मद्विषये, पक्षपातबुद्धिः उपकारदृष्टि, वर्तेत इति शेष, तर्हि अनया निरुक्तवार्तया, अन्यया इति पाठे तु वार्तया इति शेष., तथा च अन्यया वक्ष्यमाणकार्यान्यकार्यविषयिकया वार्तया, किम् अलमिति शेष. । मे मम, चक्षु, कृतार्थं सफलम्, कुरु सम्पादय, तम् वर्णितगुणम्, राजर्षिमेव मेघवाहनमेव, दर्शय दृष्टिगोचरतामापादय । कीदृशम् ? प्रीतिविस्तारितेक्षणवदनेन प्रीत्या–प्रेम्णा, विस्तारिते–विकासिते, ईक्षणे–नयने, वदनं–मुखं च येन तादृशेन, वज्रिणा इन्द्रेण, त्रिदशसंसदि देवसभायाम्, स्तुतगुणं प्रशंसितगुणम्, पुन असमसाहसावर्जितराजलक्ष्मीदर्शितप्रत्यक्षनिजरूपविभ्रमम् असमेन–नास्ति समं–सदृशं यस्य तादृशेन, असाधारणेनेत्यर्थ, साहसेन–अशक्यकार्यकारित्वेन, आवर्जितया–प्रसादितया, राजलक्ष्म्या–राजोपास्यलक्ष्मीदेव्या, दर्शित –दृष्टिगोचरतामापादित, प्रत्यक्षनिजरूपस्य–प्रत्यक्षस्वमूर्ते, विभ्रम –विलासो यस्मै तादृशम्, पुन अपेतरजसं विगलितकलुषम् । अह तदङ्घ्रियुगलावलोकने तत्पादद्वयदर्शने, अतितराम्, अत्यन्तम्, उपजातहर्षः उत्पन्नाभिलाष, अस्मीति शेष [अ] । इति इत्थम्, वदन्तं कथयन्तम्, तं नृपकुमारम्, प्रीतहृदयः प्रसन्नहृदय, दण्डाधिप चतुरङ्गसेनाध्यक्ष, वज्रायुध इति यावत्, प्रत्यवादीत् प्रत्युक्तवान् । किमित्याह–कुमार ! समरकेतो !, यदि एवम् इत्थमभिलष्यसि, तर्हि अद्यैव प्रस्थानं तत्पार्श्वप्रयाणं कुरु, इत्युदीर्य इत्युक्त्वा, निरवद्ये प्रशस्ते, अहनि दिवसे, बहुप्रकारं बहव प्रकारा प्रभेदा यस्मिंस्तादृशं यथा स्यात् तथा, शिक्षयित्वा तद्योग्यकार्यक्रममुपदिश्य, अनुचरीकृतप्रचुरपदातिचक्रेण अनुचरीकृतम्–अनुगामिता नीतं सेवकतामापादितं वा, प्रचुराणां–बहूनाम्, पदातीनां–पादगामिनाम्, चक्र–समूहो येन तादृशेन, मया, सततकृतसेवं सततम्–अनवरतम्, कृता सेवा यस्य तादृशम्, कृत्वा सेवयित्वेत्यर्थ, समरकेतुमिति शेष, देवपादान्तिकं देवस्य–भवत, पादयो पार्श्वम्, अजीगमत् मद्वारा प्रेषितवान्, सेनापतिरिति शेष । सः गृहीततदानयनभार, अहं विजयवेग, उदग्ररभसं प्रकृष्टवेगम्, तं समरकेतुम्, आदाय गृहीत्वा, प्रस्थितः कृतप्रयाण, पथि मार्गे, वहन् त गमयन्, अहरहः प्रतिदिनम्, अलघुभिः दीर्घै, प्रयाणैः यात्राभि, क्रमेण प्रयाणक्रमेण, विलङ्घितानेकनगरग्रामजनपदः विलङ्घितानि–अतिक्रान्तानि, अनेकानि–बहूनि, नगराणि–"पुण्यक्रियादिनिपुणैश्चातुर्वर्ण्यैर्जनैर्युतम् । अनेकजातिसम्बद्धं नैकशिल्पिसमाकुलम् ॥ सर्वदैवतसम्बद्धं नगरं तदभिधीयते ।" इत्यन्यत्रोक्तलक्षणानि, ग्रामा –"विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति हि । स तु ग्राम इति प्रोक्त

तच्छ्रुत्वा नरपतिरासन्नवर्तिनमत्युदारवेषं साकारवपुषमभ्यर्हितमशेषस्यापि परिग्रहस्य महत्सु कार्येषु व्यापारणीयं हरदासनामानं महाप्रतीहारमाकारणाय तत्क्षणमेव तस्य प्राहिणोत्। स गत्वा सपरिवारस्तदावासे कृतसमुचितोपचारो वहुप्रकारोपवर्णितनरेन्द्रानुरागनिर्वृतं कृताञ्जलिपुटस्तं राजकुलमानिनाय, प्रावेशयच्च दर्शितप्रश्रयातिरेकोऽभ्यन्तरम् [ आ ]। प्रविष्टं च तं धृतविदग्धोज्ज्वलवेषकतिपयाप्तपदातिपरिवृतम्, आलोकनोपजातसंक्षोभसरभसापसृतेन द्वारवर्तिना राजलोकेन दीयमानमार्गम्, अग्रयायिना विनयपेशलालापेन दौवारिकजनेनागम्यमानम्, आत्मप्रतिविम्बकैरिव समानरूपैः समानवयोभिः समानवसनालङ्कारधारिभिरव्यभिचारिभिः प्रधानराजपुत्रैः परिवृतम्, उपान्तप्ररूढकल्पपादपविटपमिव नवपारिजातपोतम्, दिगन्तरव्यापिना कुवलयदलश्यामलेन स्वदेहप्रभासंतानेन तिरोहितसर्वाकारम्, अम्वुराशिजलमध्यवर्तिनं मैनाकमिव विभाव्यमानम्, अनवरतमुन्मिषता निसर्गस्निग्धेन कर्णपूरमौक्तिकस्तवकेन कृत्तिकापुञ्जेनेव कुमारशब्द-

---

इत्यर्थ, निवेशितशिविरः रचितसैन्यावास, तिष्ठति वर्तते। देवः भवान्, यदैव यस्मिन्नेव काले, प्रसीदति वर्तमानसमीपे भविष्यति, प्रसन्नो भवेत्, तदैव तस्मिन्नेव काले, दर्शनं करोति कुर्यात्। तत् तदुक्तम्, श्रुत्वा श्रवणगोचरीकृत्य, नरपतिः मेघवाहन, तत्क्षणमेव तत्कालमेव, तस्य नृपकुमारस्य, आकारणाय–आह्वानाय, हरदासनामानं तत्संज्ञकम्, महाप्रतीहारं प्रधानद्वारपालम्, प्राहिणोत् प्रेषितवान्। कीदृशम्? आसन्नवर्तिनं पार्श्ववर्तिनम्, पुन अत्युदारवेषम् अत्युज्ज्वलवेषम्, पुन साकारवपुषम् आकारेण–मनोहरावयवसंस्थानेन सहितम्, वपु–शरीर यस्य तादृशम्, शरीरे साकारत्वस्य नियतत्वेनात्रोपादानसामर्थ्यादाकारपदस्य सुन्दराकारपरत्वं वोध्यम्, पुन अशेषस्यापि समग्रस्यापि, परिग्रहस्य परिजनस्य, अभ्यर्हितं माननीयम्, पुन महत्सु असाधारणेषु, कार्येषु, व्यापारणीयं नियोज्यम्। स हरदास, सपरिवारः परिजनसहित, तदावासे नृपकुमारावासे, गत्वा उपस्थाय, कृतसमुचितोपचारः कृत–अनुष्ठित, समुचित–योग्य, उपचार–सेवा येन तादृश सन्, वहुप्रकारोपवर्णितनरेन्द्रानुरागनिर्वृतं वहुभि प्रकारै उपवर्णितेन–व्याख्यातेन, नरेन्द्रस्य–मेघवाहननृपतेः, अनुरागेण–प्रेम्णा, निर्वृतं–प्रसन्नम्, तं नृपकुमारम्, कृताञ्जलिपुटः रचिताञ्जलिपुट, राजकुलं मेघवाहनराजधानीम्, तत्पार्श्वमित्यर्थ, आनिनाय आनीतवान्। च पुन, दर्शितप्रश्रयातिरेकः प्रकटितप्रेमातिरेक, अभ्यन्तरं राजगृहाभ्यन्तरम्, प्रावेशयत् प्रवेशितवान् [ आ ]। प्रविष्टं कृताभ्यन्तरप्रवेशम्, तं प्रकृतम्, समरकेतुं तन्नामकं नृपकुमारम्, क्षितिपतिः मेघवाहनो नृप, अद्राक्षीत् दृष्टवान्। कीदृशम्? धृतविदग्धोज्ज्वलवेषकतिपयाप्तपदातिपरिवृतं धृत–परिहित, विदग्ध–मनोहर, उज्ज्वल–निर्मलश्च, वेषो यैस्तादृशैः, कतिपयैः–परिगणितै, आप्तैः विश्वस्तै, पदातिभि–पदगामिभि, परिवृतं–परिवेष्टितम्, पुन आलोकनोपजातसंक्षोभसरभसापसृतेन आलोकनेन–समरकेतोरवलोकनेन, उपजात–उत्पन्न, य संक्षोभ–सम्भ्रमस्तेन सरभसापसृतेन सरभसं–सत्वरम्, अपसृतेन–पृथग्भूतेन, द्वारवर्तिना द्वारदेशस्थेन, राजलोकेन नृपजनेन, दीयमानमार्गं दीयमान–रिक्तीक्रियमाणो मार्गो यस्य तादृशम्, पुन अग्रयायिना अग्रगामिना, विनयपेशलालापेन विनयेन–नम्रतया, पेशल–रमणीय, आलाप–आभाषण यस्य तादृशेन, दौवारिकजनेन द्वारपालजनेन, आगम्यमानं मेघवाहनपार्श्वमानीयमानम्, अनुगम्यमानमिति पाठे अनुस्रियमाणम्, पुन आत्मप्रतिविम्बकैरिव स्वप्रतिविम्वभूतैरिव, समानरूपैः तुल्याकारै, समानवयोभिः तुल्यावस्थाकै, समानवसनालङ्कारधारिभिः तुल्यवस्त्रालङ्कारशालिभि, अव्यभिचारिभिः नियतसहचारिभि, प्रधानराजपुत्रैः मुख्यनृपकुमारै, परिवृतं परिवेष्टितम्, पुन उपान्तप्ररूढकल्पपादपविटपम् उपान्ते–निकटे, प्ररूढा–उत्पन्ना, कल्पपादपस्य–कल्पवृक्षस्य, विटपा–शाखा यस्य तादृशम्, नवपारिजातपोतमिव नवं–नवीनम्, पारिजातस्य–तदाख्यदेवतरो, पोतं–शिशुमिव, वालपारिजातमिवेत्यर्थ, अत्र राजपुत्राणा कल्पवृक्षशाखात्वेन समरकेतोर्वालपारिजातत्वेनोत्प्रेक्षा वोध्या, पुन स्वदेहप्रभासन्तानेन स्वशरीरकान्तिकलापेन, तिरोहितसर्वाकारं तिरोहितसर्वावयवम्, कीदृशेन? दिगन्तरव्यापिना दिङ्मध्यव्यापिना, पुन कुवलयदलश्यामलेन कुमुदपत्रवत् कृष्णवर्णेन, पुन अम्वुराशिजलमध्यवर्तिनम् अम्वूनां–जलानाम्, राशि–समुद्र, तज्जले मध्यवर्तिनम्, मैनाकमिव तदाख्यपर्वतमिव, विभाव्यमानं प्रतीयमानम्; पुन अनवरतं निरन्तरम्, उन्मिषता उद्गच्छता, निसर्गस्निग्धेन स्वाभाविक-

तच्छ्रुत्वा नरपतिरासन्नवर्तिनमत्युदारवेषं साकारवपुषमभ्यर्हितमशेषस्यापि परिग्रहस्य महत्सु कार्येषु व्यापारणीयं **हरदास**नामानं महाप्रतीहारमाकारणाय तत्क्षणमेव तस्य प्राहिणोत्। स गत्वा सपरिवारस्तदावासे कृतसमुचितोपचारो बहुप्रकारोपवर्णितनरेन्द्रानुरागनिर्वृतं कृताञ्जलिपुटस्तं राजकुलमानिनाय, प्रावेशयच्च दर्शितप्रश्रयातिरेकोऽभ्यन्तरम् [ आ ]। प्रविष्टं च तं धृतविदग्धोज्ज्वलवेषकतिपयाप्तपदातिपरिवृतम्, आलोकनोपजातसंक्षोभसरभसापसृतेन द्वारवर्तिना राजलोकेन दीयमानमार्गम्, अग्रयायिना विनयपेशलालापेन दौवारिकजनेनागम्यमानम्, आत्मप्रतिबिम्बकैरिव समानरूपैः समानवयोभिः समानवसनालङ्कारधारिभिरव्यभिचारिभिः प्रधानराजपुत्रैः परिवृतम्, उपान्तप्ररूढकल्पपादपविटपमिव नवपारिजातपोतम्, दिगन्तरव्यापिना कुवलयदलश्यामलेन स्वदेहप्रभासंतानेन तिरोहितसर्वाकारम्, अम्बुराशिजलमध्यवर्तिनं मैनाकमिव विभाव्यमानम्, अनवरतमुन्मिषता निसर्गस्निग्धेन कर्णपूरमौक्तिकस्तवकेन कृत्तिकापुञ्जेनेव कुमारशब्द-

---

इत्यर्थ, **निवेशितशिविरः** रचितसैन्यावास, **तिष्ठति** वर्तते। **देवः** भवान्, **यदैव** यस्मिन्नेव काले, **प्रसीदति** वर्तमानसमीपे भविष्यति, प्रसन्नो भवेत्, **तदैव** तस्मिन्नेव काले, दर्शनं **करोति** कुर्यात्। **तत्** तदुक्तम्, **श्रुत्वा** श्रवणगोचरीकृत्य, **नरपतिः** मेघवाहन, **तत्क्षणमेव** तत्कालमेव, **तस्य** नृपकुमारस्य, आकारणाय–आह्वानाय, **हरदासनामानं** तत्सञ्ज्ञकम्, **महाप्रतीहारं** प्रधानद्वारपालम्, **प्राहिणोत्** प्रेषितवान्। कीदृशम्? **आसन्नवर्तिनं** पार्श्ववर्तिनम्, पुन **अत्युदारवेषम्** अत्युज्ज्वलवेषम्, पुन **साकारवपुषम्** आकारेण–मनोहरावयवसंस्थानेन सहितम्, वपु–शरीरं यस्य तादृशम्, शरीरे साकारत्वस्य नियतत्वेनात्रोपादानसामर्थ्यादाकारपदस्य सुन्दराकारपरत्वं बोध्यम्, पुन **अशेषस्यापि** समग्रस्यापि, **परिग्रहस्य** परिजनस्य, **अभ्यर्हितं** माननीयम्, पुन **महत्सु** असाधारणेषु, कार्येषु, **व्यापारणीयं** नियोज्यम्। **स** हरदास, **सपरिवारः** परिजनसहित, **तदावासे** नृपकुमारावासे, **गत्वा** उपस्थाय, **कृतसमुचितोपचारः** कृत–अनुष्ठित, समुचितः–योग्य, उपचार–सेवा येन तादृश सन्, **बहुप्रकारोपवर्णितनरेन्द्रानुरागनिर्वृतं** बहुभि प्रकारै उपवर्णितेन–व्याख्यातेन, नरेन्द्रस्य–मेघवाहननृपतेः, अनुरागेण–प्रेम्णा, निर्वृतं–प्रसन्नम्, **तं** नृपकुमारम्, **कृताञ्जलिपुटः** रचिताञ्जलिपुट, **राजकुलं** मेघवाहनराजधानीम्, तत्पार्श्वमित्यर्थ, **आनिनाय** आनीतवान्। **च** पुन, **दर्शितप्रश्रयातिरेकः** प्रकटितप्रेमातिरेक, **अभ्यन्तरं** राजगृहाभ्यन्तरम्, **प्रावेशयत्** प्रवेशितवान् [ आ ]। **प्रविष्टं** कृताभ्यन्तरप्रवेशम्, तं प्रकृतम्, **समरकेतुं** तन्नामकं नृपकुमारम्, **क्षितिपतिः** मेघवाहनो नृप, **अद्राक्षीत्** दृष्टवान्। कीदृशम्? **धृतविदग्धोज्ज्वलवेषकतिपयाप्तपदातिपरिवृतं** धृत–परिहित, विदग्ध–मनोहर, उज्ज्वल–निर्मलश्च, वेषो यैस्तादृशै, कतिपयै–परिगणितै, **आप्तैः** विश्वस्तै, पदातिभि–पदगामिभि, परिवृतं–परिवेष्टितम्, पुन **आलोकनोपजातसंक्षोभसरभसापसृतेन** आलोकनेन–समरकेतोरवलोकनेन, उपजात–उत्पन्न, य संक्षोभ–सम्भ्रमस्तेन सरभसापसृतेन सरभसं–सत्वरम्, अपसृतेन–पृथग्भूतेन, **द्वारवर्तिना** द्वारदेशस्थेन, **राजलोकेन** नृपजनेन, **दीयमानमार्गं** दीयमान–रिक्तीक्रियमाणो मार्गो यस्य तादृशम्, पुन **अग्रयायिना** अग्रगामिना, **विनयपेशलालापेन** विनयेन–नम्रतया, पेशल–रमणीय, आलाप–आभाषण यस्य तादृशेन, **दौवारिकजनेन** द्वारपालजनेन, **आगम्यमानं** मेघवाहनपार्श्वमानीयमानम्, **अनुगम्यमान**मिति पाठे अनुस्रियमाणम्, पुन **आत्मप्रतिबिम्बकैरिव** स्वप्रतिबिम्बभूतैरिव, **समानरूपैः** तुल्याकारै, **समानवयोभिः** तुल्यावस्थाकै, **समानवसनालङ्कारधारिभिः** तुल्यवस्त्रालङ्कारशालिभि, **अव्यभिचारिभिः** नियतसहचारिभि, **प्रधानराजपुत्रैः** मुख्यनृपकुमारै, **परिवृतं** परिवेष्टितम्, पुन **उपान्तप्ररूढकल्पपादपविटपम्** उपान्ते–निकटे, प्ररूढा–उत्पन्ना, कल्पपादपस्य–कल्पवृक्षस्य, विटपा–शाखा यस्य तादृशम्, **नवपारिजातपोतमिव** नवं–नवीनम्, पारिजातस्य–तदाख्यदेवतरो, पोतं–शिशुमिव, बालपारिजातमिवेत्यर्थ, अत्र राजपुत्राणां कल्पवृक्षशाखात्वेन समरकेतोर्बालपारिजातत्वेनोत्प्रेक्षा बोध्या, पुन **स्वदेहप्रभासन्तानेन** स्वशरीरकान्तिकलापेन, **तिरोहितसर्वाकारं** तिरोहितसर्वावयवम्, कीदृशेन? **दिगन्तरव्यापिना** दिङ्मध्यव्यापिना, पुन **कुवलयदलश्यामलेन** कुमुदपत्रवत् कृष्णवर्णेन, पुन **अम्बुराशिजलमध्यवर्तिनम्** अम्बूना–जलानाम्, राशि–समुद्र, तज्जले मध्यवर्तिनम्, **मैनाकमिव** तदाख्यपर्वतमिव, **विभाव्यमानं** प्रतीयमानम्, पुन **अनवरतं** निरन्तरम्, **उन्मिषता** उद्गच्छता, **निसर्गस्निग्धेन** स्वाभाविक-

सुचिरमीषत्स्मितः समभाषत—'वत्स! स्वागतं ते, साधुकृतं यदत्रागतोऽसि, अनेन तव निसर्गसुन्दरेण दृष्टमात्रेण देहाकारेण पुरुषकारेणेव श्रुतेन श्रोत्रमानन्दितं मे किमपि नेत्रयुग्मम्, धन्यस्त्वमेको जगति यस्मादुपजातमात्मनः पराजयं विजयमिव सभासु शंसति प्रीतिविकसिताक्षो विपक्षलोकः, तोकमुपजनयता भवन्तमस्तोकसंचितसुकृतसंभारेण धारितो धुरि समस्तानां पुत्रिणामात्मा महात्मना सिंहलेश्वरेण, तेजस्वि-संगमेषु स्फुरदधिकौजसा सहजमार्दवगुणोपेतेन स्थिरप्रकृतिना त्वयैकेन भूषितं पुरुषरत्नेन परुषतरलैर्बहुभिरपि पाषाणरत्नैः परिष्कृताय प्रायो न मे गृहं स्पृहयत्यद्य सिंहलद्वीपाय, सर्वथा कृतार्थोऽहम्, अद्य फलितो मे दक्षिणापथविजयः, अद्य श्लाघनीयतां गतमिदं राज्यम्, अद्याधिगतपरिपूर्णशोभेयमुपजाता सभा, शिरश्छेद-साहसदर्शनादधिकपरितुष्टया दिव्याङ्गुलीयकार्पणव्यपदेशेन देशान्तरादानीय दत्तोऽसि मे द्वितीयस्त्वमात्मजो राजलक्ष्म्या। सामान्यममुना कुमारेण सह तवेदं राज्यमास्स्व यदृच्छया भावितभूरिनिर्वृतिः [ ई ]। मनसि मा स्म मंस्थाः—यथाहमानीतः परैरिति, न कश्चिदप्यत्र परः, सर्वोऽप्येष तव पर्वतस्येव मैनाकस्य

---

साचीकृता-तिर्यक्कृता, शिरोधरा ग्रीवा यस्य तादृश, **सुचिरम्** अतिदीर्घकालम्, **ईषत्स्मितः** ईषद्धसित, **समभाषित** आलपितवान्। किमित्याह-**वत्स!** भो कुमार!, **ते** तव, स्वागतं-शोभनमागमनम्, **अत्र** मत्सविधे, **यदागतोऽसि** यदागमनं कृतम्, तत् **साधु** समीचीन कृतम्। **निसर्गसुन्दरेण** स्वभावमनोहरेण, **अनेन** पुरोवर्तिना, तव **देहाकारेण** शरीराङ्गसन्निवेशेन, **दृष्टमात्रेण** दृष्टिगोचरीभूतमात्रेण, **मे** मम, **नेत्रयुग्मं** नयनद्वयम्, **किमपि** अनिर्वचनीयप्रकारम्, **आनन्दितम्** आनन्दमनुभावितम्, केन किमिव? **श्रुतेन** श्रवणगोचरीकृतेन, **पुरुषकारेण** पराक्रमेण, **श्रोत्रमिव** श्रवणेन्द्रियमिव। **जगति** लोके, **एकः** अद्वितीय, त्वं, **धन्यः** श्लाघ्य, वर्तसे इति शेष, **यस्मात्** त्वत्तः, **उपजातम्** उत्पन्नम्, **आत्मनः** स्वस्य, पराजयं विजयमिव, **प्रीतिविकसिताक्षः** प्रेमप्रफुल्लितनेत्र, **विपक्षलोकः** रिपुजन, **सभासु** जनतासु, **शंसति** कथयति, श्लाघत इत्यर्थ। **भवन्तं** त्वद्रूपम्, **तोकम्** अपत्यम्, **उपजनयता** उत्पादयता, अत एव **अस्तोकसञ्चितसुकृतसम्भारेण** अस्तोक-अनल्प, सञ्चित-सगृहीत, सुकृतसम्भार-पुण्यराशिर्येन तादृशेन, **महात्मना** पूज्यात्मना, **सिंहलेश्वरेण** सिंहलद्वीपनृपेण चन्द्रकेतुना, **समस्तानां** सकलानाम्, पुत्रिणां-पुत्रवताम्, **धुरि** अग्रे, **आत्मा** स्व, **धारितः** स्थापित, पुत्रवतां प्रथमो जात इत्यर्थ। **तेजस्विसङ्गमेषु** पराक्रमिगणेषु, **स्फुरदधिकौजसा** प्रकाशमानप्रचुरपराक्रमेण, **सहजमार्दवगुणोपेतेन** स्वाभाविकमृदुत्वगुणशालिना, **स्थिरप्रकृतिना** प्रकृत्या स्थिरेण, **त्वया** त्वद्रूपेण, **एकेन** अद्वितीयेन, **पुरुषरत्नेन** पुरुषाणा मध्ये रत्नरूपेण, **भूषितम्** अलङ्कृतम्, **मे** मम, गृहम्, **परुषतरलैः** परुषाणि-कठोराणि च तानि, तरलानि च तै, **बहुभिरपि** प्रचुरैरपि, **पाषाणरत्नैः** प्रस्तररत्नै, **परिष्कृताय** विभूषिताय, **सिंहलद्वीपाय** सिंहलाख्यद्वीपविशेषाय, **अद्य** अस्मिन् दिने, न **स्पृहयति** स्पृहां करोति, प्रत्युत, तिरस्करोतीत्यर्थः। अहं **सर्वथा** सर्वप्रकारेण, **कृतार्थः** सिद्धार्थ, अस्मीति शेष। **अद्य** अस्मिन् दिने, **इदं** भवद्भिर्भूषितम्, राज्यं **श्लाघनीयतां** प्रशंसनीयताम्, **गत** प्राप्तम्, **अद्य** अस्मिन् दिने, **मे** मम, **दक्षिणापथविजयः** दक्षिणापथस्य-ऋक्षवदवन्तिनगरीमतिक्रम्य दक्षिणदिग्वर्तिदेशविशेषस्य विजय, सफल-भवादृशप्राप्त्या सफलतां गत। **अद्य** अस्मिन् दिने, **इयं** प्रत्यक्षभूता, **सभा** राजपरिषत्, **अधिगतपरिपूर्णशोभा** प्राप्तनिरतिशयसौन्दर्या, **उपजाता** सम्पन्ना। **शिरश्छेद-साहसदर्शनात्** स्वशिर कर्तनाकातरताऽवलोकनात्, **अधिकपरितुष्टया** अतिसन्तुष्टया, **राजलक्ष्म्या** राजोपास्य-लक्ष्मीदेव्या, **दिव्याङ्गुलीयकार्पणव्यपदेशेन** मनोहराङ्गुलीयकवितरणद्वारा, **देशान्तरात्** अन्यदेशात्, सिंहलद्वीपादित्यर्थ, **आनीय** आकृष्य, **द्वितीयः** हरिवाहनादन्य, **मे** मम, **आत्मज** पुत्र, त्व **दत्तोऽसि** समर्पितोऽसि। **अमुना** हरिवाहनेन कुमारेण सह तव इद राज्य, **सामान्यं** तुल्यम्, **यदृच्छया** यथेच्छम्, **भावितभूरिनिर्वृतिः** अनुभूताधिकसुख सन्, **आस्स्व** उपविश [ ई ]। **मनसि** स्वहृदि, **मा स्म मंस्थाः** न मन्यताम्, **यथा** यत्, अहं, **परैः** शत्रुभि, अन्यैर्वा, **आनीतः** बलादाकृष्योपस्थापित इति। **अत्र** अस्मिन् स्थाने, **कश्चिदपि** कोऽपि, **परः** शत्रु, अन्यो वा, **न** नास्ति, अपि त्वात्मीय एवेत्यर्थ। **मैनाकस्य** तदाख्यस्य, **पर्वतस्येव** पर्वतविशेषस्येव, **तव** समरकेतो, **एषः** सन्निकृष्ट,

पत्स्वपरिहारेण, संपत्स्वादरातिशयेन, समानगुणेपु गौरवोत्कर्षेण, विवादेपु पक्षग्रहणेन, नूतनार्थलाभेषु संविभजनेन, नर्मस्वमर्मोद्घाटनेन, मन्त्रणेष्वदूरीकरणेन, दारसंनिधावविकारदर्शनेन, प्रणयकलिकोपेपु स्वयमनुनयेन, उत्सवेष्वग्रपूजासंपादनेन, प्रारब्धवस्तुनिर्वहणेपु स्तुतिप्रपञ्चनेन, प्रतिपन्नकार्येष्वविसंवादनेन, सर्वत्र चातिविश्वासदर्शनेन परं सख्यमानेयः, एप ते भ्राता च भृत्यश्च सचिवश्च सहचरश्च' [ ऋ ]। इत्युक्त्वा विसर्जितास्थानराजको नृपतिरासनादुत्तस्थौ। कुमारोऽपि 'यदाज्ञापयति तातः' इत्यभिदधानः करे गृहीत्वा समरकेतुं निषिद्धपरिजनः शुद्धान्तसंचारोचितेन परिचारकगणेनानुगम्यमानो मदिरावतीभवनमगच्छत्। तत्र च कृतप्रणामो मातुर्दर्शयित्वा समरकेतुं कृतसकलतद्वृत्तान्तसंकथः स्थित्वा चिरमवाप्तवस्त्रभूषणेन तेनानुगम्यमानः स्वावासमागच्छत्। तत्र चारब्धनिजनिजकर्मणा सूदवारप्रमदाप्रायेण मदिरावतीपरिजनेन यथायोग्यमुपपादिताः समाहूतसकलप्रधानलोकेन समरकेतुनान्येन च प्रणयिना राजसमूहेन सहितः स्नानभोजनादिकाः क्रिया निरवर्तयत्। अपराह्णसमये च तस्याहारमण्डपाजिरनिपण्णस्य निकटोपविष्टविशिष्टेष्टराजलोकस्य राज्ञा समादिष्टः

---

**परं** सान्द्रम्, **सख्यं** मित्रताम्, **आनेयः** प्रापणीय, कदा केन प्रकारेण ? **आपत्सु** आपत्कालेऽपि, **अपरिहारेण** अपरित्यागेन; **सम्पत्सु** सम्पत्काले, अभ्युदयवेलायामिति यावत्, **आदरातिशयेन** अत्यन्तादरेण, **समानगुणेपु** तुल्यगुणकव्यक्त्यपेक्षयापि, यद्वा व्यक्त्यन्तरतुल्यगुणेष्वपि, **गौरवोत्कर्षेण** असाधारणत्वोत्कीर्तनेन, **विवादेपु** अन्यै सह विरोधेपु, **पक्षग्रहणेन** एतत्पक्षपातेन, **नूतनार्थलाभेपु** नवीनवित्तलाभेपु, **संविभजनेन** तादृशवित्तस्य सम्यग्वण्टनेन, **नर्मसु** क्रीडासु, **अमर्मोद्घट्टनेन** मर्मप्रदेशानुद्घर्षणेन, **मन्त्रणेपु** रहस्यविचारणावसरेपु, **अदूरीकरणेन** अनपसारणेन, **दारसन्निधौ** स्वभार्यासन्निधावपि, **अविकारदर्शनेन** अलज्जाप्रकटनेन, **प्रणयकलिकोपेपु** प्रणयेन–स्नेहेन, य कलि–कलहः, तज्जन्यक्रोधेषु, **स्वयं** स्वेनैव, **अनुवर्तनेन** अनुसरणेन, **उत्सवेपु** शुभकार्येपु, **अग्रपूजासम्पादनेन** सर्वप्रथमसत्कारेण, **प्रारब्धवस्तुनिर्वहणेपु** प्रारब्धकार्यसम्पादनेपु, **स्तुतिप्रपञ्चनेन** गुणोत्कीर्तनविस्तारेण, **प्रतिपन्नकार्येषु** निश्चितकार्येपु, **अविसंवादनेन** विरोधाप्रकटनेन, **च** पुन, **सर्वत्र** सर्वेपु कार्येपु, **अतिविश्वासदर्शनेन** अत्यन्तविश्वासप्रकटनेन। **एपः** अयम्, समरकेतुकुमार इत्यर्थ, **ते** तव, **भ्राता** सोदर, **च** पुन, **भृत्यः** सेवक, **च** पुन, **सचिवः** मन्त्री, **च** पुन, **सहचरः** सखा [ ऋ ]। **इत्युक्त्वा** इति कथयित्वा, **विसर्जितास्थानराजकः** विसर्जित–स्वस्वस्थानगमनार्थमाज्ञप्तम्, आस्थानस्य–अधिष्ठितसभाया, राजकं–नृपगणो येन तादृश, **नृपतिः** मेघवाहन, **आसनात्** सिंहासनात्, **उत्तस्थौ** उत्थितवान्। **कुमारोऽपि** हरिवाहनोऽपि, **तातः** पिता, यत् **आज्ञापयति** आदिशति, तदहमवश्यं करिष्यामीति शेष, **इत्यभिदधानः** इति ब्रुवाण, प्रतिजानान इत्यर्थः, **समरकेतुं** तत्संज्ञकं कुमारम्, **करे** हस्ते, गृहीत्वा, **निषिद्धपरिजनः** निवर्तिततदनुयायिवर्ग, **शुद्धान्तसञ्चारोचितेन** अन्त पुरसञ्चारयोग्येन, **परिचारकगणेन** भृत्यवर्गेण, **अनुगम्यमानः** अनुस्रियमाण, **मदिरावतीभवनं** मदिरावत्या–स्वमातु, भवनं–प्रासादम्, **अगच्छत्** गतवान्। **तत्र च** मदिरावतीभवने च, **मातुः** मदिरावत्या, **कृतप्रणामः** कृतचरणपात सन्, **समरकेतुं** तदाख्यमानीतकुमारम्, **दर्शयित्वा** दृष्टिगोचरीकृत्य, **कृतसकलतद्वृत्तान्तसंकथः** कृता, सकलस्य–समस्तस्य, तद्वृत्तान्तस्य–तदीयसमाचारस्य, सत्कथा–सलापो येन तादृश, **चिरं** दीर्घकालम्, **स्थित्वा** तत्रावस्थितिं कृत्वा, **अवाप्तवस्त्रभूषणेन** मदिरावतीलब्धवस्त्रालङ्कारेण, **तेन** समरकेतुना, **अनुगम्यमानः** अनुस्रियमाण, **स्वावासं** स्वभवनम्, **अगच्छत्** गतवान्, **तत्र च** तस्मिन्नावासे च, **आरब्धनिजकर्मणा** आरब्धस्वकार्येण, **सूदवारप्रमदाप्रायेण** सूदस्य–ओदनपाचकस्य, वार–अवसर, यासां तादृशप्रमदाप्रायेण–तादृशस्त्रीप्रचुरेण, **मदिरावतीपरिजनेन** मदिरावतीपरिचारिकाजनेन, **यथायोग्यं** यथोचितम्, **उपपादिताः** निष्पादिता, **स्नानभोजनादिकाः** स्नानभोजनप्रभृती, **क्रियाः** कर्माणि, **समाहूतसकलप्रधानलोकेन** समाहूता–सम्यगाहूता, सकला–समस्ता, प्रधानलोका–सचिवजना यस्य तादृशेन, **समरकेतुना** तदाख्यप्रकृतकुमारेण, **अन्येन** तदन्येन, **प्रणयिना** स्नेहिना, **राजसमूहेन** नृपसमूहेन च सहित सन्, **निरवर्तयत्** समपादयत्। **अपराह्णसमये** मध्याह्नसमये, **आहारमण्डपाजिरनिषण्णस्य** भोजनभवनप्राङ्गणोविष्टस्य, पुन. **निकटो-**

माणयोः, उपचीयमानया तारुण्यलक्ष्म्या प्रतिक्षणमुल्लासितै रूपवललावण्यादिभिः शारीरैरन्तःकरणजैश्च सत्यशौर्यावबोधवैदग्ध्यपुरस्सरैर्गुणगणैरगणितक्रममाक्रम्यमाणयो रतिसुखपराङ्मुखेन धूर्जटिललाटलोचनाग्निनेव हृदयेनानङ्गीकृतकन्दर्पयोः, दुष्टजनपददृष्टिदोपसंरक्षार्थमिव पौरलोकेन स्वान्तेपु सततधार्यमाणयोः, शरदिन्दुमण्डलालोकेऽप्यप्रगुणितगुणेन सुरभिसमयेऽप्यघटिताभिनवमार्गणेन जलदागमेऽप्यनाकृष्टचापयष्टिना दृष्टदुर्वारभुजपराक्रमेणोत्पन्नसंत्रासेनेव दूरस्थेन मकरलक्ष्मणाऽलक्ष्यीकृतदेहयोः [ ल ]। कदाचिन्निजनिजास्त्रकौशलदर्शनेन कदाचित् पदवाक्यविचारेण कदाचित् प्रमाणप्रमेयस्वरूपनिरूपणेन कदाचिदभिमतागमग्रन्थार्थसमर्थनेन कदाचिदसद्दर्शनोक्त्युक्तिनिराकरणेन कदाचिन्नीतिशास्त्रनिवन्धपाठेन कदाचित् कलाविपयविचार-

---

**टिप्पनकम्—आक्रम्यमाणयोररतिसुखपराङ्मुखेन धूर्जटिललाटलोचनाग्निनेव हृदयेनानङ्गीकृतकन्दर्पयोः** एकत्र कामभार्यासौख्यबाधकेन, अन्यत्र अतिसौख्यपराङ्मुखेन, एकत्र अनङ्गीकृतकन्दर्पेना—विनाशितकामता, अन्यत्र अस्वीकृतकामयोः । गुण·—ज्या । सुरभि.—चैत्र [ल] ।

---

गुणसमूहै, **अगणितक्रमम्** अनपेक्षितक्रम यथा स्यात् तथा, युगपदेवेत्यर्थ, **आक्रम्यमाणयोः** आश्रीयमाणयो, कै ? **उपचीयमानया** वर्धमानया, **तारुण्यलक्ष्म्या** यौवनश्रिया, **प्रतिक्षणं** प्रतिपलम्, **उल्लसितैः** उल्लासितै, **रूपवललावण्यादिभिः** स्वरूप-शक्ति-सौन्दर्यादिभि, **शारीरैः** शरीराश्रितै, पुन **सत्य-शौर्याऽवबोधवैदग्ध्यपुरस्सरैः** सत्य–निष्कपटता, शौर्य–शूरत्वम्, अवबोध –विवेक, वैदग्ध्यं–नैपुण्यम्, तत्प्रमुखै, **सत्त्वशौर्ये**त्यादिपाठे सत्त्वं–धर्मज्ञानैश्वर्यादिहेतुर्गुणविशेष, **अन्तःकरणजैः** अन्त करणाश्रितै, पुन **धूर्जटिललाटलोचनाग्निनेव** धूर्जटे –शिवस्य, ललाटलोचनेन–भालस्थनेत्रभूतेन, अग्निना इव, **रतिसुखपराङ्मुखेन** कामिनीसम्भोगविरक्तेन, अतिसुखपराङ्मुखेन वा, पक्षे रति –कामदेवभार्या, तत्सुखपराङ्मुखेन तत्सुखबाधकेन, **हृदयेन** चेतसा, **अनङ्गीकृतकन्दर्पयोः** अनङ्गीकृत –अस्वीकृत, तिरस्कृत इति यावत्, पक्षे अनङ्गीकृत –अङ्गरहितीकृत, भस्मीकृत इति यावत्, कन्दर्प –कामदेवो याभ्या तादृशयो, पुन **दुष्टजनपददृष्टिदोपसंरक्षार्थमिव** दुष्टानां जनपदाना–जनपदवासिनां यो दृष्टिदोषस्तत सरक्षार्थं–सम्यग्रक्षणार्थमिव, **पौरलोकेन** पुरवासिजनेन, **स्वान्तेषु** स्वस्वहृदयेषु, **सततधार्यमाणयोः** प्रच्छन्नतया निरन्तरनिवास्यमानयो, पुन. **शरदिन्दुमण्डलालोकेऽपि** शरदृतुचन्द्रमण्डलप्रकाशेऽपि, **अप्रगुणितगुणेन** अप्रगुणित –अनुन्नमित, गुण –मौर्वी येन तादृशेन, पुन **सुरभिसमयेऽपि** वसन्तकालेऽपि, **अघटिताभिनवमार्गणेन** अघटिता–धनुष्यनारोपिता, अभिनवा –अभिनवोत्फुल्लकुसुमरूपा, मार्गणा –बाणा येन तादृशेन, पुन **जलदागमेऽपि** वर्षाकालेऽपि, **अनाकृष्टचापयष्टिना** अनाकृष्टा–अनानता, चापयष्टि –धनुर्दण्डो येन तादृशेन, अत एव **दृष्टदुर्वारभुजपराक्रमेण** दृष्ट –अनुभूत, दुर्वार –दुर्धर्ष, भुजपराक्रम –तयोर्बाहुबल येन, तादृशेन, अत एव **उत्पन्नसंत्रासेनेव** उत्पन्न –सजात, सत्रास –सम्यक् त्रास –भय यस्य तादृशेनेव, **दूरस्थेन** दूरवर्तिना, **मकरलक्ष्मणा** कामदेवेन, **अलक्ष्यीकृतदेहयोः** अलक्ष्यीकृत –स्वलक्ष्यता मनापादित, देह –शरीरं ययोस्तादृशयो [ ल ]। पुन **भावुकैः** भव्यै, मनोहरैरिति यावत्, **सुहृद्भिः** स्वमित्रै, **च** पुन, **विद्वद्भिः** विद्वज्जनै, **रममाणयोः** क्रीडतो, केन केन कर्मणा ? **कदाचित्** कस्मिंश्चित् काले, **निजनिजास्त्रकौशलदर्शनेन** स्वस्वास्त्रविद्यानैपुण्यप्रदर्शनेन, पुन **कदाचित्** कस्मिंश्चिच समये, **पदवाक्यविचारेण** पद वाक्यविवेचनेन, पुन **कदाचित्** कस्मिंश्चित् समये, **प्रमाण-प्रमेयस्वरूपनिरूपणेन** प्रत्यक्षादिप्रमाणाना तत्प्रमेयाणा च स्वरूपनिर्वचनेन, पुन **कदाचित्** कुत्रचित् काले, **अभिमतागमग्रन्थार्थसमर्थनेन** अभिमता –स्वाभिप्रेता ये, आगमग्रन्था –धर्मशास्त्राणि तेषा येऽर्थास्तेषां समर्थनेन–सङ्गमनेन, पुन **कदाचित्** कस्मिंश्चित् काले तु, **असद्दर्शनोक्तयुक्तिनिराकरणेन** असदर्शनोक्तानाम्–असमीचीनदर्शनप्रतिपादितानाम्, युक्तीनाम्–उपपत्तीनाम्, निराकरणेन–खण्डनेन, पुन **कदाचित्** कस्याश्चिद् वेलायाम्, **नीतिशास्त्रनिवन्धपाठेन** नीतिशास्त्रसम्बन्धिनां निवन्धानां–किञ्चिद्विपयोपपादकवाक्यप्रवन्धानां पाठेन, पुनः **कदाचित्** कस्मिंश्चिदवसरे, **कलाविषयविचारकेलिकलहेन** कलाविषय –शिल्पविषयको यो विचार –युक्तिप्रतियुक्ति-

मैनाकनामा निर्झरौघैरंसशिखरावलम्बिभिर्धूलीकदम्बप्रालम्बैरभिनवैरुद्भासमानः, शिरीषतरुकुसुमकल्पितकर्णपूरः, कर्पूरपरिमलमुचा चन्दनद्रवेण विहितसर्वाङ्गीणाङ्गरागः, तत्कालोपनीतरत्नोपलशकलशीतलममलमुक्ताफलप्रायमल्पमुद्वहन् भूषणकलापम्, अच्छकान्तिरत्नदर्पणप्रतिबिम्बितैः प्रीतिनिश्चलचक्षुषो जनस्य सर्वतः सहस्रसंख्यैर्विलोचनैः शबलितगात्रयष्टिः, ऐरावताधिरूढः सहस्राक्ष इव साक्षादुपलक्ष्यमाणः, निक्षिप्तनिजवेषानुरूपनिःशेषनेपथ्यस्य तत्क्षणगृहीतनिशितसृणेर्निषादितां प्रतिपद्य सिन्धुरस्कन्धमध्यासितस्य **समरकेतोर**धिस्कन्धमर्पितोभयबाहुपाशः, पश्चिमासनाध्यासिना ताम्बूलदायकेन प्रतिवेलमुद्धूयमानकनकदण्डडामरैकचामरः, तुलितगत्वरतमालतरुखण्डेन मायूरातपत्रमण्डलेन जयन्त इव संक्रन्दनानुचरीकृतेन वालजलधरव्यूहेनान्धकारिताग्रिमभूमिरग्रेसरेण सरयूतटासङ्गि **मत्तकोकिलं** नाम बाह्योद्यानमगच्छत् [ ऐ ]।

---

मल्लिकामुकुलैः–मल्लिकाख्यकुसुमकलिकाभि, रचित–निर्मित, शेखर–शिरोमाल्यं येन तादृश, पुन **मदान्धमधुकरध्वानवाचालैः** मदान्धाना–मदाकुलानाम्, मधुकराणा–भ्रमराणाम्, ध्वानै–गुञ्जनै, वाचालै–मुखरै, **अंसशिखरावलम्बिभिः** स्कन्धोपरिभागावलम्बिभि, **अभिनवैः** नवीनै, **धूलीकदम्बप्रालम्बैः** धूलीकदम्बाना–परागप्रचुरकदम्बाभिधवृक्षाणाम्, प्रालम्बै–कण्ठाद् ऋजुतया लम्बमानमाल्यै, **उद्भासमानः** उद्दीप्यमान, कै क इव ? **असशिखरावलम्बिभिः** स्कन्धशृङ्गावलम्बिभि, **निर्झरौघैः** वारिप्रवाहसमूहै, **मैनाकनामा** मैनाकसञ्ज्ञक, **अचलः** पर्वत इव, पुन **शिरीषतरुकुसुमकल्पितकर्णपूरः** शिरीषतरो–शिरीषाख्यवृक्षविशेषस्य, यत् कुसुमं–पुष्पम्, तेन कल्पित–रचित, कर्णपूर–कर्णाभरण येन तादृश, पुन **कर्पूरपरिमलमुचा** कर्पूरसौरभाविष्कर्त्रा, **चन्दनद्रवेण** चन्दनकर्दमेन, **विहितसर्वाङ्गीणाङ्गरागः** विहित–कल्पित, सर्वाङ्गीण–सर्वाङ्गव्यापक, अङ्गराग–अङ्गविलेपनं येन तादृश, पुन **तत्कालोपनीतरत्नोपलशकलशीतलं** तत्कालं–तत्क्षणम्, उपनीततानि–प्रापितानि, योजितानीति यावत्, यानि, रत्नोपलशकलानि–रत्नरूपपाषाणभागा, तै शीतलम्, **अमलमुक्ताफलप्रायं** स्वच्छमुक्तामणिप्रचुरम्, **अल्पं** परिमितम्, **भूषणकलापम्** आभरणसमूहम्, **उद्वहन्** धारयन्, अत एव **अच्छकान्तिरत्नदर्पणप्रतिबिम्बितैः** अच्छकान्तिरत्नदर्पणेषु–निर्मलकान्तिकलितरत्नशकलरूपदर्पणेषु, प्रतिबिम्बितै–प्रतिबिम्बरूपेण दृश्यमानै, **सहस्रसंख्यैः** दशशतसख्याकै, **प्रीतिनिश्चलचक्षुषः** प्रीत्या–स्नेहेन, निश्चल–निस्पन्दम्, चक्षुर्यस्य तादृशस्य, **जनस्य** मार्गवर्तिदर्शकलोकस्य, **लोचनैः** नेत्रै, **सर्वतः** समन्तात्, **शबलितगात्रयष्टिः** शबलिता–चित्रिता, व्याप्तेत्यर्थ, गात्रयष्टि–शरीररूपा यष्टिर्यस्य तादृश, अत एव **ऐरावताधिरूढः** ऐरावताख्यमहागजारूढ, **साक्षात् सहस्राक्ष इव** साक्षादिन्द्र इव, **उपलक्ष्यमाणः** प्रतीयमान, पुन **समरकेतोः** तदाख्यप्रकृतकुमारस्य, **अधिस्कन्धं** स्कन्धोपरि, **अर्पितोभयबाहुपाशः** अर्पित–स्थापित, उभयबाहुपाश–उभयबाहुरूप, पाश–बन्धनविशेषो येन तादृश, कीदृशस्य समरकेतो ? **निक्षिप्तनिजवेषानुरूपनिःशेषपथ्यस्य** निक्षिप्तं–त्यक्तम्, निजवेषानुरूपं–नृपकुमारवेषोचितम्, नि शेष–समस्तम्, नेपथ्य–कृत्रिमशरीरशोभा येन तादृशस्य, पुन **तत्क्षणगृहीतनिशितसृणेः** तत्क्षण–तत्कालम्, गृहीता–धृता, निशिता–तीक्ष्णा, सृणि–अङ्कुशो येन तादृशस्य, पुन **निषादितां** हस्तिपकताम्, **प्रतिपद्य** प्राप्य, **सिन्धुरस्कन्धं** हस्तिस्कन्धम्, **अध्यासितस्य** आरूढस्य, पुन **पश्चिमासनाध्यासिना** पश्चिमं–पश्चाद्भागावस्थितम्, यद् आसनम्–उपवेशनाधार, तदध्यासिना–तदुपवेशिना, **ताम्बूलदायकेन** ताम्बूलदानाधिकृतपुरुषेण, **प्रतिवेलं** सततम्, **उद्धूयमानकनकदण्डडामरैकचामरः** उद्धूयमान–उत्क्षिप्यमाण, कनकदण्डेन–सुवर्णमयदण्डेन, डामर–सुदृढ, एकचामर–प्रधानव्यजनविशेषो यस्य तादृश, पुन **तुलितगत्वरतमालतरुखण्डेन** तुलित–उपमित, गत्वराणा–जङ्गमभूतानाम्, तमालतरूणा–तमालाख्यश्यामलवृक्षविशेषाणाम्, खण्ड–विशेष, वनमिति यावत्, येन तादृशेन, **अग्रेसरेण** अग्रगामिना, **मायूरातपत्रमण्डलेन** मयूरस्य–विकारो मायूरम्, मयूरपक्षनिर्मितमित्यर्थ, यद्वा मयूराणां समूहो मायूरम्, तद्रूप यद् आतपत्र–छत्रम्, तन्मण्डलेन–तत्समूहेन, **अन्धकारिताग्रिमभूमिः** अन्धकारिता–अन्धकारावृता, अग्रिमा–अग्रवर्तिनी, भूमिर्यस्य तादृश, केन क इव ? **संक्रन्दनानुचरीकृतेन** सक्रन्दनेन–इन्द्रेण, अनुचरीकृतेन–अनुचरतामापादितेन, **जलधरव्यूहेन** मेघमण्डलेन, **जयन्त इव** तत्सञ्ज्ञक इन्द्रपुत्र इव [ ऐ ]।

तत्र च संनिधाने मकरध्वजायतनस्य नितान्तसुभगे भूविभागे प्रथममेवागत्य परिजनेन सूत्रितम्, अनतिमात्रोच्छ्रितस्य प्रशस्तविस्तारभाजः कूजितानुमीयमाननीलपल्लवप्रभान्धकारावगुण्ठितकलकण्ठकुलस्य लम्बमानवहलफललुम्बिस्तम्बभारदूरावर्जितोदारविटपस्य जलतुषारवर्षिणा सरलि(सि)तसमदहंससारसारवेण नभस्वता स्वैरमान्दोलितसान्द्रशाखामण्डलस्य तरुणसहकारखण्डस्य मध्ये महता वालकदलीवनेन कवचितम्, [ औ ], अचिरविकचानामजिरशिरीषशाखिनामलिविघट्टितैर्गलद्भिर्वालशुकशकुनिगलनालनीलैः प्रसूनस्तवकैराकाशजाह्नवीशैवलैरिव शैत्यलोलैरनुसृतपुरोभागम्, प्रतिभित्तिलम्बितविचित्रविससूत्रचामरम्, प्रतिद्वारमाबद्धहरिचन्दनप्रवालवन्दनमालम्, प्रतिस्तम्भमारोपितहिमशिलाशालभञ्जिकम्, प्रतिगवाक्षमुपनिहितकालागुरु-

---

**टिप्पनकम्—सारवेण** सरय्वाः सत्केन [औ]।

---

अदूरे–समीपे, वहत्–स्पन्दमानम्, **अगाधम्** अतिगम्भीरं नीरं यस्य तादृशम्, [ औ ]। च पुन, **तत्र** तस्मिन्, तीरपरिसर इत्यर्थ, **जलमण्डपम्**–जलगृहम्, **अगच्छत्** गतवान्। कीदृशम्? **मकरध्वजायतनस्य** कामदेवमन्दिरस्य, **सन्निधाने** समीपे, **नितान्तसुभगे** अत्यन्तमनोहरे, **भूविभागे** भूमिप्रदेशे, **प्रथममेव** पूर्वमेव, **आगत्य** आगमन कृत्वा, **परिजनेन** स्वपरिवारेण, **सूत्रितं** रचितम्, पुन **तरुणसहकारखण्डस्य** परिणतातिसुरभिरसालवनस्य, मध्ये, **महता** विस्तृतेन, **वालकदलीवनेन** नवकदल्याख्यप्रसिद्धफलप्रसविवृक्षसमूहेन, **कवचितं** परितो वेष्टितम्, कीदृशस्य तस्य मध्ये? **अनतिमात्रोच्छ्रितस्य** अनत्यन्तोन्नतस्य, पुन **प्रशस्तविस्तारभाजः** अतिविस्तारशालिन, पुन **कूजितानुमीयमाननीलपल्लवप्रभान्धकारावगुण्ठितकलकण्ठकुलस्य** कूजितेन–शब्दविशेषेण, अनुमीयमानम्–अनुमित्यात्मकज्ञानविषयीक्रियमाणम्, नीलपल्लवाना–कृष्णवर्णनवदलानाम्, या प्रभा–कान्तय, तद्रूपै, अन्धकारै, अवगुण्ठितम्–आच्छादितम्, कलकण्ठानां–कोकिलानाम्, कुलं–समूहो यस्मिंस्तादृशस्य, पुन **लम्बमानवहलफललुम्बिस्तम्बभारदूरावर्जितोदारविटपस्य** लम्बमाना–अधो नमन्त्य, बहलफला–बहुफला, या लुम्बय–प्रतिशाखावलम्बमानफलसमूहात्मका गुच्छा, तासा स्तम्बस्य–समूहस्य, भारेण–गुरुतया, दूरं–दूरपर्यन्तम्, आवर्जिता–आनमिता, उदारा–विस्तृता, विटपा–शाखा यस्य तादृशस्य, पुन **नभस्वता** वायुना, **स्वैरं** स्वेच्छानुसारम्, **आन्दोलितसान्द्रशाखामण्डलस्य** आन्दोलितं–प्रकम्पितम्, सान्द्रं–निबिडम्, शाखामण्डलं–शाखासमूहो यस्य तादृशस्य, कीदृशेन वायुना? **जलतुषारवर्षिणा** जलहिमकणोत्क्षेपिणा, पुन **सरसितसमदहंससारसारवेण** सरसिता–सरसतामापादिता, यद्वा सरसितेन–शब्देन सहिता, शब्दायमाना इत्यर्थ, ये समदा–मदान्विता, हससारा–हसश्रेष्ठा, तै सारवेण–मुखरेण, यद्वा सरसिता–सशब्दा, समदा–हर्षान्विताश्च, हंससारा–श्रेष्ठहंसा येन तेन सरसितसमदहससारेण, पुन सारवेण–सरयूनदीसम्बन्धिना, सरयूनदीजलसस्पर्शिनेत्यर्थ [औ]। पुन **प्रसूनस्तवकैः** पुष्पगुच्छै, **अनुसृतपुरोभागम्** अनुसृत–आश्रित, व्याप्त इति यावत्, पुरोभाग–अग्रभागो यस्य तादृशम्, केषा तै? **अचिरविकचानाम्** अभिनवविकसितानाम्, **अजिरशिरीषशाखिनां** प्राङ्गणवर्तिशिरीषाख्यवृक्षविशेषाणाम्, कीदृशैस्तै? **अलिविघट्टितैः** भ्रमरविश्लेषितै, पुन **गलद्भिः** पतद्भिः, पुन **वालशुकशकुनिगलनालनीलैः** बालानां–शैशवावस्थानाम्, शुकशकुनीना–शुकाख्यपक्षिविशेषाणाम्, यद् गलनाल–कण्ठकाण्ड, तद्वद् नीलै–कृष्णवर्णै, कीदृशै कैरिव? **शैत्यलोलैः** शैत्येन हेतुना, लोलै–तरलै, **आकाशजाह्नवीशैवलैरिव** आकाशजाह्नव्या–आकाशगङ्गाया, शैवलै–जलीयतृणविशेषैरिव, पुन **प्रतिभित्तिलम्बितविचित्रविससूत्रचामर** प्रतिभित्ति–प्रतिकुड्यम्, लम्बिता–अधोनता, विचित्रा–विविधवर्णा, विससूत्राणां–मृणालतन्तूनाम्, चामरा–व्यजनविशेषा यस्मिंस्तादृशम्। पुन **प्रतिद्वारमाबद्धहरिचन्दनप्रवालवन्दनमालं** प्रतिद्वारं–द्वारे द्वारे, आबद्धा–लम्बिता, हरिचन्दनप्रवालाना–हरिचन्दनाख्यदिव्यवृक्षपल्लवानां चन्दनविशेषपल्लवाना वा, वन्दनमाला–तोरणमाला यस्मिंस्तादृशम्। पुन **प्रतिस्तम्भं** प्रतिस्थूणम्, **आरोपितहिमशिलाशालभञ्जिकम्** आरोपिता–स्थापिता, हिमशिलाया–शीतलप्रस्तरस्य, शालभञ्जिका–पुत्तलिका यस्मिंस्तादृशम्। पुन **प्रतिगवाक्षं** प्रतिवातायनम्, **उपनिहितकालागुरुधूपघटिकम्** उपनिहिता–आरोपिता, कालागुरुणा–

तेन स्थवीयसा पाथसां प्रवाहेण प्राकारवलयेनेव स्फाटिकेन प्रान्तेषु कृतपरिक्षेपम् [ अं ], अम्लानमल्लिकामाल्यरचितशेखराभिः श्रवणावलम्बिशैवलवल्लरीहरितायमाननवबन्धूकपाण्डुगण्डस्थलाभिः कण्ठकन्दलामुक्तहिमगुलिकाहारभासितोन्नतस्तनकलशाभिरसितोत्पलनालवलयाधिष्ठितप्रकोष्ठकाण्डाभिः पदे पदे रणितमधुकरजालकिङ्किणीचक्रवालेन बकुलमालामेखलागुणेन परिक्षिप्तघनजघनभागाभिर्घनसारसंपर्ककर्कशामोदेन स्पर्शेन्द्रियहारिणा हरिचन्दनरसद्रवेण संपादिताप्रपदीनचर्चाभिर्जलार्द्रबिससूत्रसंव्यानवाहिनीभिरुद्यानदेवताभिरिव संभूयोपस्थिताभिरभिनवयौवनाभिर्वाररमणीभिरध्यासितविततवातायनम्, अतिविचित्रानेकचित्रशालं जलमण्डपमगच्छत् [ अः ] ।

प्रविश्य च तत्र कतिपयाप्तसहचरसहायो विभावयन्नितस्ततस्तस्य रचनाविचित्रतामतिचिरं बभ्राम, विरतकौतुकश्च कणद्भिरग्रतः श्वासपरिमलावकृष्टैरलिभिरभ्यर्थित इवानल्पमेकं कुसुमतल्पमध्यास्त । निषण्णं

---

मणिशिला—चन्द्रकान्तमणिरूप प्रस्तर, तत्सम्बन्धि यत् प्रणालं—जलनिर्गमनमार्ग, ततो विगलितेन—स्यन्दितेन, अत स्थवीयसा अतिस्थूलेन [ अ ] । पुन वाररमणीभिः वेश्याभि, अध्यासितवातायनम् अध्यासितम्—उपविष्टम्, अधिष्ठितमित्यर्थं, वातायनं—गवाक्षो यस्य तादृशम्, कीदृशीभि ? अम्लानमल्लिकामाल्यरचितशेखराभिः अम्लानानाम्—अचिरावचितानाम्, मल्लिकाना—तदाख्यकुसुमानाम्, यन्माल्यं तेन रचित शेखरं—शिरोमण्डनं याभिस्तादृशीभि, पुन श्रवणावलम्बिशैवलवल्लरीहरितायमाननवबन्धूकपाण्डुगण्डस्थलाभिः श्रवणावलम्बिनी—कर्णावलम्बिनी, या शैवलवल्लरी—शैत्याधायकतृणजललतिका, तया, हरितायमानं—हरितवर्णायमानम्, नवबन्धूकपाण्डु—नवं—नवीन यद् बन्धूकं—तदाख्यरक्तकुसुमम्, तद्वत्, पाण्डु—रक्तवर्णम्, गण्डस्थलं—कपोलस्थलं यासा तादृशीभि, पुन कण्ठकन्दलामुक्तहिमगुलिकाहारभासितोन्नतस्तनकलशाभि कण्ठकन्दलेन—कण्ठनालेन, अमुक्त—शैत्यानुभवाय अत्यक्त, धृत इत्यर्थ, य, हिमगुलिकाहार—हिमखण्डमाला, तेन भासितौ—उद्दीपितौ—उन्नतौ, स्तनकलशौ कलशायमानस्तनौ यासा तादृशीभि, पुन असितोत्पलनालवलयाधिष्ठितप्रकोष्ठकाण्डाभिः असितोत्पलनालवलयेन नीलकमलदण्डमण्डलेन, अधिष्ठित—व्याप्त, प्रकोष्ठकाण्ड—मणिबन्धाधोभागरूपो दण्डो यासा तादृशीभि, पुन. पदे पदे प्रतिपदम्, प्रतिपादन्यासमित्यर्थं, रणितमधुकरजालकिङ्किणीचक्रवालेन रणितं—शब्दायितम्, मधुकरजालरूपं—भ्रमरमण्डलात्मकम्, किङ्किणीचक्रवालं—क्षुद्रघण्टिकामण्डलं यस्मिंस्तादृशेन, बकुलमालामेखलागुणेन बकुलमालाया—बकुलाख्यकुसुमविशेषमालारूपाया, मेखलाया—स्त्रीकटिभूषणस्य, गुणेन—सूत्रेण, परिक्षिप्तघनजघनभागाभिः परिक्षिप्त—परिवेष्टित, घन—दृढ, जघनभाग—कटिपुरोभागमण्डलं यासा तादृशीभि ; पुन हरिचन्दनरसद्रवेण हरिचन्दनाख्यचन्दनविशेषरसपङ्केन, सम्पादिताप्रपदीनचर्चाभिः सम्पादिता—कृता, आप्रपदीना—पादाग्रपर्यन्ता, चर्चा—शरीरविलेपनं याभिस्तादृशीभि, कीदृशेन तेन ? घनसारसम्पर्ककर्कशामोदेन घनसारस्य—कर्पूरस्य, सम्पर्केण—मिश्रणेन, कर्कश—उत्कट, आमोद—सुगन्धो यस्य तादृशेन, पुन स्पर्शेन्द्रियहारिणा त्वगिन्द्रियकर्षिणा, अतिशीतलेनेत्यर्थ, पुन जलार्द्रबिससूत्रसंव्यानवाहिनीभिः जलार्द्र—जलाप्लुतम्, यद् बिससूत्राणां मृणालतन्तूनाम्, सव्यानम्—उत्तरीयवस्त्रम्, तद्वाहिनीभि—तद्धारिणीभि, काभिरिव ? सम्भूय सधीभूय, उपस्थिताभिः उपागताभि, उद्यानदेवताभिरिव क्रीडावनदेवताभिरिवेत्युत्प्रेक्षा, पुन, अभिनवयौवनाभिः नवीनयुवतीभि । पुन कीदृशम् ? अतिविचित्रानेकचित्रशालम् अतिविचित्रा—अत्यन्तविलक्षणा., अनेका—बहव, चित्रशाला—आलेख्यगृहा यस्मिंस्तादृशम् [ अः ] ।

च पुन, तत्र तस्मिन् जलमण्डप इत्यर्थ, प्रविश्य प्रवेश कृत्वा, कतिपयाप्तसहचरसहायः कतिपयै—परिगणितै, आप्तै—विश्वस्तै, सहचरै—सहगामिभि, सहाय—सहित, इतस्ततः अत्र तत्र, तस्य जलमण्डपस्य, रचनाविचित्रतां रचनावैलक्षण्यम्, विभावयन् पर्यालोचयन्, अतिचिरम् अतिदीर्घकालम्, बभ्राम भ्राम्यति स्म । च पुन, विरतकौतुकः निवृत्ततद्वैचित्र्यावलोकनकुतूहल सन्, अग्रतः अग्रे, कणद्भिः गुञ्जद्भि, श्वासपरिमलाकृष्टैः श्वासस्य—नासामारुतस्य, परिमलै—सौरभै, आकृष्टै—कृताकर्षणै, अलिभिः भ्रमरैः, अनल्पम् अत्यन्तम्, अभ्यर्थित इव प्रार्थित

गाथासु, विमृश्यमानेषु बाधानुपदसंपादितोत्सेकेषु बिन्दुमात्राक्षरच्युतकश्लोकेषु, हस्यमानेषु दीर्घकालानुभूतनिष्फलचिन्तामौनेषु प्राज्ञंमन्येषु, प्रकाश्यमाने साधुवादविधिना बुधानां बोधरभसे, विजृम्भमाणे निर्भरं सभ्यानां कौतुकरसे काव्येष्वतीव रसिकः सर्वदा निकटवर्ती कुमारस्य नर्मपात्र सकलराजपुत्राणां मञ्जीरनामा वन्दिपुत्रः किञ्चिदुपसृत्य हरिवाहनमवोचत् [ख]–'कुमार! प्रक्रमागतमेव किञ्चिद् विज्ञाप्यसे। कुरु क्षणमात्रमवधानदानेनानुग्रहम्, अस्यैव समनन्तरातिक्रान्तस्य मधुमासस्य शुद्धत्रयोदश्यामहमहमिकोपदर्शितनिजविभवविच्छर्देन नगरीनिवासिना भुजङ्गलोकेन भक्त्या प्रवर्तितं यात्रोत्सवमवेक्षितुमिदमेव सर्वतो विरचितविचित्रवस्त्रध्वजवितानमात्तकनकशृङ्गवेश्याङ्गनाभुजङ्गजनपरस्परारब्धजलसेकयुद्धं भगवतो मकरध्वजस्यायतनमागतोऽस्मि, विस्मयस्मेरचक्षुषा च प्रविशता मया प्राङ्गणसहकारपादपस्य मूले मृणालसूत्रवलयितग्रीवाविभागं मध्यभागविन्यस्तमुग्धस्तनमुखमुद्रेण स्त्यानतुहिनपाण्डुरत्विषा शोषाधिगतकाठिन्येन चन्दनपङ्कवेदिकाबन्धेन

---

मानासु, पुन **बाधानुपदसम्पादितोत्सेकेषु** अनुपदं–प्रतिपदम्, सम्पादित, बाधस्य अर्थबोधव्याघातस्य, उत्सेक –आधिक्यं यैस्तादृशेषु, **बिन्दुमात्राक्षरच्युतकश्लोकेषु** बिन्दुच्युत, मात्राच्युत, अक्षरच्युत इति बिदुमात्राक्षरच्युतास्ते एव बिन्दुमात्राक्षरच्युतका, तादृशेषु श्लोकेषु, **विमृश्यमानेषु** विविच्यमानेषु। पुन **दीर्घकालानुभूतनिष्फलचिन्तामौनेषु** दीर्घकालं–चिरकालम्, अनुभूत–प्रतीतम्, निष्फलचिन्तया–निष्फलभावनया, मौनं–मूकत्वं येषा तादृशेषु, **प्राज्ञम्मन्येषु** आत्मानं प्राज्ञ–पण्डित मन्यन्ते न तु पण्डिता ये ते प्राज्ञम्मन्या, तेषु, **हस्यमानेषु** उपहासास्पदतामापाद्यमानेषु। पुन **बुधानां** पण्डितानाम्, **बोधरभसे** बोधवेगे, अर्थबोधाविलम्बे इति यावत्, **साधुवादविधिना** प्रशसाविधानेन, **प्रकाश्यमाने** प्रकटीक्रियमाणे। पुन **सभ्यानां** सभाया–गोष्ठ्या साधु सभ्य, तेषा **कौतुकरसे** काव्यालापकुतूहलात्मकरसे, **निर्भरम्** अत्यन्तम्, **विजृम्भमाणे** प्रकाशमाने, **मञ्जीरनामा** मञ्जीरसज्ञक, **बन्दिपुत्रः** स्तुतिपाठकपुत्र, **किञ्चित्** ईषत्, **उपसृत्य** समीपमागत्य, **हरिवाहनं** तदाख्य मेघवाहननृपकुमारम्, **अवोचत्** उक्तवान्, कीदृश ? **काव्येषु** काव्यविषये, **अतीव रसिकः** अत्यन्तानुरागी, पुन **सर्वदा** सर्वकालम्, **कुमारस्य** हरिवाहनस्य, **निकटवर्त्ती** पार्श्ववर्ती **सकलराजपुत्राणां** समस्तनृपकुमाराणाम्, **नर्मपात्रं** परिहासास्पदम् [ख]। किमवोचदित्याह–कुमार! भो नृपात्मज!, **प्रक्रमागतमेव** प्रासङ्गिकमेव, **किञ्चित्** किमपि वृत्तम्, **विज्ञाप्यसे** निवेद्यसे, **अवधानदानेन** मनोवृत्तिदानेन, **क्षणमात्रं** मुहूर्तमात्रम्, **अनुग्रहं** कृपां कुरु, विषयान्तरान्निवर्त्य वक्ष्यमाणवृत्तश्रवणे मन समाधेहीत्यर्थ, **समनन्तरातिक्रान्तस्य** अव्यवहितव्यतीतस्य, **मधुमासस्य** चैत्रमासस्य, **शुद्धत्रयोदश्यां** शुक्लत्रयोदशतिथौ, **अहमहमिकोपदर्शितनिजविभवविच्छर्देन** अहमहमिकया–पारस्परिकस्पर्धया, उपदर्शित, निजविभवविच्छर्द –स्ववित्तव्ययो येन तादृशेन, **नगरीनिवासिना** अयोध्यावास्तव्येन, **भुजङ्गलोकेन** विटजनेन, **भक्त्या** कामदेवप्रीत्या, **प्रवर्तितं** प्रारब्धम्, **यात्रोत्सवं** कामदेवमन्दिरयात्रोत्सवम्, **अवेक्षितुं** द्रष्टुम्, **सर्वतः** परित, **विरचितविचित्रवस्त्रध्वजवितानं** विरचित –निर्मित, विचित्रवस्त्राणां ध्वज –पताका, वितान –उल्लोचश्च, यद्वा ध्वजरूपो वितान, ध्वजानां वितान –विस्तारो वा यस्मिंस्तादृशम्, पुन **आत्तकनकशृङ्गवेश्याङ्गनाभुजङ्गजनपरस्परारब्धजलसेकयुद्धम्** आत्त–प्राप्तम्, गृहीतमित्यर्थ, कनकशृङ्ग–सुवर्णमयनलिका याभिस्तादृशीभि, वेश्याङ्गनाभि –वेश्यारूपाभि स्त्रीभि, भुजङ्गजनै –विटजनैश्च, परस्परम्, आरब्ध–प्रवर्तितम्, जलसेकयुद्ध–जलसेचनसग्रामो यस्मिंस्तादृशम्, **भगवतः** पूज्यस्य, **मकरध्वजस्य** कामदेवस्य, **इदमेव** प्रत्यक्षभूतमेव, **आयतनं** मन्दिरम्, **आगतोऽस्मि** उपस्थितोऽस्मि। **च** पुन, **प्रविशता** प्रवेश कुर्वता, **विस्मयस्मेरचक्षुषा** विस्मयेन–आश्चर्येण, स्मेरं–विकस्वरम्, चक्षुर्यस्य तादृशेन, मया, **प्राङ्गणसहकारपादपस्य** मन्दिरप्राङ्गणवर्तिचूतवृक्षस्य, **मूले** अधस्तात्, **ताडीपत्रखण्डं** तालपत्रखण्डम्, **अवलोकितं** दृष्टम्, कीदृशम्? **मृणालसूत्रवलयितग्रीवाविभाग** मृणालसूत्रेण–बिसतन्तुना, वलयित –वेष्टित, ग्रीवाविभाग –कण्ठस्थलं यस्य तादृशम्, पुन **मध्यभागविन्यस्तमुग्धस्तनमुखमुद्रेण** मध्यभागे–मध्यस्थले, विन्यस्ता–रचिता, मुग्धस्य–सुन्दरस्य, स्तनमुखस्य, मुद्रा–प्रतिकृतिर्यस्मिंस्तादृशेन, पुन **स्त्यानतुहिनपाण्डुरत्विषा** स्त्यानं–घनीभूतम्, यत् तुहिन–हिमम्, तद्वत् पाण्डुरा–पीतवर्णमिश्रितशुक्लवर्णा, त्विद्–कान्तिर्यस्य तादृशेन, पुन **शोषाधिगतकाठिन्येन** शोषेण–शुष्कतया, अधिगत काठिन्य–घनीभावो येन तादृशेन, **चन्दनपङ्कवेदिका-**

सप्रागल्भ्यमार्यामिमां पपाठ—

गुरुभिरदत्तां वोढुं वाञ्छन् मामक्रमात् त्वमचिरेण । स्थातासि पत्रपादपगहने तत्रान्तिकस्थाग्निः ॥

अस्यां च पठ्यमानायामवहिताः सर्वे सभासदो बभूवुः । परिभावयतामेव च तेषां पाठसमकालमेव प्रज्ञावलेन बुद्ध्वा कोशलाधिपतिसूनुरवदत्—'सखे ! यत् तदासादितं त्वया तथाविधं ताडीपत्रकम्, असावनङ्गलेखस्तावत् । स च कयाचिदीश्वरकन्यया समारूढप्रौढयौवनया गुणानुरागप्रगुणितेन स्वचेतसा विदग्धाप्तसहचरीजनेन वा भूयो भूयः प्रवर्तितया कुमारीजनसहोत्थामपत्रपामपहाय कस्यचित् पूर्वमेवानुरागपिशुनैरिङ्गिताकारैरभिनन्दितोपांशुप्रयुक्तप्रार्थनस्य 'सुतनु ! सततानुवृत्तिपरोऽपि गुरुभिस्त्वदीयैर्नाहमनुगृहीतो भवत्याः प्रदाने, तदिदानीमनिच्छतोऽपि मे दुरात्मनानेन मदनवह्निना दह्यमानमिदमनुचितेनापि विधिना जीवितस्वामिनीं कर्तुमिच्छति त्वामतर्कितोपायान्तरं हतहृदयम्, अतो नाहमत्रापराधी'

---

टिप्पनकम्—उपांशु–रह [ङ] ।

---

रणं यत्र तादृश्या, **गिरा** वाण्या, **सप्रागल्भ्यं** प्रागल्भ्येन–प्रौढतया, सहितं यथा स्यात् तथा, **इमाम्** उपस्थिताम्, आर्या **पपाठ** पठितवान्, **गुरुभिरदत्तां वोढुं वाञ्छन् मामक्रमात् त्वमचिरेण । स्थातासि पत्रपादपगहने तत्रान्तिकस्थाग्निः** ॥ १ ॥ **गुरुभिः** मत्पित्रादिभि, **अदत्तां** विद्वेषवशेन स्वयमप्रतिपादिताम्, माम्, **अक्रमात्**–प्रसिद्धोद्वाहप्रकारं विनैव, बलादपहारेणेत्यर्थ, **वोढुं** परिणेतुम्, **वाञ्छन्** इच्छन्, त्वम्, **तत्र** तस्मिन्, यत्रावयो सम्मेलनमभूदित्यर्थ, **पत्रपादपगहने** पत्रपूर्णवृक्षवने, **अन्तिकस्थाग्निः** पार्श्वस्थिताग्निरूपवैवाहिकोपकरण, **अचिरेण** अविलम्बेन, **स्थातासि** स्थास्यसि, गृहे गुरुजनानुमतिरहितोद्वाहस्यानौचित्यादसम्भवाच्चेत्यर्थ, यद्वा बलादपहरणपूर्वकोद्वाहजन्यप्रत्यवायेन, **अन्तिकस्थाग्निः** पार्श्वज्वलदग्नि, **असिपत्रपादपगहने** असय –खड्गा, खड्गवन्मारणसामर्थ्यकलितानीत्यर्थ, पत्राणि येषा तादृशाना पादपाना–नारकवृक्षाणाम् गहने–वने, **स्थाता** स्थितिकर्ता, भविष्यतीति शेष, नरकं प्राप्स्यतीत्यर्थ । **च** पुन, **अस्याम्** आर्यायाम्, **पठ्यमानायाम्** उच्चार्यमाणायाम्, **सर्वे** सकला, **सभासद** सभोपविष्टा, **अवहिताः** तदर्थविचारे सावधाना **बभूवुः** जाता । **परिभावयतामेव** तदर्थमालोचयतामेव, **तेषां** सभासदा मध्ये, **कोशलाधिपतिसूनुः** कोशलाधिपते –कोशलदेशाधिपते, मेघवाहनस्य, सूनु –कुमार, हरिवाहन, **प्रज्ञावलेन** स्वबुद्धिवलेन, **पाठसमकालमेव** पाठसमय एव, **बुद्ध्वा** तत्तात्पर्यमवधार्य, **अवदत्** उक्तवान् । किमित्याह–**सखे !** भो मित्र !, **त्वया** मञ्जीरेण, **तथाविधं** तादृशम्, **तत्** अनुपदप्रस्तुतम्, यत् ताडीपत्रकम्, **आसादितं** प्राप्तम्, **असौ** स, **अनङ्गलेखः** कामदेवविषयकलेख, **तावदिति** वाक्यालङ्कारे । **स च** प्रकृतलेखश्च, **कयाचित्** अविदितनाम्न्या, **ईश्वरकन्यया** धनाढ्यकुमार्या, **कस्यचित्** कस्यापि, **महानागरिकस्य** अत्यन्तनागरिकस्य, नगरवास्तव्यतया कान्तोपभोगकुशलस्य, **यूनः** तरुणपुरुषस्य, पार्श्वे इति शेष, **प्रेषित** प्रेषणकर्मीकृत, कीदृश्या तया ? **समारूढप्रौढयौवनया** समारूढ–सम्यगवाप्तम्, प्रौढं–प्रगल्भम्, यौवनं–तारुण्यं यया तादृश्या, पुन **गुणानुरागप्रगुणितेन** अभिमतनायकगुणप्रीतिवृद्धेन, **स्वचेतसा** स्वकीयहृदयेन, **विदग्धाप्तसहचरीजनेन वा** निपुणविश्वस्तसखीजनेन वा, **भूयो भूय** पुन पुन, **प्रवर्तितया** प्रेरितया, कीदृशस्य यून ? तयेश्वरकन्यया **कुमारीजनसहोत्थामपत्रपां** कुमारीजनाना सहोत्था–सहजा, या अपत्रपा–अन्यहेतुकलज्जा, ताम्, **अपहाय** त्यक्त्वा, **अनुरागपिशुनैः** अनुरागसूचकै, **इङ्गिताकारैः** चेष्टिताकारै, आकारचेष्टया, पूर्वमेव, **अभिनन्दितोपांशुप्रयुक्तप्रार्थनस्य** अभिनन्दिता–अनुमोदिता, अङ्गीकृतेत्यर्थ, उपांशुप्रयुक्ता–रहसि कृता, प्रार्थना यस्य तादृशस्य, पुन '**सुतनु !** हे सुन्दराङ्गि !, **सततानुवृत्तिपरोऽपि** निरन्तरानुसरणपरायणोऽपि, अहं **भवत्याः** श्रीमत्या, प्रदानेन, **त्वदीयैः** भवदीयै, **गुरुभि** पित्रादिभि, न **अनुगृहीतः** अनुकम्पित, **तत्** तस्माद्धेतो, **इदानीं** सम्प्रति, **अनिच्छतोऽपि** त्वामनभिलषतोऽपि, **मे** मम, **दुरात्मना** दुष्टात्मना, **अनेन** प्रत्यक्षभूतेन, **मदनवह्निना** कामाग्निना, **दह्यमानं** सन्तप्यमानम्, **अतर्कितोपायान्तरम्** अतर्कितम्–अनालोचितम्, उपायान्तरम्–उचितप्रकारान्तर येन तादृशम्, **इदं** सन्निकृष्टम्, **हतहृदयं** कलुषितहृदयम्, **अनुचितेनापि** अयोग्येनापि, अवैधेनापीत्यर्थ, **विधिना** प्रकारेण, त्वा **जीवितस्वामिनीं** स्वप्राणस्वामिनीम्, स्वप्राणप्रियामित्यर्थ, **कर्तुं** विधातुम्, परिणेतुमित्यर्थ, **इच्छति** अभिलषति,

प्रेषयन्ति [ च ] । कौतुकेरिता पत्रकहारी स्वयमेव मुद्रामुद्वेष्ट्य विदितकार्यतत्त्वा प्रकृतिपारिप्लवतया स्त्रीस्वभावस्य कदाचिन्मन्त्रभेदमाचरेदिति तां वञ्चयितुं तस्य च विलासिनश्छेकोक्तिगुणहार्यहृदयस्य वचनभङ्गी-वैदग्ध्यमात्मीयमाविष्कर्तुमप्रयत्नावसेयविवक्षितार्थो नायमभिलिखितः ।' इत्युक्तवति तस्मिन् सर्वेऽपि ते पार्श्ववर्तिनो यथावस्थितविदितलेखार्थाः समं **मञ्जीरेण** राजपुत्राः प्रजहृषुः । अनेकधाकृतप्रतिभागुणस्तुतयश्च राजसूनोः पुनः प्रस्तुतकाव्यवस्तुविचारनिष्ठाः **समरकेतु**वर्जमतिष्ठन् । **समरकेतु**रपि विषादविच्छायवदनः शुष्काशनिनेव शिरसि ताडितस्तत्क्षणमेवाधोमुखोऽभवत्, उत्सृष्टसृष्टदीर्घनिःश्वासश्च निश्चलनयनयुगलो विगलिताश्रुशीकरक्लिन्नपक्ष्मा कराङ्गुष्ठनखलेखया भूतलमलिखत् [ छ ] ।

अवलोक्य च तथावस्थितं तमस्थान एव प्रतिपन्नशोकावस्थमुपजातविस्मयाः सभासदः किमेतदिति वितर्कतरलतारकाणि परस्परं मुखान्यवालोकयन् । अथ तेषां पुरोवर्ती **समरकेतु**ना समानप्रतिपत्तिरत्यन्तमभिमतो राजपुत्रस्य सकलशास्त्रभाषाविचक्षणः क्षीणभूयिष्ठशैशवे वयसि वर्तमानो माननीयः कुमारपरिग्रहस्य प्रकृतिप्रगल्भवाक् किमपि कोविदः परिहासकेलिषु **कमलगुप्त**नामा कलिङ्गदेशाधीशसूनुः शनैर्विहस्यावोचत्—

---

**चित्** कदापि, नहि, **प्रेषयन्ति** उपस्थापयन्ति [ **च** ] । **कौतुकेरिता** कुतूहलप्रेरिता, **पत्रहारिका** पत्रवाहिका दूती, स्वयमेव, **मुद्रां** पत्रोभयान्तबन्धनम्, **उद्वेष्ट्य** उद्धाट्य, **विदितकार्यतत्त्वा** विज्ञातकार्यसारा सती, स्त्रीस्वभावस्य, **प्रकृतिपारिप्लवतया** प्रकृत्या चञ्चलतया, **कदाचित्** कदापि, **मन्त्रभेद** रहस्योद्धाटम्, **आचरेत्** कुर्यात्, **इति** अस्माद्धेतो, **तां** पत्रवाहिकाम्, **वञ्चयितुं** प्रतारयितुम्, **च** पुन, **छेकोक्तिगुणहार्यहृदयस्य** छेक –विदग्ध, तस्य या उक्ति –वैदग्ध्यपूर्णोक्तिरित्यर्थ, तस्या गुणैर्हार्यहृदयस्य–आकर्षणीयहृदयस्य, यद्वा छेकोक्ति –वक्रोक्तिरूपालङ्कार, तद्गुणेन–तदात्मकगुणेन हार्यहृदयस्य, **तस्य** मनोगतस्य, **विलासिनः** विलासनिपुणस्य, त प्रतीत्यर्थ, **आत्मीयं**–स्वकीयम्, **वचनभङ्गीवैदग्ध्यं** वचनस्य भङ्गी–कौटिल्य विच्छित्तिर्वा, तद्वैदग्ध्य–तन्नैपुण्यम्, वक्रोक्तिकौशलमित्यर्थ, **आविष्कर्तु** प्रकटयितुम्, **अप्रयत्नावसेयविवक्षितार्थः** अप्रयत्न–विनैवोहापोहप्रयासम्, अवसेय –अवधारणीय, विवक्षित –वक्तभिप्रेत, अर्थो यस्य तादृश, **अयं** लेख, न **अभिलिखितः** उल्लिखित, किन्तु सकीर्णार्थक एव लिखित इत्यर्थ । **तस्मिन्** हरिवाहने, **इति** इत्थम्, **उक्तवति** मञ्जीरकृतप्रश्नोत्तरं कथितवति सति, **सर्वेऽपि** समस्ता अपि, **पार्श्ववर्तिनः** तन्निकटवर्तिन, **ते** प्रकृता, **राजपुत्राः** नृपकुमारा, **यथावस्थितविदितलेखार्थाः** यथावस्थिता –वास्तविका, लेखार्था –लेखाशया, विदिता यैस्तादृशा सन्त, **मञ्जीरेण** तदाख्यबन्दिपुत्रेण, **समं** सह, **प्रजहृषुः** प्रहृष्टा । **च** पुन, **राजसूनोः** नृपकुमारस्य हरिवाहनस्य, **अनेकधाकृतप्रतिभागुणस्तुतयः** अनेकधा–अनेकप्रकारै, कृता, प्रतिभागुणस्य–काव्यार्थविषयकोहापोहात्मकगुणस्य, स्तुति –प्रशसा यैस्तादृशा सन्त, **पुन** पुनरपि, **समरकेतुवर्जं** समरकेतुरहितं यथा स्यात् तथा, तं विनेत्यर्थ, **प्रस्तुतकाव्यवस्तुविचारनिष्ठाः** प्रस्तुत –प्रकृतो य, काव्यरूपवस्तुनो विचार –विवेचनम्, तन्निष्ठा –तल्लमा, **अतिष्ठन्** स्थिता । **समरकेतुरपि** तन्नामा नृपकुमारोऽपि, **विषादविच्छायवदनः** विषादेन–खेदेन, विच्छाय–मलिनम्, वदनं–मुखं यस्य तादृश सन्, **शिरसि** मस्तके, **शुष्काशनिना** वृष्टिरहितवज्रपातेन, **ताडित इव** आहत इव, **तत्क्षणमेव** तत्कालमेव, **अधोमुखः** अवनतमुख, **अभवत्** जात, **च** पुन, **उत्सृष्टदीर्घनिःश्वासः** उत्सृष्ट –त्यक्त, दीर्घ –महान्, नि श्वास –नासिकामारुतो येन तादृश, पुन **निश्चलनयनयुगलः** निश्चल निर्निमेषम्, नयनयुगल यस्य तादृश, पुन **विगलिताश्रुशीकरक्लिन्नपक्ष्मा** विगलितै –स्यन्दितै, अश्रुशीकरै –नयनजलकणै, क्लिन्नम्–आर्द्रम्, पक्ष्म–नेत्ररोमलेखा यस्य तादृश, **कराङ्गुष्ठनखरेखया** करस्य यदङ्गुष्ठ तदीयया नखरेखया–नखपङ्क्त्या, **भूतलं** पृथ्वीतलम्, **अलिखत्** लिखितवान् [ छ ] । **तथा** तेन प्रकारेण, **अवस्थितं** कृतावस्थितिकम्, पुन, **अस्थान एव** अनवसर एव, **प्रतिपन्नशोकावस्थं** प्रतिपन्ना–प्राप्ता, शोकावस्था–दु खावस्था येन तादृशम्, **तं** समरकेतुम्, **अवलोक्य** दृष्ट्वा, **उपजातविस्मयाः** उत्पन्नाश्चर्या, **सभासदः** सभामध्यवर्तिनो लोका, **एतत्** इद दु खम्, **किं** किंकारणकम्, **इति** इत्थम्, **वितर्कतरलतारकाणि** वितर्केण–विशिष्टतर्केण, तरला–चञ्चला, तारका–कनीनिका येषु तादृशानि, **मुखानि** मुखमण्डलानि, **परस्परम्** अन्योऽन्यम्, **अवालोकयन्** अवलोकितवन्त । **अथ** अनन्तरम्, **कमलगुप्तनामा** कमलगुप्तसञ्ज्ञक, **कलिङ्ग-**

सुलभविघ्नोद्गमाः काम्यक्रियारम्भाः । सोऽपि किं करोतु वराको यस्य दुष्करे तादृशि संवन्धघटने झटिति दर्शितफला विफलतां नीता देवेन नीतिः । किं क्रियते, निसर्गत एव निरङ्कुशः पापकारीव व्यालो वलीयान् विधिर्बद्धोऽपि बुद्धिमद्भिरतिनिबिडेन प्रज्ञालोहनिगडेन निरवग्रहो विचरति, वामचारिण्यत्र मार्गमृग इवाध्वगा नाधिगच्छन्ति वाञ्छितानि व्यापारितसकलसामर्थ्या अपि फलार्थिनः [झ]। तदलमनया स्वचित्तसंतापैकफलया फल्गुचिन्तया, मनागपि महात्मना न शोचनीयोऽसौ, शोच्यः पुनरसौ पापकर्मा कर्मचण्डालः प्रकृतिदुष्टात्मा विशिष्टाभासः सकलचौरग्रामणीरग्राह्यनामा मञ्जीरो, येन मार्जारेणेव मूषिकामिथुनमुपसृत्य निभृतमत्र विनिहितमनुपलक्षिता प्रेक्षकजनेन दर्शयिष्यामि दूरस्थैव यात्रां द्रष्टुमायातस्य यूनस्तस्येत्यभिप्रायेण लेखहारिण्या सहकारमूले स्थापितमपहृत्य लेखपत्रकं तादृशस्य दूरारूढसदृशप्रेम्णः प्रतिकूलगुरुजनकृतप्रति-

---

**टिप्पनकम्—निरङ्कुशः** सृणिरहित, अन्यत्र उच्छृङ्खल.। **वामचारिणि मार्गमृग इव** एकत्र वामचारिणि-सव्यचारिणि, अन्यत्र विपरीतकारिणि [झ]।

---

लषितार्थप्रतिवन्धकानि, पुन **काम्यक्रियारम्भाः** काम्यकर्मारम्भा, **सर्वतः** सर्वथा, **सुलभविघ्नोद्गमाः** सुलभ—सुगम, विघ्नोद्गम—कर्मफलसिद्धिव्याघातकदुरदृष्टोदयो येषु तादृशा । सोऽपि **वराकः** शोच्यजन, कि **करोतु** प्रतिकरोतु, **यस्य** वराकस्य, **दुष्करे** प्रयाससाध्ये, **तादृशि** उक्तप्रकारे, **संबन्धघटने** सम्बन्धप्रवन्धे, **झटिति** शीघ्रम्, **दर्शितफला** प्रकटितफला, **नीतिः** उपायानुष्ठानम्, **दैवेन** विधिना, **विफलतां** निष्फलताम्, **नीता** प्रापिता। किं **क्रियते** प्रतिक्रियते, किमपि नेत्यर्थ । **निसर्गत एव** स्वभावादेव, **निरङ्कुशः** निगृहीतुमशक्य, पक्षे अङ्कुशरहित, **पापकारी** पापाचारी, अनिष्टकारीत्यर्थ, **व्याल इव** दुष्टगज इव, **वलीयान्** वलवत्तर, **विधिः** दैवम्, **प्रज्ञालोहनिगडेन** प्रज्ञारूपो य लोहनिर्मित, निगड—शृङ्खल, पक्षे पादवन्धनम्, तेन **बुद्धिमद्भिः** विवेकिभि, **बद्धोऽपि** नियन्त्रितोऽपि, **निरवग्रहः** निष्प्रतिवन्ध, **विचरति** भ्रमति, **अत्र** अस्मिन्, विधावित्यर्थ, **मार्गमृग इव** मार्गस्थहरिण इव, **वामचारिणि** प्रतिकूलवर्तिनि, पक्षे वाममागगामिनि सति, **फलार्थिन** क्रियाफलाभिलाषिण, पक्षे प्रयाणफलाभिलाषिण, **व्यापारितसकलसामर्थ्या अपि** प्रयुक्ताशेषशक्तिका अपि, **वाञ्छितानि** अभिलषितवस्तूनि, न **अधिगच्छन्ति** प्राप्नुवन्ति [झ]। **तत्** तस्मात्, **अनया** वर्तमानया, **स्वचित्तसन्तापैकफलया** स्वचित्तस्य—निजान्त करणस्य, सन्ताप—परिताप एव फल यस्यास्तादृश्या, **फल्गुचिन्तया** तुच्छचिन्तया, **अलं** न किमपि साध्यम् । **महात्मना** महनीयात्मना, विवेकिनेत्यर्थ, **असौ** तत्पाणिग्रहणप्रवण पुमान्, **न शोचनीयः** शोचितुमनर्हे । **पुन** किन्तु, **असौ** स मञ्जीर, **शोचनीयः** शोचितुमुचित, कीदृश [?] **पापकर्मा** पाप—पापप्रयोजकम्, कर्म—कार्यं यस्य तादृश, अत एव **कर्मचण्डालः** कर्मणा—स्वदुष्कर्मणा, चण्डाल—क्रूर, पुन **प्रकृतिदुष्टात्मा** प्रकृत्या—स्वभावेन, दुष्ट—दोषान्वित, परकीयशुभद्वेषीत्यर्थ, आत्मा यस्य तादृश, अत एव **विशिष्टाभासः** विशिष्टवदाभासमान, न तु विशिष्ट इत्यर्थ, **सकलचौरग्रामणीः** समस्ततस्कराधिपति, तस्करश्रेष्ठ इत्यर्थ, पुन **अग्राह्यनामा** अनुच्चारणीयसञ्ज्ञक । **येन** मञ्जीरेण, **निभृतम्** एकान्तम्, प्रच्छन्नमित्यर्थ, यथा स्यात् तथा, **उपसृत्य** उपगत्य, **मार्जारेण** बिलाडेन, **मूषिकामिथुनमिव** मूषिकाद्वन्द्वमिव, **लेखपत्रकं** लेखपत्रम्, **अपहृत्य** अपहरणकर्मीकृत्य, **प्रयोजनमन्तरेण** स्वार्थं विनैव, **मिथुनस्य** निश्चितदम्पतिद्वन्द्वस्य, **विघटनं** विश्लेषणम्, **कृत** विहितम्, कीदृशं तत् पत्रकम् [?] **अत्र** अस्मिन् स्थाने, **विनिहितं** स्थापितम्, तत्पत्रमिति शेष, **दूरस्थैव** दूरमवस्थितैव, **प्रेक्षकजनेन** दर्शकजनेन, **अनुपलक्षिता** अनवलोकिता सती, **यात्रा** कामदेवमन्दिरयात्रोत्सवम्, **द्रष्टुम्** अवलोकितुम्, **आयातस्य** आगतस्य, **तस्य** प्रकृतस्य, **यूनः** तरुणपुरुषस्य, **दर्शयिष्यामि** दृष्टिपथमुपस्थापयिष्यामि, **इत्यभिप्रायेण** इत्याशयेन, **लेखहारिण्या** पत्रवाहिकया, **सहकारमूले** आम्रवृक्षाधस्तात्, **स्थापित** धृतम्। कीदृशस्य मिथुनस्य [?] **तादृशस्य** निरुक्तप्रकारस्य, पुन **दूरारूढसदृशप्रेम्णः** दूरम्—अत्यन्तम्, आरूढ—वृद्धिं गत, सदृश—तुल्य, प्रेमा—प्रीतिर्यस्य तादृशस्य, पुन **प्रतिकूलगुरुजनकृतप्रतिवन्धस्य** प्रतिकूलै, गुरुभि—कुमारिकापित्रादिभि, कृत प्रतिवन्ध—

विप्लवप्रपञ्चः' इत्युदीर्य तिर्यग्वलितवदनः सिंहलेन्द्रसुतमवादीत्—'सखे! किंनिमित्तं प्रहर्षस्थानेऽप्येवमस्वस्थेन भवता स्थीयते, किमर्थमिदमतर्कितागतेन तमसा समास्कन्दितं वदनमिन्दुमिव चन्द्रिका नार्द्रयति नमालापेष्वपि कुन्दनिर्मला ते स्मितद्युतिः, किमित्यधिकमधुरा अपि परपुरन्ध्रिदूतीगिर इव श्रवसि न विशन्ति शृङ्गारप्रधानाश्चिरन्तनकवीनामुक्तयः, केन हेतुना नूतनैरपि सुहृज्जनसूक्तैरजातपुलकोद्गतिरुभयपाणिपर्यङ्कशरणा धार्यते कपोलद्वयी । कच्चिन्न मयि जल्पति जातमुपतापदायिनः स्ववृत्तान्तस्य कस्यचिदाकस्मिकं स्मरणम्, यथाऽयमार्यार्थसूचितो युवा तथा न त्वमपि कुसुमायुधजयपताकया, कयाप्यवनिपालकन्यया क्वापि नयनमार्गणैर्विद्धः। प्रयुक्तप्रार्थनश्च निपुणमनयेव चतुरया वचनभङ्ग्या न क्वचित् सङ्केतस्थानकथनेन कृतार्थीकृतोऽसि, कृतप्रयत्नश्च तदवाप्तये विधिवशादतर्कितोपनतेन केनचिद् गरीयसा कार्येण तत्समागमसुखानां न दूरीकृतोऽसि [ठ]।' इत्यादृतेन नृपतिसूनुना प्रयुक्तहृदयंगमप्रश्नः शनैरुन्नम्य सत्वरगृहीतोत्तरीयपल्लवप्रमृष्टदृष्टिवदनमनादरविलोकितपार्श्ववर्तिराजलोकः सशोक इव समरकेतुर्विरतवाक्प्रवृत्तिः स्थित्वा मुहूर्तमुपचक्रमे वक्तुम्—

---

कमलगुप्त!, **अस्थाने** अनवसरे, अयं **विप्लवप्रपञ्चः** क्षोभविस्तार, किं किमर्थं, **इत्युदीर्य** इत्युक्त्वा, **तिर्यग्वलितवदनः** तिर्यक्–कुटिल यथा स्यात् तथा, वलितं–स्पन्दितं मुखं यस्य तादृश सन्, **सिंहलेन्द्रसुतं** सिंहलद्वीपनृपकुमारम्, समरकेतुमित्यर्थ, **अवादीत्** उक्तवान् किमित्याह–**सखे!** भो मित्र! **प्रहर्षस्थानेऽपि** प्रमोदावसरेऽपि, **किंनिमित्तं** किमर्थम्, **भवता** त्वया, **एवम्** अनेन प्रकारेण, **अस्वस्थेन** शोकाकुलेन, स्थीयते, **किमर्थं** कस्य हेतो, **कुन्दनिर्मला** कुन्दपुष्पवद्धवला, **ते** तव, **स्मितद्युतिः** मन्दहासच्छवि, **नर्मालापेऽपि** परिहासालापेऽपि, **अतर्कितागतेन** अकस्मादुपस्थितेन, **तमसा** शोकेन, पक्षे राहुणा, **समास्कन्दितं** समाक्रान्तम्, **वदनं** मुखम्, **इन्दुं** चन्द्रम्, **चन्द्रिका इव** ज्योत्स्ना इव, न **आर्द्रयति** आर्द्रीकरोति, रूक्षतामपनयतीति यावत्, उद्भासयतीत्यर्थ । **अधिकमधुरा अपि** अत्यन्तश्रोत्रपेया अपि, **शृङ्गारप्रधानाः** प्राधान्येन शृङ्गाररसाभिव्यञ्जिका, **चिरन्तनकवीनां** प्राचीनकविसम्बन्धिन्य, **उक्तयः** वाच, **परपुरन्ध्रिदूतीगिर इव** पराङ्गनादूतीवचनानीव, **श्रवसि** कर्णे, **किमिति** किमर्थम्, न **विशन्ति** प्रविशन्ति, केन **हेतुना** कारणेन, **नूतनैरपि** नवीनैरपि, **सुहृज्जनसूक्तैः** मित्रजनसुभाषितै, **अजातपुलकोद्गतिः** अजातरोमाञ्चोदया, पुन **उभयपाणिपर्यङ्कशरणा** उभयपाणी–उभयकरावेव, पर्यङ्कौ–तदाख्यशयनाधारविशेषौ, शरणे–आधारो यस्यास्तादृशी, **कपोलद्वयी** गण्डयुगलम्, **धार्यते** धारणकर्मतां प्राप्यते। मयि **जल्पति** भाषमाणे सति, **उपतापदायिनः** सन्तापकारिण, **कस्यचित्** कस्यापि, स्ववृत्तान्तस्य, **आकस्मिकम्** अतर्कितोपनतकम्, स्मरणं न **जातम्** उत्पन्नम्, **कच्चित्** किम्? **यथा** येन प्रकारेण, **आर्यार्थसूचितः** प्रकृतार्याशयेन कृतसूचन, **अयं** बुद्धिसन्निकृष्ट, **युवा** तरुण पुमान्, कयापि कन्यया नेत्रबाणविद्धो वर्तते, **तथा** तेन प्रकारेण, त्वमपि **कुसुमायुधजयपताकया** कामदेवजयपताकारूपया, **कयापि** कयाचित्, **अवनिपालकन्यया** नृपकन्यया, **क्वापि** कुत्रापि स्थाने, **नयनमार्गणैः** नेत्रबाणै, **विद्धः** व्रणित, आहत इत्यर्थ, न **वर्तसे** इति शेष, **च** पुन, **अनयेव** प्रकृतकन्ययेव, **चतुरया** चातुरीपूर्णया, **वचनभङ्ग्या** वचनकौटिल्येन, वचनविच्छित्त्या वा, **निपुणं** स्फुटं यथा स्यात् तथा, **प्रयुक्तप्रार्थनः** प्रयुक्ता–कृता, प्रार्थना यस्य तादृश सन्, **क्वचित्** कुत्रापि, **संकेतस्थानकथनेन** संकेतस्य–प्रतिज्ञातोभयसम्मेलनसमयप्रतीक्षाया यत् स्थान तस्य, सूचनेन न **कृतार्थीकृतोऽसि** सफलीकृतोऽसि । **च** पुन, **तदवाप्तये** तत्प्राप्तये, **कृतप्रयत्नः** विहितप्रयास सन्, **विधिवशात्** दुर्दैवयोगात्, **अतर्कितोपनतेन** अकस्मादुपस्थितेन, **गरीयसा** गुरुतरेण, **केनचित्** केनापि, कार्येण, न **तत्समागमसुखानां** तत्सम्मेलनानन्दानाम्, **दूरीकृतोऽसि** दूरमवस्थापितोऽसि, ततो वञ्चितोऽसीत्यर्थ [ठ]। **इति** इत्थम्, **आदृतेन** सादरेण, **नृपतिसूनुना** नृपात्मजेन हरिवाहनेन, **प्रयुक्तहृदयङ्गमप्रश्नः** प्रयुक्त –कृत, हृदयङ्गम –हार्दिकार्यविषयक, प्रश्नो यस्य तादृश, पुन **शनैः** मन्दम्, **उन्नम्य** ऊर्ध्वमुखीभूय, **सत्वरगृहीतोत्तरीयपल्लवप्रमृष्टदृष्टिवदनं** सत्वर–शीघ्रम्, गृहीतेन, उत्तरीय-

दायमप्रयच्छतां विक्षेपविसर्जनेषु कालक्षेपकारिणामाह्वानेषु बह्वनागमनकारणव्याहारिणामुत्सवेष्वदृष्टानामापत्सु सविलासचेष्टानामुक्त्या प्रीतिमुपदर्शयतां युक्त्या प्रतिलोमं व्यवहरतां सुवेलशैलोपकण्ठवासिनां दुष्टसामन्तानां प्रतिक्षेपाय दक्षिणापथयायि नौसैन्यमादिक्षत। प्रस्थितस्य च तस्य रिपुविनाशाय यथाशक्तिकृतशास्त्रपरिचयमधीतनीतिविद्यमभ्यस्तनिरवद्यधनुर्वेदमसिगदाचक्रकुन्तप्रासादिषु प्रहरणविशेषेषु कृतश्रममचिरारूढयौवनमभिषिच्य यौवराज्ये मामेव नायकमकल्पयत्। अर्पितानल्पपदातिसैन्यं च पुण्येऽहनि प्रधानैरवनिपतिभिरमात्यैः सामन्तैश्च कृत्वा ससहायं प्राहिणोत् [ ढ ]।

अथाहं प्रातरेव स्नातो निर्वर्तिताभिमतदेवताविशेषपूजः संपूज्य वस्त्राद्यतिसर्जनेन द्विजातिलोकं प्रतिकलावलोकितशङ्कुच्छायैर्ज्योतिर्गणितविद्भिः साधिते लग्ने सितदुकूलवासाः सितकुसुमदामग्रथितशेखरः शरच्चन्द्रातपेनेव कौमुदीमहोत्सवभ्रमणलग्नेन स्पर्शाह्लादिना चन्दनाङ्गरागेण सर्वाङ्गीणेन शोभमानः स्थूलस्वच्छमुक्ताफलग्रथितां

---

सम्भृत –कृत, अवलेप –गर्वो यैस्तादृशानाम्, पुन **प्रपन्नमपि** स्वयमङ्गीकृतमपि, **पूर्वदायं** पूर्वदेयकरम्, **अप्रयच्छताम्** अप्रददताम्, पुन **विक्षेपविसर्जनेषु** दण्डद्रव्यदानेषु, **कालक्षेपकारिणां** कालातिक्रमकारिणाम्, पुन **आह्वानेषु** स्वसविधाहूतिषु सतीषु, **बह्वनागमनकारणव्याहारिणां** बहूनि यानि अनागमनकारणानि–आगमनाभावहेतव, तद्व्याहारिणां–तत्प्रतिपादिनाम्, **उत्सवेषु** मङ्गलावसरेषु, **अदृष्टानाम्** असुदितानाम्, पुन **आपत्सु** आपत्त्यवसरेषु, **सविलासचेष्टानां** विलासेन–मुखप्रसादादिविभ्रमेण, सहिता चेष्टा–शारीरिकक्रिया येषा तादृशानाम्, पुन **उक्त्या** वचनेन, **प्रीतिं** प्रेमाणम्, **उपदर्शयतां** प्रकटयताम्, पुन **युक्त्या** उपायेन, **प्रतिलोमं** प्रतिकूलं यथा स्यात् तथा, **व्यवहरताम्** आचरताम्, पुन **सुवेलशैलोपकण्ठवासिनां** सुवेलशैलस्य–सुवेलपर्वतस्य, उपकण्ठे–निकटे, वास्तव्यानाम्। **च** पुन, **रिपुविनाशाय** शत्रुविनाशाय, **प्रस्थितस्य** प्रयातस्य, **तस्य** सैन्यस्य, **नायकं** पतिम्, मामेव, **अकल्पयत्** कृतवान्, किं कृत्वा ? **यौवराज्ये** युवराजपदे, **अभिषिच्य** अभिषेकं कृत्वा, कीदृश माम् ? **यथाशक्तिकृतशास्त्रपरिचयं** स्वशक्त्यनुसारविहितशास्त्रानुशीलनम्, पुन **अधीतनीतिविद्यम्** पठितनीतिशास्त्रम्, पुन **अभ्यस्तनिरवद्यधनुर्वेदम्** अभ्यस्त –घुषित, निरवद्य –प्रशस्य, धनुर्वेद –धनुर्विद्या येन तादृशम्, पुन **असि-गदा-चक्र-कुन्त-प्रासादिषु** तत्तदस्त्रविशेषप्रभृतिषु, **प्रहरणविशेषेषु** अस्त्रविशेषेषु, **कृतश्रमं** कृतशिक्षणायासम्, पुन **अचिरारूढयौवनम्** अभिनवोद्भूततारुण्यम्। **च** पुन, **अर्पितानल्पपदातिसैन्यम्** अर्पितं–दत्तम्, अनल्प–प्रचुरम्, पदातिसैन्य–पदगामि सैन्य यस्मै तादृशम्, मामिति शेष, **प्रधानैः** मुख्यै, **अवनिपतिभिः** नृपतिभि, **अमात्यैः** सचिवै, **सामन्तैः** अधीननृपैश्च, स **सहायं** सहायसहितम्, कृत्वा, **पुण्ये** प्रशस्ते, **अहनि** दिने, **प्राहिणोत्** प्रेषितवान् [ ढ ]।

**अथ** अनन्तरम्, **प्रातरेव** प्रात काल एव, **स्नातः** कृतस्नानः, **सभामण्डपं** सभागृहम्, **अगच्छम्** गतवान्, कीदृश ? **निर्वर्तिताभिमतदेवताविशेषपूजः** निर्वर्तिता–सम्पादिता, अभिमतदेवताविशेषस्य–इष्टदेवविशेषस्य, पूजा येन, यद्वा अभिमतदेवताया विशेषपूजा येन तादृश, किं कृत्वा ? **वस्त्राद्यतिसर्जनेन** वस्त्रादिदानेन, **द्विजातिलोकं** द्विजजनम्, **सम्पूज्य** सम्यक् पूजयित्वा, कदा ? **प्रतिकलावलोकितशङ्कुच्छायैः** कला नाम–राशे षष्टितमोंऽश, कला कला प्रति–प्रतिकलम्, अवलोकिता–दृष्टा, शङ्कोः –आरोपितद्वादशाङ्गुलदण्डस्य, छाया यैस्तादृशै, तच्छायावलोकननिर्णीतेष्टकालकैरित्यर्थ, **ज्योतिर्गणितविद्भिः** ज्योतिर्नाम–नक्षत्रम्, तत्प्रधानक शास्त्रमिति यावत्, तत्सम्बन्धि यद् गणित–गणना, तद्विद्भि –तदभिज्ञै, दैवविद्भिरित्यर्थ, **साधिते** निरूपिते, **लग्ने** राश्युदये, पुन कीदृश ? **सितदुकूलवासाः** सितं–शुभ्रम्, दुकूल–पट्टम्, वास –वस्त्र यस्य तादृश, पुन **सितकुसुमदामग्रन्थितशेखरः** सितानि–श्वेतानि, यानि कुसुमानि–पुष्पाणि, तेषा दाम्ना–मालया, ग्रथित –कल्पित, शेखर –शिरोभूषण येन तादृश, पुन **कौमुदीमहोत्सवभ्रमणलग्नेन** कौमुद्या चन्द्रिकाया, यो महोत्सव –महानुत्सव, तत्र यद् भ्रमण–विहरणम्, तेन लग्नेन शरीरसम्पृक्तेन, **शरच्चन्द्रातपेन इव** शरच्चन्द्रकिरणेनेवेत्युत्प्रेक्षा, **स्पर्शाह्लादिना** स्पर्शसुखावहेन, **सर्वाङ्गीणेन** सर्वाङ्गव्यापकेन, **चन्दनाङ्गरागेण**

विलासिनीभिः संपादितसकलयात्रामङ्गलः [ त ], प्रत्यग्रसप्तच्छदप्रवालदत्तसान्द्रमुखमुद्रमभिवन्द्य पुरःस्थापितं राजतपूर्णकुम्भमप्रतिरथाध्ययनध्वनिमुखरेण पुरःसरपुरोधसा द्विजातिवृन्देनानुगम्यमानश्चरणाभ्यामेव गत्वा प्रथमकक्षान्तरद्वारभूमिमग्रतः ससंभ्रमव्यापारिताङ्कुशेन वज्राङ्कुशनाम्ना महामात्रेण प्राङ्मुखीकृत्य विधृतं सितपिष्टपङ्कपाण्डुरितगात्रमक्षुद्रमणिचित्रनक्षत्रमालापरिक्षिप्तं सिन्दूरपाटलविकटकुम्भभागमारोपितानेकनिशितशस्त्रप्रभाशारशातकुम्भशारीपरिकरितपृष्ठपीठमश्रान्तमदवारिधारादुर्दिनान्धकारितकरटकूटं त्रिकूटपर्वतमिव परित्यक्तस्थावरावस्थममरवल्लभाभिधानं गन्धगजमधिरूढो [ थ ], दृढावनद्धतारतूणीरबन्धुरोभयस्कन्धशिखरः कनकपत्रभङ्गचित्रमध्यभागभाजा शरासनेन सनाथवामहस्तः सलीलमुद्धूयमानवालव्यजनकलापः सदर्पसर्प-

---

**टिप्पनकम्**—अप्रतिरथः-प्रस्थानमन्त्र । शारः-कर्बुरः [थ] ।

---

निहितं-स्थापितम्, दध्ना, कुसुमै -पुष्पै, दूर्वाङ्कुरै -दूर्वाख्यतृणविशेषाङ्कुरै, सनाथ-सहितम्, अक्षतपूर्णम्-आर्द्रतण्डुलपूर्णम्। कनकपात्र-सुवर्णपात्रं याभिस्तादृशीभि [ त ]। पुन **प्रत्यग्रसप्तच्छदप्रवालदत्तसान्द्रमुखमुद्रम्** प्रत्यग्रै -अभिनवै, सप्तच्छदस्य-सप्तसप्तपत्रविशिष्टवृन्तकवृक्षविशेषस्य, प्रवालै -पल्लवै, दत्ता-सम्पादिता, सान्द्रा-निबिडा, मुखमुद्रा-मुखावरणं यस्य तादृशम्, **पुरः** अग्रे, **स्थापितं** धृतम्, **राजतपूर्णकुम्भं** रजतनिर्मितपूर्णकलशम्, **अभिवन्द्य** नमस्कृत्य, **अप्रतिरथाध्ययनध्वनिमुखरेण** अप्रतिरथस्य-प्रस्थानमन्त्रस्य, यः, अध्ययनध्वनि -पठननाद, तेन, मुखरेण-वाचालेन, पुन **पुरस्सरपुरोधसा** पुर सर -अग्रेसर, पुरोधा पुरोहितो यस्य तादृशेन, **द्विजातिवृन्देन** द्विजगणेन, **अनुगम्यमानः** अनुस्रियमाण, **पुरस्सरपुरोध** इति पाठे तु पुरस्सर -पुरोधा यस्मिंस्तादृशम् यथा स्यात् तथेति क्रियाविशेषणविधया व्याख्येयम्, पुन **प्रथमकक्षान्तरितद्वारभूमिम्** प्रथमकक्षाया-प्रथमप्रतोलिकाया, अन्तरद्वारभूमिं-बाह्यद्वारप्रदेशम्, **चरणाभ्यामेव** पद्भ्यामेव, गत्वा, **अग्रत** अग्रे, **ससम्भ्रमव्यापारिताङ्कुशेन** ससम्भ्रमं-सत्वर यथा स्यात् तथा, व्यापारित -प्रयुक्त, प्रेरित इति यावत्, अङ्कुशो येन तादृशेन, **वज्राङ्कुशनाम्ना** अन्वर्थतदाख्येन, **महामात्रेण** हस्तिपकेन, **प्राङ्मुखीकृत्य** पूर्वमभिमुखीकृत्य, **विधृतं** स्थापितम्, पुन **सितपिष्टपङ्कपाण्डुरितगात्रम्** सितं-शुभ्रम्, यत् पिष्टं-चूर्णम्, पिष्टातकमित्यर्थ, तस्य पङ्केन-कर्दमेन, पाण्डुरित-किञ्चित्पीतरक्तीकृतम्, गात्र-शरीर यस्य तादृशम्, पुन **अक्षुद्रमणिचित्रनक्षत्रमालापरिक्षिप्तम्** अक्षुद्रा -महार्घा, ये मणय, तद्रूपाणा- चित्राणाम्-अनेकवर्णानाम्, नक्षत्राणा-ताराणाम्, मालया-समूहेन, सप्तविंशतिमौक्तिकनिर्मितहारेण वा, परिक्षिप्तं-व्याप्तम्, पुन **सिन्दूरपाटलविकटकुम्भभागम्** सिन्दूरेण-रक्तचूर्णेन, पाटल -रक्त, विकट -विशाल, कुम्भभाग -घटाकारमस्तकभागो यस्य तादृशम्, पुन **अनेकनिशितशस्त्रप्रभाशारशातकुम्भशारीपरिकरितपृष्ठपीठम्** अनेकेषा-बहूनाम्, निशितानां-तीक्ष्णानाम्, शस्त्राणां प्रभाभि -द्युतिभि, शारा -चित्रवर्णा, या शातकुम्भशार्य -सुवर्णमयपर्याणानि, ताभि परिकरित-परिवेष्टित, पृष्ठपीठं-पृष्ठरूपमासन यस्य तादृशम्, पुन **अश्रान्तमदवारिधारादुर्दिनान्धकारितकरटकूटम्** अश्रान्ताभि -अविच्छिन्नाभि, मदवारिधाराभि -मदजलधाराभि, यद्दुर्दिन-मेघाच्छन्नदिनम्, तेन अन्धकारित -अन्धकारावृत, करटकूट -गण्डस्थलशिखरं यस्य तादृशम्, अत एव **परित्यक्तस्थावरावस्थम्** परित्यक्ता स्थावरावस्था-स्थावरत्वरूपावस्था येन तादृशम्, गृहीतजङ्गमावस्थमित्यर्थ, **त्रिकूटपर्वतमिव** त्रिकूटाख्यपर्वतविशेषमिवेत्युत्प्रेक्षा, **अमरवल्लभाभिधानम्** अमराणा-देवानाम्, वल्लभ -प्रिय, इत्यन्वर्थतदाख्यम्, **गन्धगजम्** यस्य गन्धेनान्ये हस्तिन पलायन्ते तादृश मदगन्धाढ्यहस्तिनम्, **अधिरूढ** आरूढ [ थ ], पुन **दृढावनद्धतारतूणीरबन्धुरोभयस्कन्धशिखर** दृढं यथा स्यात् तथा, अवनद्धेन-आबद्धेन, ताराणा-विशुद्धमौक्तिकानाम्, तूणीरेण-इषुधिना, बाणाधारपात्रेणेति यावत्, बन्धुरम्-उन्नतानतम्, उभयस्कन्धशिखरं-स्कन्धद्वयोपरिभागो यस्य तादृश, पुन **कनकपत्रभङ्गचित्रमध्यभागभाजा** कनकपत्रभङ्गै -सुवर्णपत्ररचनाभि, चित्र -चित्रवर्णो यो मध्यभागस्तद्वता, **शरासनेन** धनुषा, **सनाथवामहस्त** सनाथ -सहित, वामहस्तो यस्य तादृश, पुन **सलीलं**-सक्रीड यथा स्यात् तथा, **उद्धूयमानवालव्यजनकलाप** उद्धूयमान -उत्क्षिप्यमाण, वालव्यजनस्य-चामरस्य, कलाप -समूहो यस्मिंस्तादृश,

वृद्धाभिः प्रीतिनिर्भरदृष्टिपातकुवलयितदिग्वलयाभिरवलोक्यमानो नागरिकाभिर्नगरान्निरगमम् [ न ] । क्रमेण च शरत्समयपरिचयप्रपञ्चितशोभाम्, आभोगिनीम्, उदारकलमकेदारपरिमलामोदितवनानिलाम्, उन्मदकुररकादम्बसारसारावमुखरितसरस्तीरनीराम्, कीरचञ्चुसंपुटच्युतार्धजग्धप्रियङ्गुमञ्जरीपिञ्जरजरद्द्रुमतलाम् [ प ], अक्षुद्रपादपालानितैरनवरतवेल्लत्कर्णपल्लवतरलितेन प्रतिवेलमुड्डीयमानेन निलीयमानेन च झङ्कारकारिणा मधुकरमण्डलेन पीयमानोद्दामदाननिर्झरैरप्रमत्तरक्षकपदातिवार्यमाणासंस्तुतजनप्रत्यासत्तिभिः पर्यन्तरचित-तृणकुटीरकेण प्रतिक्षणमाधोरणगणेन क्रियमाणविविधोपचारैरनवलोकितपरस्परैः प्रसिद्धाभिधानैर्जगति प्रधान-वारणैरधिष्ठितोद्देशाम् [ फ ], आगृहीतद्वीपान्तरगामिभूरिभाण्डैराभरणपर्याणकादिवृषोपस्करसमारचनसंतत-

---

सिद्धिर्यस्य तादृश., पुनः **प्रीतिनिर्भरदृष्टिपातकुवलयितदिग्वलयाभिः** प्रीतिनिर्भरदृष्टिपातैः-प्रेमपूर्णकटाक्षपातैः, कुवलयितं-संजातानि कुवलयानि कमलानि यस्मिंस्तादृशम्, दिग्वलय-दिङ्मण्डलं याभिस्तादृशीभि , **नागरिकाभिः** नगर-तरुणीभि , **अवलोक्यमानः** दृश्यमान , **नगरात्** रङ्गशालाख्यनगरात्, **निरगमम्** निर्गतवानहम् [ न ]।

**च** पुन , **क्रमेण** क्रमिकगत्या, **नगरसीमाम्** उक्तनगरपरावधिम्, **अलङ्घयम्** अतिक्रान्तवानहम्, कीदृशीम् ? **शरत्समयपरिचयप्रपञ्चितशोभाम्** शरत्समयेन-आश्विनकार्तिकमासात्मकशरत्कालेन, य परिचय -सङ्गम , तेन प्रपञ्चिता-विस्तारिता, शोभा यस्यास्तादृशीम्, पुन **आभोगिनीं** विस्तारवतीम्, पुन **उदारकलमकेदारपरिमला-मोदितवनानिलाम्** उदारा -महान्त , समृद्धा इति यावत्, कलमा -शालयो येषु तादृशानाम्, केदाराणा ये परिमला - सौरभाणि तै आमोदिता -सुरभिता , वनानिला -वनपवना यस्या तादृशीम्, पुन **उन्मदकुररकादम्बसार-सारावमुखरितसरस्तीरनीराम्** , उन्मदानाम्-उन्मत्तानां कुरर-कादम्ब-सारसानाम्, कुररा -उत्क्रोशपक्षिण , कादम्बा - कलहसा , सारसा -खनामख्याता पक्षिण , तेषाम्, आरावै -शब्दै , मुखरितानि-प्रतिध्वनितानि, सरस्तीरनीराणि-कासारतटस्थितजलानि यस्या तादृशीम्, पुन **कीरचञ्चुसम्पुटच्युतार्धजग्धप्रियङ्गुमञ्जरीपिञ्जरजरद्द्रुमतलाम्** कीराणा-शुकानाम्, चञ्चुसम्पुटात्-सम्पुटितचञ्चुसकाशात्, च्युताभि -स्खलिताभि , अर्धजग्धाभि -अर्धभुक्ताभि , प्रियङ्गु-मञ्जरीभि -प्रियङ्गुलतामञ्जरीभि , पिञ्जराणि-पीतानि, जरता जीर्णानाम्, द्रुमाणां-वृक्षाणाम्, तलानि-अध स्थलानि यस्या तादृशीम् [ प ], पुन **प्रधानवारणैः** प्रधानहस्तिभि , **अधिष्ठितोद्देशाम्** अधिष्ठित -आक्रान्त , उद्देश -उच्चप्रदेशो यस्या तादृशीम्, कीदृशै ? **अक्षुद्रपादपालानितैः** विशालवृक्षरूपस्तम्भबद्धै , पुन **मधुकरमण्डलेन** भ्रमरपुञ्जेन, **पीयमानोद्दामदाननिर्झरैः** पीयमान -पानकर्मीक्रियमाण , उद्दामा-उद्धत , अप्रतिहत इत्यर्थ , दाननिर्झर -मदजलप्रवाहो येषां तादृशै , कीदृशेन ? **अनवरतवेल्लत्कर्णपल्लवतरलितेन** अनवरत-निरन्तरम्, वेल्लद्भ्याम्-उच्चलद्भ्याम्, कर्णपल्लवाभ्या-कर्णरूपपल्लवाभ्याम्, तरलितेन-चञ्चलितेन, उत्क्षिप्तेनेति यावत्, अत एव **प्रतिवेलम्** सर्वकालम्, **उड्डीयमानेन** उपरि भ्रमता, **च** पुन , **निलीयमानेन** मदजलनिर्झरे तिरोभवता, पुन **झङ्कारकारिणा** कोलाहलकारिणा, पुन **अप्रमत्तरक्षकपदातिवार्यमाणासंस्तुतजनप्रत्यासत्तिभिः** अप्रमत्तै -अवहितै , रक्षकैश्च, पदातिभि - पादगामिजनै , वार्यमाणा-अवरुध्यमाना, असस्तुताना-अपरिचितानाम्, जनाना प्रत्यासत्ति -सान्निध्य येषा तादृशै , **पर्यन्तरचिततृणकुटीरकेण** पर्यन्ते-निकटे, रचित -निर्मित , तृणकुटीर -तृणमयह्रस्वकुटी येन तादृशेन, **आधो-रणगणेन** हस्तिपकसमूहेन, **प्रतिक्षणं** प्रतिपलम्, **क्रियमाणविविधोपचारैः** क्रियमाणा -विधीयमाना , विविधा -अनेक-प्रकारा , उपचारा -सेवा येषा तादृशै , पुन **अनवलोकितपरस्परैः** कलहभिया परस्परदृष्टिपथमगमितै , पुन **जगति** भुवने, **प्रसिद्धाभिधानैः** विश्रुतनामधेयै [ फ ], पुन कीदृशीम् ? **आढ्यनैगमानाम्** धनाढ्यवणिजाम्, **सार्थैः** समूहै , **स्थानस्थानेषु** प्रतिस्थानम् **कृतावस्थानाम्** कृतम्, अवस्थानम्-अवस्थितिर्यस्या तादृशीम्, कीदृशै ? **आगृहीतद्वीपान्तरगामिभूरिभाण्डैः** आ-समन्तात्, गृहीतानि, द्वीपान्तरगामीनि-अन्यद्वीपगन्तृकानि, भूरिभाण्डानि-बहुभाण्डानि यैस्तादृशै , पुन **आभरणपर्याणकादिवृषोपस्करसमारचनसन्ततव्यापृतभृतकैः** आभरणम्-अलङ्कर-

वृद्धाभिः प्रीतिनिर्भरदृष्टिपातकुवलयितदिग्वलयाभिरवलोक्यमानो नागरिकाभिर्नगरान्निरगमम् [ न ] । क्रमेण च शरत्समयपरिचयप्रपञ्चितशोभाम्, आभोगिनीम, उदारकलमकेदारपरिमलामोदितवनानिलाम्, उन्मदकुररकादम्बसारसारावमुखरितसरस्तीरनीराम्, कीरचञ्चुसंपुटच्युतार्धजग्धप्रियङ्गुमञ्जरीपिञ्जरजरद्रुमतलाम् [ प ], अक्षुद्रपादपालानितैरनवरतवेल्लत्कर्णपल्लवतरलितेन प्रतिवेलमुड्डीयमानेन निलीयमानेन च झङ्कारकारिणा मधुकरमण्डलेन पीयमानोद्दामदाननिर्झरैरप्रमत्तरक्षकपदातिवार्यमाणासंस्तुतजनप्रत्यासत्तिभिः पर्यन्तरचित-तृणकुटीरकेण प्रतिक्षणमाधोरणगणेन क्रियमाणविविधोपचारैरनवलोकितपरस्परैः प्रसिद्धाभिधानैर्जगति प्रधान-वारणैरधिष्ठितोद्देशाम् [ फ ], आगृहीतद्वीपान्तरगामिभूरिभाण्डैराभरणपर्याणकादिवृषोपस्करसमारचनसंतत-

---

सिद्धिर्यस्य तादृश.; पुन· **प्रीतिनिर्भरदृष्टिपातकुवलयितदिग्वलयाभिः** प्रीतिनिर्भरदृष्टिपातैः–प्रेमपूर्णकटाक्षपातैः, कुवलयित–सजातानि कुवलयानि कमलानि यस्मिंस्तादृशम्, दिग्वलय–दिङ्मण्डलं याभिस्तादृशीभि , **नागरिकाभिः** नगर-तरुणीभि , **अवलोक्यमानः** दृश्यमान , **नगरात्** रङ्गशालाख्यनगरात्, **निरगमम्** निर्गतवानहम् [ न ]।

**च** पुन , **क्रमेण** क्रमिकगत्या, **नगरसीमाम्** उक्तनगरपरावधिम्, **अलङ्घयम्** अतिक्रान्तवानहम्, कीदृशीम् ? **शरत्समयपरिचयप्रपञ्चितशोभाम्** शरत्समयेन–आश्विनकार्तिकमासात्मकशरत्कालेन, य परिचय –सङ्गम , तेन प्रपञ्चिता–विस्तारिता, शोभा यस्यास्तादृशीम्, पुन **आभोगिनीं** विस्तारवतीम्, पुन **उदारकलमकेदारपरिमला-मोदितवनानिलाम्** उदारा –महान्त , समृद्धा इति यावत्, कलमा –शालयो येषु तादृशानाम्, केदाराणा ये परिमला –सौरभाणि तै आमोदिता –सुरभिता , वनानिला –वनपवना यस्या तादृशीम्, पुन **उन्मदकुररकादम्बसार-सारावमुखरितसरस्तीरनीराम्**, उन्मदानाम्–उन्मत्ताना कुरर-कादम्ब-सारसानाम्, कुररा –उत्क्रोशपक्षिण , कादम्बा –कलहसा , सारसा –स्वनामख्याता पक्षिण , तेषाम्, आरावै –शब्दै , मुखरितानि–प्रतिध्वनितानि, सरस्तीरनीराणि–कासारतटस्थितजलानि यस्यां तादृशीम्, पुन **कीरचञ्चुसम्पुटच्युतार्धजग्धप्रियङ्गुमञ्जरीपिञ्जरजरद्रुमतलाम्** कीराणा–शुकानाम्, चञ्चुसम्पुटात्–सम्पुटितचञ्चुसकाशात्, च्युताभि –स्खलिताभि , अर्धजग्धाभि.–अर्धभुक्ताभि , प्रियङ्गु-मञ्जरीभि –प्रियङ्गुलतामञ्जरीभि , पिञ्जराणि–पीतानि, जरता जीर्णानाम्, द्रुमाणां–वृक्षाणाम्, तलानि–अध स्थलानि यस्यां तादृशीम् [ प ], पुन **प्रधानवारणैः** प्रधानहस्तिभि , **अधिष्ठितोद्देशाम्** अधिष्ठित –आक्रान्त , उद्देश –उच्चप्रदेशो यस्या तादृशीम्, कीदृशै ? **अक्षुद्रपादपालानितैः** विशालवृक्षरूपस्तम्भबद्धै , पुन **मधुकरमण्डलेन** भ्रमरपुञ्जेन, **पीयमानोद्दामदाननिर्झरैः** पीयमान –पानकर्मीक्रियमाण , उद्दामा–उद्धत , अप्रतिहत इत्यर्थ , दाननिर्झर –मदजलप्रवाहो येषा तादृशै , कीदृशेन ? **अनवरतवेल्लत्कर्णपल्लवतरलितेन** अनवरतं–निरन्तरम्, वेल्लद्भ्याम्–उच्चलद्भ्याम्, कर्णपल्लवाभ्यां–कर्णरूपपल्लवाभ्याम्, तरलितेन–चञ्चलितेन, उत्क्षिप्तेनेति यावत्, अत एव **प्रतिवेलम्** सर्वकालम्, **उड्डीयमानेन** उपरि भ्रमता, **च** पुन , **निलीयमानेन** मदजलनिर्झरे तिरोभवता, पुन **झङ्कारकारिणा** कोलाहलकारिणा, पुन **अप्रमत्तरक्षकपदातिवार्यमाणासंस्तुतजनप्रत्यासत्तिभिः** अप्रमत्तै –अवहितै , रक्षकैश्च, पदातिभि –पादगामिजनै , वार्यमाणा–अवरुध्यमाना, असंस्तुताना–अपरिचितानाम्, जनाना प्रत्यासत्ति –सान्निध्य येषा तादृशै , **पर्यन्तरचिततृणकुटीरकेण** पर्यन्ते–निकटे, रचित –निर्मित , तृणकुटीर –तृणमयह्रस्वकुटी येन तादृशेन, **आधो-रणगणेन** हस्तिपकसमूहेन, **प्रतिक्षणं** प्रतिपलम्, **क्रियमाणविविधोपचारैः** क्रियमाणा –विधीयमाना , विविधा –अनेक-प्रकारा , उपचारा –सेवा येषा तादृशै , पुन **अनवलोकितपरस्परैः** कलहभिया परस्परदृष्टिपथमगमितै , पुन **जगति** भुवने, **प्रसिद्धाभिधानैः** विश्रुतनामधेयै [ फ ], पुन कीदृशीम् ? **आढ्यनैगमानाम्** धनाढ्यवणिजाम्, **सार्थैः** समूहै , **स्थानस्थानेषु** प्रतिस्थानम् **कृतावस्थानाम्** कृतम्, अवस्थानम्–अवस्थितिर्यस्या तादृशीम्, कीदृशै ? **आगृहीतद्वीपान्तरगामिभूरिभाण्डैः** आ–समन्तात्, गृहीतानि, द्वीपान्तरगामीनि–अन्यद्वीपगन्तुकानि, भूरिभाण्डानि–बहुभाण्डानि यैस्तादृशै , पुन **आभरणपर्याणकादिवृषोपस्करसमारचनसन्ततव्यापृतभृतकैः** आभरणम्–अलङ्कर-

कुलशकुलकुलाभिर्दूरनिर्गतजलार्द्रमार्गपिशुनितपशुपरम्परोत्ताराभिरनवरतलोकविश्रामक्षामितोपान्तवेतसवनाभिर्वनस्रोतोवहाभिः सीमन्तिताम् [म], ईषदुपजातशोषकरीषसुखसंचारविशिखैः सपर्णतरुलतानिवेशजटालवेश्मपटलैरजिरमण्डपच्छायानिविष्टगोरसपरिपुष्टमहाकायपुष्टकौलेयकैः सकलकलोच्छलत्प्राज्यपरिमलव्यञ्जिततप्राज्यतक्रविन्दुक्षेपैरुत्कर्णतर्णकाकर्णितमथ्यमानमथितमन्थनीमन्थरनिर्घोषैः सतोषघोषाधिपसमाहूयमानपर्यटत्पायसार्थिपथिकपेटकैः क्रमागतैकैकवठरद्विजातिवचननिर्विचारप्रवर्तितशयनासनस्नानदानादिसर्वक्रियैः प्रातरेव प्रचारनिर्गताभिस्तत्कालमधिगताधिकवलोपचयबृंहितेन स्वाभाविकभव्यतागुणेन द्विगुणाकृष्टलोकदृष्टिभिः पीनपरिमण्डलापीनभारविकटमन्थरगमनाभिरनणुमणिघण्टिकाघोषरमणीयमितस्ततो विचरन्तीभिः सततानु-

---

भक्षणे, आकुलं-व्यग्रम्, शकुलकुल-मत्स्यविशेषगणो यासां तादृशीभिः, पुनः **दूरनिर्गतजलार्द्रमार्गपिशुनितपशुपरम्परोत्ताराभिः** दूरनिर्गतेन-दूरनिष्क्रान्तेन, जलार्द्रमार्गेण-जलाप्लुतवर्त्मना, पिशुनितः-सूचितः, पशुपरम्पराणां-पशुसमूहानाम्, उत्तारः-उपरिनिर्गमनं याभ्यस्तादृशीभिः, पुनः **अनवरतलोकविश्रामक्षमितोपान्तवेतसवनाभिः** अनवरतं-निरन्तरम्, लोकानां-जनानाम्, विश्रामे-खेदापनयने, क्षमितानि-क्षमतामापादितानि, **क्षामिते**ति पाठे तेषां विश्रामेण क्षामितानि-क्षीणतां गमितानीत्यर्थः, उपान्तानि-निकटानि, वेतसवनानि-वञ्जुलवनानि याभिस्तादृशीभिः [म], पुनः **गोकुलैः** गोष्ठैः, गवां स्थानैरित्यर्थः, **अधिष्ठितकक्षोपकण्ठाम्** अधिष्ठितः-व्याप्तः, कक्षस्य-वनस्य, उपकण्ठः-समीपप्रदेशो यस्याः तादृशीम्, यद्वा अधिष्ठितस्य कक्षस्य-वनस्य, उपकण्ठाम्-समीपाम्, कीदृशैः ? **ईषदुपजातशोषकरीषसुखसञ्चारविशिखैः** ईषत्-किञ्चित्, उपजातः-उत्पन्नः, शोषः-शुष्कता येषां तादृशैः, करीषैः-गोमयैः, सुखसञ्चारा-सुकरगमना, विशिखा-रथ्या, येषां तादृशैः, पुनः **सपर्णतरुलतानिवेशजटालवेश्मपटलैः** सपर्णानां-पत्रपूर्णानाम्, तरुलतानां-तरूणां-वृक्षाणाम्, तदाश्रितलतानां च, निवेशेन-समावेशेन, जटालः-समृद्धम्, वेश्मपटलं-गृहसमूहो येषां तादृशैः, पुनः **अजिरमण्डपच्छायानिविष्टगोरसपरिपुष्टमहाकायपुष्टकौलेयकैः** अजिरमण्डपस्य-प्राङ्गणवर्तिगृहविशेषस्य, छायायां निविष्टः-अवस्थितः, तथा गोरसेन-पयोदधिघृतादिना, परिपुष्टः-अतिपुष्टः, महाकायः-विशालशरीरं यस्य तादृशः, तथा पुष्टः-प्रबलः, एवंविधः कौलेयकः-कुलागतः कुक्कुरो येषां तादृशैः, पुनः **सकलकलोच्छलत्प्राज्यपरिमलव्यञ्जिततप्ताज्यतक्रविन्दुक्षेपैः** सकलकलम्-कलकलेन-शब्दविशेषेण सहितं यथा स्यात् तथा, उच्छलन्तः-उद्गच्छन्तः, प्राज्यपरिमलेन-प्रचुरसौरभेण, व्यञ्जिताः-सूचिताः, तप्तघृतसुगन्धज्ञापिता इत्यर्थः, एवंविधाश्च ये, तप्तस्य, आज्यस्य-घृतस्य, तक्रबिन्दवः, तप्यमाननवनीतावस्थागतघृतस्थतक्रस्य विन्दव इत्यर्थः, तेषां क्षेपाः-विक्षेपः-दूरीभवनं येषु तादृशैः, पुनः **उत्कर्णतर्णकाकर्णितमथ्यमानमथितमन्थनीमन्थरनिर्घोषैः** उत्-ऊर्ध्वौ, कर्णौ येषां तादृशैस्तर्णकैः-वत्सैः, आकर्णितः-श्रुतः, मथ्यमानस्य-आलोड्यमानस्य, मथितस्य-तक्रस्य, या मन्थनी-मथनदण्डः, तस्याः मन्थरः-मन्दः, निर्घोषो येषां तादृशैः, पुनः **सतोषघोषाधिपसमाहूयमानपर्यटत्पायसार्थिपथिकपेटकैः** सतोषं-परितोषेण सहितं यथा स्यात् तथा, घोषाधिपेन-आभीरग्रामाधिपेन, समाहूयमानं-सम्यगाहूयमानम्, पर्यटतां-परिभ्रमताम्, पायसार्थिनां-क्षीरान्नाभिलाषिणाम्, पथिकानां-मार्गगामिनाम्, पेटकं-समूहो येषु तादृशैः, पुनः **क्रमागतैकैकवठरद्विजातिवचननिर्विचारप्रवर्तितशयनासनस्नानदानादिसर्वक्रियैः** क्रमेण आगतस्य एकैकस्य वठरस्य-मूर्खस्य, द्विजातेः-द्विजस्य, वचनेन-वाक्येन, निर्विचारं-स्वविचारं विनैव, प्रवर्तिता-गोपैः प्रारब्धा, शयनम्, आसनम्, स्नानम्, दानम्, तदादिः-तत्प्रभृतिः, सर्वा-सकला, क्रिया येषु तादृशैः, पुनः **गोभिः** धेनुभिः, **अशून्यपर्यन्तैः** व्याप्तनिकटैः, कीदृशीभिः ? **प्रातरेव** प्रातःकाल एव, **प्रचारनिर्गताभिः** प्रचाराय-विचरणाय, यद्वा तृणभक्षणाय, गृहान्निष्क्रान्ताभिः, पुनः **तत्कालं** प्रचारकालमेव, **अधिगताधिकवलोपचयबृंहितेन** अधिगतः-प्राप्तः, योऽधिकबलोपचयः-अधिकबलवृद्धिः, तेन बृंहितेन-वर्धितेन, **स्वाभाविकभव्यतागुणेन** स्वाभाविकसौन्दर्यगुणेन, **द्विगुणाकृष्टलोकदृष्टिभिः** द्विगुणं यथा स्यात् तथा, आकृष्टाः-कृताकर्षणाः, लोकानां-जनानाम्, दृष्टयो याभिस्तादृशीभिः, पुनः **पीनपरिमण्डलापीनभारविकटमन्थरगमनाभिः** पीनानि-स्थूलानि, परिमण्डलानि-वर्तुलाकाराणि च, यानि आपीनानि-ऊधांसि, स्तना इत्यर्थः, तेषां भारेण-गुरुतया, विकटं-प्रकटम्, मन्थरं-मन्दम्, गमनं यासां तादृशीभिः, पुनः **अनणुमणिघण्टिकाघोषरमणीयम्** अनणुमणिघण्टिकानाम्-स्थूलमणिमयग्रीवास्थकिङ्किणीनाम्, घोषेण-ध्वनिना, रमणीयं-मनोहरं यथा स्यात् तथा, **इतस्ततः** अत्र तत्र, **विचरन्तीभिः** विहरन्तीभिः, पुनः **सततानुचरचाटुकारस्वैरसौरमेयाभिः**

करिषु कपिषु क्रमेलकेषु च प्रहितदृष्टिभिः प्रमाणरूपवलोपचयशालिनां प्रत्येकमनडुहां मूल्यमानमुद्घट्टयद्भिः [र] 'कथय, क एष राजपुत्रः, केयं राज्ञी, किमभिधानोऽयं द्विरदः' इत्यनवरतप्रयुक्तया प्रश्नपरम्परया कदर्थितसकृद्दृष्टकटकग्रामलाकुटिकैः करेणुकाधिरूढं क्षुद्रगणिकागणमप्यन्तःपुरमिति धृतोष्णवारणं चारणमपि महाराजपुत्र इति कनकनिष्कावृतकन्धरं वणिजमपि राजप्रसादचिन्तक इति चिन्तयद्भिः पृष्टैरपि प्रतिवचनमप्रयच्छद्भिराहूतैरप्यन्यतो गच्छद्भिः पश्यतोऽप्यभिमुखमङ्गुलीभिर्दर्शयद्भिः शृण्वतामपि चेष्टितमशङ्कितैरुच्चस्वनेन सूचयद्भिर्विषमावतारसंमर्देषु दुर्दान्तकरभवाजिवृषभोत्प्लवनेषु व्यालदन्तिवेगोपसर्पणेषु च स्खलतः पततः पलायमानानवलोक्यावलोक्य समकालकृतकलकलैः सतालशब्दमुच्चैस्तरां हसद्भिः [ल], कैश्चिन्मार्गनिहितनिश्चलदृष्टिभिः पश्चादेष्यतां दिगन्तविख्यातयशसामुर्वीभृतां कुमाराणां राजपत्नीनां प्रधानगणिकानां पट्टहस्तिनां च दर्शनाशया क्षुत्पिपासापरिगतैरूर्ध्वशोषं शुष्यद्भिः, कैश्चित् पृष्ठसङ्गिस्वैरिपामरीपीवरस्तनस्पर्शलुब्धैः पीडितैरपि

---

वलम्बनैः, च पुन, स्कन्धाधिरोपितदयितडिम्भैः स्कन्धे, आरोपित –धृत, दयित –प्रिय, डिम्भ –शिशुर्यैस्तादृशै, पुन सर्वत्र सर्वविषयेषु, सकुतूहलैरपि कौतुकान्वितैरपि, करिषु हस्तिषु, कपिषु मर्कटेषु, च पुन, क्रमेलकेषु उष्ट्रेषु, सविशेषं विशेषेण, प्रहितदृष्टिभिः प्रेरितलोचनै, पुन प्रमाणरूपवलोपचयशालिनाम् प्रमाणं–दैर्ध्यम्, रूप–सुन्दराकृति, वलोपचय –वलवृद्धि, तै, शोभावताम्, अनडुहां वृषभाणाम्, प्रत्येकम् एकैकस्य, मूल्यमानम् मूल्यप्रमाणम्, उद्घट्टयद्भिः कथयद्भि [र] कथय ब्रूहि, एषः अयम्, राजपुत्रः नृपकुमार, कः किंनामा?, इयं पुरोवर्तिनी, राज्ञी राजपत्नी, का किंनाम्नी?, अयं पुरोवर्ती, द्विरदः हस्ती, किमभिधानः किंनामा?, इति इत्थम्, अनवरतप्रयुक्तया निरन्तरकृतया, प्रश्नपरम्परया प्रश्नसमूहेन, कदर्थितसकृद्दृष्टकटकग्रामलाकुटिकैः कदर्थिता –क्लेशिता, सकृत्–एकवारम्, दृष्ट–दृष्टिगोचरीकृतम्, कटकं–सेना यैस्तादृशा, ग्रामलाकुटिका –ग्रामवासिदण्डिजना यैस्तादृशैः, करेणुकाधिरूढं हस्तिनीमारूढम्, क्षुद्रगणिकागणमपि साधारणवेश्यावृन्दमपि, अन्तःपुरम् अन्तःपुराङ्गनागणम्, इति चिन्तयद्भिः मन्यमानै, पुन धृतोष्णवारणं गृहीतच्छत्रम्, चारणमपि भृत्यमपि, महाराजपुत्र इति महाराजकुमार इति, चिन्तयद्भि, पुन कनकनिष्कावृतकन्धरं कनकस्य–सुवर्णस्य, निष्केण–अष्टोत्तरशतेन, आवृता–व्याप्ता, कन्धरा–ग्रीवा यस्य तादृशम्, वणिजमपि आपणिकमपि, राजप्रसादचिन्तकः राजप्रीतिप्रार्थी, इति चिन्तयद्भि, पुन पृष्टैरपि कृतप्रश्नैरपि, प्रतिवचनम् उत्तरम्, अप्रयच्छद्भिः अप्रददद्भि, पुन आहूतैरपि कृताह्वानैरपि, अन्यतः अन्यत्र, गच्छद्भि, पुन अभिमुखं सम्मुखम्, पश्यतोऽपि अवलोकमानानपि, लोकान्, अङ्गुलीभि, दर्शयद्भिः सकेतयद्भि, पुन चेष्टितं शरीरचेष्टाविशेष शृण्वतामपि श्रुतिगोचरीभूतध्वनिना जानतामपि, अशङ्कितैः तच्छ्रवणशङ्कयापि रहितै, उच्चस्वनेन उच्चशब्देन, सूचयद्भिः बोधयद्भि, पुन विषमावतारसंमर्देषु निम्नोन्नतस्थलावतरणार्थजनसम्मेलनेषु, स्खलतः विचलत, पुन दुर्दान्तकरभ-वाजि-वृषभोत्प्लवनेषु दुर्दान्त.–उद्धतो य करभ –हस्तिशिशु, वाजी–अश्व, वृषभ –वृष, तेषाम्, उत्प्लवनेषु–उत्कूर्दनेषु, पतत, च पुन, व्यालदन्तिवेगोपसर्पणेषु व्यालदन्तिनां–दुष्टहस्तिनाम्, "व्यालो दुष्टगजे सर्पे शठे श्वापद-सिंहयो" इति हैम, वेगेन–त्वरया, यद् उपसर्पण–समीपागमन तेषु, पलायमानान् भयादिना स्थानत्यागेनान्यस्थानं गच्छतो जनान्, अवलोक्य अवलोक्य दृष्ट्वा दृष्ट्वा, समकालकृतकलकलैः समकालं–एककालम्, कृत कलकल –कोलाहलो यैस्तादृशै, पुन सतालशब्दं प्रसृतहस्तध्वनिपूर्वकम्, उच्चैस्तराम् अत्युच्चै, हसद्भिः हास कुर्वद्भि [ल], कैश्चित् कैरपि जनै, मार्गनिश्चलनिहितदृष्टिभिः मार्गे–पथि, निश्चल–नि स्पन्द यथा स्यात् तथा, निहिते–निवेशिते, दृष्टी लोचने यैस्तादृशै, पुन पश्चात् पृष्ठदेशात, एष्यताम् आगमिष्यताम्, दिगन्तविख्यातयशसाम् आदिगन्तप्रसिद्धयशस्कानाम्, उर्वीभृतां नृपाणाम्, कुमाराणां राजपुत्राणाम्, राजपत्नीनां राज्ञीनाम्, प्रधानगणिकानां मुख्यवेश्यानाम्, च पुन, पट्टहस्तिनां प्रधानगजानाम्, दर्शनाशया दर्शनाभिलाषेण, क्षुत्-पिपासापरिगतैः बुभुक्षा पिपासाव्याप्तै, अत एव ऊर्ध्वशोषं शुष्यद्भिः ऊर्ध्वं कण्ठनालादिप्रदेशावच्छेदेन शोषणमनुभवद्भि, पुन कैश्चित् कैरपि, पृष्ठसङ्गिस्वैरिपामरीपीवरस्तनस्पर्शलुब्धैः

प्रौढिमात्मनः प्रकटयद्भिः [ह], अन्यैस्तु दूरोदस्तकण्ठैः पृष्ठलग्नहृष्टबालकवृन्दकलकलसूचितान् ग्राममध्ये विचरतः स्वच्छन्दचारिणो महामात्रतन्त्रेण परिवृतान् वारणपतीनवलोक्य जातसंक्षोभैर्झटिति कोष्ठकद्वारेषु संग्रहकान् पातयद्भिः पश्चाद्वाटकेषु गोमयपिण्डकूटानि गोपयद्भिर्भग्नवृतिषु निष्कुटेषु त्रपुसकर्कारुकारवेल्लकादिवल्लीफलान्यादायादाय वेश्मनि प्रवेशयद्भिर्गृहधनं च कांस्यपात्रिकासूत्रकम्बलप्रायं बलाधिकृतधामन्यबलाजनस्य न्यासीकुर्वद्भिरनेकवृत्तान्तैर्ग्रामेयकैरवलोक्यमानबलसंहतिः [क्ष] प्रतिमार्गमुत्तम्भिताभिनवतोरणान् स्थानस्थानोपसर्पत्कुसुमफलहस्तवास्तव्यवित्ताढ्यलोकानूर्ध्वीकृतासु तत्क्षणं वेणुयष्टिषु कुड्मलीकृत्य योजितैर्माञ्जिष्ठैश्च माहारजनैश्च कर्पटैः जटालीकृतशीर्णगृहपटलानतिक्रम्य कतिचिद् वेलावनग्रामकानग्रतो दत्तदृष्टिः [ज्ञ] पिधानमिव पातालस्य, मणिकुट्टिममिव त्रिभुवनचतुःशालस्य, जन्मपल्वलमिवाकाशकुवलयस्य, प्रभापटलमिव

---

**टिप्पनकम्**—कोष्ठक -वरण्डक, संग्रहका -पलिहका, निष्कुट -गृहवाटिका [क्ष]। माहारजनानि-कौसुम्भानि [ज्ञ]॥

---

शालीन -अधृष्टो लज्जायुक्त, कुलपुत्रकाणा-कुलप्रसूतानुकम्पितपुत्राणाम्, वर्ग -समूहो यैस्तादृशै, **ग्रामपोटानां** ग्रामस्थाना पुंलक्षणाना स्त्रीणाम्, **अग्रतः** अग्रे, **सगर्वं** साभिमानम्, **आत्मनः** स्वस्य, **प्रौढिं** प्रगल्भताम्, **प्रकटयद्भिः** प्रदर्शयद्भि [ह], पुन **अन्यैस्तु** अन्यव्यक्तिभिस्तु, **दूरोदस्तकण्ठैः** दूरम्, उदस्त -उत्क्षिप्त, कण्ठ -कण्ठव्यापारो यैस्तादृशै, अतिशुष्ककण्ठैरित्यर्थ, **पृष्ठलग्नहृष्टबालकवृन्दकलकलसूचितान्** पृष्ठलमस्य-पृष्ठसम्बद्धस्य, हृष्टबालकवृन्दस्य-प्रसन्नशिशुसमूहस्य, कलकलेन-कोलाहलेन, सूचितान्-बोधितान्, ग्राममध्ये **विचरतः** भ्रमत, **स्वच्छन्दचारिणः** स्वेच्छाचारिण, **महामात्रतन्त्रेण** हस्तिपकप्रधानेन, **परिवृतान्** परिवेष्टितान्, **वारणपतीन्** गजेन्द्रान्, **अवलोक्य** दृष्ट्वा, **जातसंक्षोभैः** उत्पन्नसम्भ्रमै, **कोष्ठकद्वारेषु** वरण्डकद्वारेषु, **संग्रहकान्** परिधकान्, पातयद्भि, पुन **पश्चाद्वाटकेषु** वृतीनां पश्चाद्भागेषु, **गोमयपिण्डकूटानि** गोमयपिण्डसमूहान्, **गोपयद्भिः** रक्षद्भि, पुन **भग्नवृतिषु** भग्ना -भङ्ग प्राप्ता, वृतय -प्राकारा येषा तादृशेषु, **निष्कुटेषु** गृहवाटिकासु, **त्रपुस-कर्कारु-कारवेल्लकादिवल्लीफलानि** त्रपुसं नाम-फलविशेषलता, कर्कारु -कूष्माण्डलता, कारवेल्लक 'कारेला' प्रसिद्धफलविशेषलता, तदादीनां-तत्प्रभृतीनां, वल्लीना-लताना फलानि, **आदाय आदाय** गृहीत्वा गृहीत्वा, **वेश्मनि** गृहे, **प्रवेशयद्भिः** प्रवेश्य गोपयद्भि, **च** पुन, **कांस्यपात्रिकासूत्रकम्बलप्रायं** कांस्यपात्रिका-कांस्यस्य-धातुविशेषस्य भाजनम्, सूत्र-तन्तु, कम्बल -ऊर्णातन्तुमय पट, तत्प्राय-तत्प्रचुरम्, **गृहधनं** गृहवित्तम्, **अबलाजनस्य** स्त्रीजनस्य, **बलाधिकृतधामनि** बलेन-स्वसामर्थ्येन बलात्कारेणेत्यर्थ, अधिकृते रक्षिताधिकारे, धामनि-गृहे, **न्यासीकुर्वद्भिः** निक्षिपद्भि, पुन **अनेकवृत्तान्तैः** विविधवार्ताकै, बहुविधप्रवृत्तिकैरिति यावत् [क्ष]। पुन कीदृशोऽह समरकेतु ? **कतिचित्** कतिपयान्, **वेलावनग्रामकान्** वेलाया -जलधितीरस्य यद् वनं तन्मध्यवर्तिनो लघुग्रामान्, **अतिक्रम्य** उलङ्घ्य, **अग्रतः** तदग्रे, **दत्तदृष्टिः** क्षिप्तलोचन, कीदृशान् ? **प्रतिमार्ग** मार्गे मार्गे, **उत्तम्भिताभिनवतोरणान्** उत्तम्भितानि, उद्बद्धानि, अभिनवानि-नवीनानि, तोरणानि-द्वाराग्रे स्तम्भोपरि निबद्धानि बहिर्द्वाराणि येषु तादृशान्, पुन **स्थानस्थानोपसर्पत्कुसुमफलहस्तवास्तव्यवित्ताढ्यलोकान्** स्थाने स्थाने उपसर्पन्त -उपगच्छन्त, कुसुमफलहस्ता -पुष्पफलरूपोपहारहस्ता, वास्तव्या -तद्ग्रामवासिन, वित्ताढ्या -धनाढ्याः, लोका-जना येषु तादृशान्, पुन. **तत्क्षणं** तत्कालमेव, **ऊर्ध्वीकृतासु** उन्नमितासु, **वेणुयष्टिषु** वंशदण्डेषु, **कुड्मलीकृत्य** आकुञ्च्य, **योजितैः** उत्क्षिप्तै, **माञ्जिष्ठैः** मञ्जिष्ठाख्यरागविशेषरक्तै, **च** पुन, **माहारजनैः** माहारजनेन-कुसुम्भाख्यरागविशेषेण रक्तै, **कर्पटैः** पटखण्डै, **जटालीकृतशीर्णगृहपटलान्** जटालीकृतं-व्याप्त, शीर्णाना-भग्नाना, गृहाणा पटलं-समूहो येषु तादृशान् [ज्ञ]। कीदृशमम्भोनिधिम् ? **पातालस्य** अधोलोकस्य, **पिधानमिव** आवरणमिव, पुन **त्रिभुवनचतुःशालस्य** त्रिभुवनरूपस्य चतु शालस्य-चतसृणा शालानां समाहारस्य, अन्योऽन्याभिमुखगृहचतुष्टयस्य, **मणिकुट्टिममिव** मणिखचित मध्यवर्ति संस्कृतभूमितलमिव, पुन **आकाशकुवलयस्य** आकाशरूपस्य कमलस्य,

मेघदुर्दिनेषु दिनेपूत्पथेनागत्यागत्य निम्नगाभिसारिकाभिर्गाढमुपगूढम् [इ], मुहुरवतरन्त्या तोयमादायादाय पुनरूर्ध्वमतिदूरमुत्पतन्त्या सान्द्रशीकरक्षोदविरचितानेकसुरचापया जगदुपवनं सेक्तुममरपतिना प्रकल्पितस्य सर्वतः सुघटितकाष्ठस्य गगनारघट्टस्य घटीमालयेव जलदसतत्या सततमुद्वच्यमानम [ई], विषमवाहन-विसंस्थुलस्य निजरथस्याष्टमं तुरङ्गममसमग्रताजनितवैरूप्यस्य चात्मवपुषः षोडशीं कलामन्वेष्टुमिव मथनदृष्ट-दिव्याश्वशशिखण्डसंभवाभ्यामहिमगभस्तिभ्यामनवरतकृतमज्जनोन्मज्जनम् [उ], अगस्त्यजठरानलमिव पानावसरलग्नं युगान्तविद्युद्वलयमिव संवर्तकाभ्रगर्भगलितमनवरतमानीयमानं वृद्धिमुदकैरुदरैकदेशेन दहन-

---

**उत्पथेन** विरुद्धमार्गेण, आगत्य आगत्य, **निम्नगाभिसारिकाभिः** निम्न-नीचं गच्छन्तीति निम्नगा नद्य, तद्रूपाभि, अभिसारिकाभि -परपुरुषगामिनीभि कामिनीभि, **गाढं** अत्यन्त यथा स्यात् तथा, **उपगूढम्** आलिङ्गितम्, कीदृशीभिः? **मुद्रितमुखरहंसनूपुरस्वनाभिः** मुखरा -वाचाला ये हंसा -पक्षिविशेषा, तद्रूपाणा नूपुराणा-पादाभरणविशेषाणा, स्वना -ध्वनय, मुद्रिता -निरुद्धा याभिस्तादृशीभि, वर्षासु नदीजलाना दूषिततया हंसाना मानससरोवरप्रस्थानश्रवणादिति भाव, पुन· **त्वरितगतिवशोत्कम्पमानपृथुपयोधरतटाभिः** त्वरितगतिवशेन-ससम्भ्रमगमनवशेन, उत्कम्पमान -उत्-ऊर्ध्वं कम्पमान, उद्गच्छन्नित्यर्थं, पृथुपयोधर -स्थूलस्तनरूप, तटो यासा तादृशीभि, पुन **मुक्तक्रौञ्चमालामेखलानि** मुक्ता-त्यक्ता, क्रौञ्चाना-तज्जातीयपक्षिविशेषाणा, माला-पङ्क्तिरूपा, मेखला-काञ्ची यैस्तादृशानि, **पुलिनजघनस्थलानि** सिकतामयस्थलरूपाणि कटिपुरोभागस्थलानि, **बिभ्रतीभिः** धारयन्तीभि, **इतस्ततः** अत्र तत्र, **वलितविलोलतारशफरलोचनाभिः** वलितानि-व्यापारितानि, विलोलताराणि-तरलकनीनिकानि, शफररूपाणि-मत्स्यविशेषरूपाणि, लोचनानि-नेत्राणि याभिस्तादृशीभि, **वलितविलोलतामरसे**ति पाठे तु तामरसरूपाणि-कमलरूपाणि लोचनानि याभिरित्येवं व्याख्येयम्, पुन **बहलशैवल-प्रवाल-कस्तूरिकास्तवककलङ्कितानि** बहलाना-विपुलानाम्, शैवलाना-जलतृणविशेषाणाम्, प्रवालाना-विद्रुमाणाम्, तद्रूपणामित्यर्थं, कस्तूरिकाणा-मृगमदाना, स्तवकेन-गुच्छेन, कलङ्कितानि-चिह्नितानि, **मुखानि** अग्रभागरूपाणि वदनानि, **पङ्कमलिनेन** कर्दमकलुषितेन, **नवनीरवाससा** नवीनजलरूपेणवाससा-वस्त्रेण, **सुदूरम्** अतिदूरपर्यन्तम्, **आवृण्वतीभिः** आच्छादयन्तीभि [इ]। पुन **जलदसंतत्या** मेघपङ्क्त्या, **सततम्** अनवरतम्, **उद्वच्यमानम्** उद्ध्रियमाणजलम्, कीदृश्या? **मुहुः** अनेकवारम्, **अवतरन्त्या** आपतन्त्या, पुन **तोयं** जलम्, **आदाय आदाय** गृहीत्वा गृहीत्वा, पुन **अतिदूरम्** अत्यन्तदूरम्, **ऊर्ध्वम्** उपरि, **उत्पतन्त्या** उद्गच्छन्त्या, पुन **सान्द्रशीकरक्षोदविरचितानेकसुरचापया** सान्द्राणां शीकराणा-जलकणाना, क्षोदै -चूर्णै, विरचिता -निर्मिता, अनेके सुरचापा -इन्द्रधनूषि यया तादृश्या, कयेव? **जगदुपवनं** जगद्रूपमारामम्, **सेक्तुं** सेकेन सवर्द्धयितुम्, **अमरपतिना** इन्द्रेण, **प्रकटितस्य** आविष्कृतस्य, **सर्वतः** सर्वभागेषु, **सुघटितकाष्ठस्यः** सुघटितानि-सन्निवेशितानि काष्ठानि यस्मिंस्तादृशस्य, अन्यत्र सुघटिता काष्ठा -दिशो यत्र तस्य, **गगनारघट्टस्य** आकाशरूपजलनिष्कासनयन्त्रस्य, **घटीमालयेव** घटीपङ्क्त्येव [ई]। पुन **मथनदृष्टदिव्याश्व-शशिखण्डसम्भवाभ्यां** मथनेन-आलोडनेन, दृष्ट -परीक्षित, दिव्याश्वस्य-स्वर्गीयाश्वस्य, उच्चैःश्रवस इत्यर्थं, शशिखण्डस्य-चन्द्रखण्डस्य च, सम्भव -उत्पत्तिर्याभ्यां तादृशाभ्याम्, **अहिमहिमगभस्तिभ्याम्** अहिम -उष्ण, गभस्ति -किरणो यस्य सोऽहिमगभस्ति सूर्य, हिम -शीतो गभस्ति -किरणो यस्य स हिमगभस्तिश्चन्द्र., ताभ्याम्, **अनवरतकृतमज्जनोन्मज्जनम्** अनवरत-निरन्तरं, कृत मज्जनम्-अन्तरवगाहनम्, उन्मज्जनम्-उत्प्लवनं च, प्रवेशनिर्गमावित्यर्थं, यस्मिंस्तादृशम्, किं कर्तुमिव? **विषमवाहनविसंस्थुलस्य** विषमै -विषमसख्यै सप्तभिरित्यर्थं, वाहनै -अश्वै, विसस्थुलस्य-शिथिलगतिकस्य, **निजरथस्य** स्वरथस्य, अष्टमं **तुरङ्गमम्** अश्वम्, **अन्वेष्टुमिव** गवेषयितुमिव सूर्येण, **असमग्रताजनितवैरूप्यस्य** असमग्रतया-अपूर्णतया, जनितम्-उत्पादितम्, वैरूप्यम्-अचारुत्व यस्य तादृशस्य, **आत्मवपुषः** स्वशरीरस्य, **षोडशीं** षोडशसख्यापूरणीम्, **कलाम्** अशम्, अन्वेष्टुमिव चन्द्रेण [उ]। पुन **उदरैकदेशेन** स्वोदरैकभागेन, **और्वाभिधानं** वाडवाख्यम्, **दहनम्** अग्निम्, **दधानं** धारयन्तम्, कमिव? **पानावसरलग्नम्** अगस्त्यकृतशोषणसमयसम्पृक्तम्, **अगस्त्यजठरानलमिव** अगस्त्यस्य-तदाख्यमुने, उदराग्निमिव, पुन **संवर्तकाभ्रगर्भगलितं** संवर्तकाख्यमेघगर्भनिर्गतम्, **युगान्तविद्युद्वलयमिव** प्रलयकालिकविद्युन्मण्डलमिवेति चोत्प्रेक्षा, पुन

वर्ज्यमानैरपि मुखे पयोभिरनुपजाततृप्तेरौर्वदहनस्य दर्शनाज्झटिति निःसृतैरट्टहासच्छेदैरिव कैलासविशदैः फेनराशिभिराशामुखानि धवलयन्तम् [लृ], अमृतपङ्कैकशरणजीर्णजलकरिकुलातिवाह्यमाननिरवसानकालकूट-विषदाहवेदनमामोदावकृष्टपन्नगदृढाश्लिष्टसुरतरुजटाच्छेदप्ररूढविटपमासन्ननगरायातदैत्यदारिकान्विष्यमाण-कौस्तुभसजातीयरत्नोपलशकलमुदश्रुजलदेवतादृश्यमानलक्ष्मीचिरोपभुक्तप्रदेशं त्रिदशनीतशेषकतिपयाप्सरः-संचारसूचितं मथनस्थानमुद्वहन्तम् [ लॄ ], गृहीतवेलैः सद्वृत्तैरिव वनैः परिवृतममृतस्यन्दिभिर्गुरूपदेशैरिव शशाङ्कपादैराहितोदयं विस्तारितरङ्गैः कुशीलवैरिव नदीपूरैर्नर्त्यमानमुल्लासितवेत्रयष्टिभिः प्रतीहारैरिव मरुद्भिर्दिक्षु संचार्यमाणं [ ए ] स्वदेहोद्भवेन दुष्पुत्रेणेव वाडवाग्निना शोष्यमाणमूर्मिमालाभिरप्यनासादितपरपार-माशागजैरप्यसोढगर्जोद्गार खेचरैरप्यवीक्षितशिखाविश्रामं सर्वज्ञेनाप्यविज्ञातसर्वजलचरनामग्रामं तिमिङ्गिल-

---

**टिप्पनकम्—गृहीतवेलैः सद्वृत्तैरिव वनैः** एकत्र वेला—अर्द्धलाछेदनम्(?) अन्यत्र पर्यन्तभूमि । **विस्तारितरङ्गैः कुशीलवैरिव नदीपूरैः** एकत्र विस्तृतकल्लोलै, अन्यत्र विस्तारितनर्तनस्थाने, कुशीलवा –नटा । **उल्लासितवेत्रयष्टिभिः** एकत्र वेत्रयष्टि –दण्ड, अन्यत्र जलवशा. [ ए ] ।

---

शुभ्रयन्तम्, कीदृशै ? **और्वदहनस्य** वाडवानलस्य, दर्शनात्, **झटिति** शीघ्रम्, **निःसृतैः** निर्गतै, **अट्टहासच्छेदैरिव** महाहासखण्डैरिवेत्युत्प्रेक्षा, कीदृशस्य तस्य ? **सर्वतः** सर्वदिक्षु, **प्रसारितायतज्वालाजिह्वस्य** प्रसारिता–विस्तारिता, आयता–दीर्घा, ज्वालारूपा जिह्वा येन तादृशस्य, पुन मुखे **सततम्** अनवरतम्, **आवर्ज्यमानैरपि** आह्रियमाणैरपि, **पयोभिः** जलै, **अनुपजाततृप्तेः** अनुत्पन्नपिपासानिवृत्ते [ लृ ]। पुन **त्रिदशनीतशेषकतिपयाप्सरःसञ्चार-सूचितमथनस्थानं**-त्रिदशै –देवै, आनीताभ्य –गृहीताभ्य, शेषा –अवशिष्टा या कतिपया –परिमिता, अप्सरस –स्वर्वेश्या, तासां सञ्चारेण-विहारेण, सूचितं मथनस्थानं–मन्थनस्थलम्, **उद्वहन्तं** धारयन्तम्, कीदृशं तत् ? **अमृतपङ्कैक-शरणजीर्णजलकरिकुलातिवाह्यमाननिरवसानकालकूटविषदाहवेदनम्** अमृतपङ्क –सुधाकर्दम एव, शरणं–स्थान यस्य तादृशेन, जीर्णेन–जरावस्थेन, जलकरिकुलेन–जलहस्तियूथेन, अतिवाह्यमाना–व्यतीयमाना, सह्यमानेत्यर्थ, कालकूटेन–तद्रूपेण, विषेण–विषविशेषेण, यो दाह –ताप, तद्वेदना–तद्दु खं यस्मिंस्तादृशम्, पुन **आमोदावकृष्टपन्नग-दृढाश्लिष्टसुरतरुजटाच्छेदप्ररूढविटपम्** आमोदै –अतिसौरभै, अवकृष्टा –आकृष्टा ये पन्नगा –सर्पा, तै दृढम्–अत्यन्तम्, आश्लिष्टानाम्–आलिङ्गितानाम्, सुरतरुजटाना–समुद्रस्थकल्पवृक्षशिफाना, छेदै –खण्डै, प्ररूढ –उद्भिन्न, विटप –वृक्षो यस्मिंस्तादृशम्, पुन **आसन्ननगरायातदैत्यदारिकान्विष्यमाणकौस्तुभसजातीयरत्नोपलशकलम्** आसन्न-नगरेभ्य –निकटनगरेभ्य, आयाताभि –आगताभि, दैत्यदारिकाभि –दैत्यकन्यकाभि, अन्विष्यमाणानि–गवेष्यमाणानि, कौस्तुभसजातीयानां–कौस्तुभसमानजातीयानां, रत्नोपलाना–रत्नपाषाणानाम्, शकलानि–खण्डानि यस्मिंस्तादृशम्, पुन **उदश्रु-जलदेवतादृश्यमानलक्ष्मीचिरोपभुक्तप्रदेशम्**, उदश्रुभि –उद्गत अश्रु–नेत्रजल यासां तादृशीभि, जलदेवताभि –जलाधिष्ठातृदेवताभि, दृश्यमान –दृष्टिगोचरीक्रियमाण, लक्ष्म्या–लक्ष्मीदेव्या, चिरोपभुक्त –दीर्घकालोपभुक्त, प्रदेशो यस्मिंस्तादृशम् [ लॄ ]। पुन **वारि** जलम्, **उद्वहन्तं** धारयन्तम्, कीदृशम् ? **सद्वृत्तैरिव** सत्कर्मकैरिव, **गृहीतवेलैः** गृहीता वेला–तटम्, पक्षे कर्मकरणावसरो यैस्तादृशै, वनै **परिवृतं** परिवेष्टित व्याप्तमित्यर्थ, पुन **गुरूपदेशैरिव** गुरूणां–धर्माचार्याणाम्, अनुशासनैरिव, **अमृतस्यन्दिभिः** सुधास्राविभि, पक्षे मोक्षविधायिभि, **शशाङ्कपादैः** चन्द्रमरीचिभि, **आहितोदयं** जनितविकाशम्, पुन **कुशीलवैरिव** नाटकीयनायकवन्दिभिरिव, **विस्तारितरङ्गैः** विस्तारिण –विस्तारवन्त, तरङ्गा येषा तादृशै, पक्षे विस्तारित –स्वकृतकीर्तिगानशब्दैर्व्याप्त, रङ्ग –नाट्यशाला यैस्तादृशै, **नदीपूरैः** नदीप्रवाहै, **नर्त्यमान** कार्यमाणनर्तनम्, पुन **प्रतीहारैरिव** द्वारपालैरिव, **उल्लासितवेत्रयष्टिभिः** उल्लासिता–उद्यता, पक्षे उद्वेलिता, वेत्रयष्टि –वेत्रदण्डो जलवशो वा यैस्तादृशै, **मरुद्भिः** पवनै, **दिक्षु** दिशासु, **सञ्चार्यमाणं** कार्यमाणसञ्चारम् [ ए ], पुन **दुष्पुत्रेणेव** दुष्टसुतेनेव, **स्वदेहोद्भवेन** स्वशरीरजातेन, **वाडवाग्निना** वाडवाख्यसमुद्रस्थाग्निविशेषेण, **शोष्यमाणं** क्रियमाणशोषणम्, पुन **ऊर्मिमालाभिरपि** तरङ्गपङ्क्तिभिरपि, किमुतान्यै **अनासादितपरपारम्** अनासादित पर –उत्तर, पारो यस्य तादृशम्, पुन **आशागजैरपि** दिग्गजैरपि, किमुतान्यै, **असोढगर्जोद्गारम्** असोढ –सहनकर्मता-

कूर्मि ताक्ष्यवपुरिवाखण्डितं सर्पदशनैर्वसुंधराया मधुरिपोश्च वास इति विश्रुतमुद्वहन्तं वारि भगवन्तमम्भोनिधिमपश्यम् [ औ ] ।

तस्य चाविषमविस्तीर्णावकाशे सर्वतो वहत्स्वादुसलिलस्रोतसि चलाचलप्रान्तपरिसरे सन्निविष्टम्, अनतिसन्निकृष्टप्रधानसचिवावासम्, उल्लासितानेकवर्णघनवितानैरुत्पातगगनमिव दिगन्तैः परिगतमशेषतः सामन्तशिबिरैः, प्रतिद्वारमुच्छ्रितानेकमकरतोरणम्, अनेककक्षान्तरोपेतम्, इतस्ततः प्रकल्पिताधिकारिकर्मशालं, कुण्डलीकृतशक्रकोदण्डशोभाविडम्बनदक्षाभिः शरीररक्षाधिकारनियुक्तानां वीरपुरुषाणामन्योऽन्यलग्नाभिरनेकवर्णगुणलयनिकाभिस्त्रिः परिक्षिप्तम्, ऊर्ध्वनिखातनिश्चलस्थूणाश्रेणिसंयतया वेणुदण्डिकामय्या महाप्रमाणया वृत्या समन्ततः परिवृतैः श्वेतैश्च शितिभिश्च लोहितैश्च कल्माषैश्च महाकायमण्डपिकामण्डिताजिरैरखण्डवुध्नाण्डकपरिमण्डलाकारैः पटागारैः स्थपुटितावकाशं स्वावासमव्रजम् [ अं ] ।

---

**टिप्पनकम्**—**उल्लासितानेकघनवितानैः** स्वीयैयत(?) [ रुद्धपर्यन्त ] नानावर्णमेघसंघातैः, अन्यत्रोल्लासितानेकवर्णनिबिडचन्द्रोदयैः [ अ ] ।

---

यस्य तादृशमिति विरोध, तदुद्धारे तु कूर्मा –कच्छपा सन्ति अस्मिन्निति व्याख्येयम्, पुन **ताक्ष्यवपुरिव** गरुडशरीरमिव, **सर्पदशनैः** सर्पदन्तै, **अखण्डितम्** अविदारितम्, अन्यत्राखण्डितमपरिच्छिन्नम्, अशनै –शीघ्रं, सर्पत्–प्रसरत्, पुन **वसुन्धराया** पृथिव्या., **मधुरिपोः** विष्णोश्च, **वासः** वस्त्र वासस्थान च इति विश्रुतम् [ औ ] ।

**च** पुन, **तस्य** समुद्रस्य, **चलाचलप्रान्तपरिसरे** चलाचले–चञ्चले, प्रान्तपरिसरे–निकटकच्छस्थले, **सन्निविष्टं** समवस्थितम्, **स्वावासं** स्वनिवासस्थानम्, **अव्रजम्** अगच्छम्। कीदृशे ? **अविषमविस्तीर्णावकाशे** अविषम –समभूत, विस्तीर्ण –दीर्घश्च, अवकाशो–निरावरणस्थान यस्मिंस्तादृशे, पुन **सर्वतः** सर्वभागेषु, **वहत्स्वादुसलिलस्रोतसि** वहन्ति–स्यन्दमानानि, स्वादूनां–मधुराणा, सलिलाना–जलाना, स्रोतांसि–प्रवाहा यस्मिंस्तादृशे, कीदृशमावासम् ? **अनतिसन्निकृष्टप्रधानसचिवावासम्** अनतिसन्निकृष्ट –अनत्यन्तसन्निहित, प्रधानसचिवस्य–मुख्यमन्त्रिण, आवासो–वासभवन यस्य तादृशम्, पुन **दिगन्तैः** दिगग्रै, **उत्पातगगनमिव** युगान्तकालिकाकाशमण्डलमिव, **सामन्तशिबिरैः** क्षुद्रनृपसेनासन्निवेशै, **अशेषतः** सर्वत, **परिगतं** परिवृतम्, कीदृशैर्दिगन्तै सेनासन्निवेशैश्चेत्याह–**उल्लासितानेकवर्णघनवितानैः** उल्लासिता –उन्नमिता, अनेकवर्णा –नानावर्णा, घना –निबिडाश्च, वितानाः –उल्लोचा चन्द्रातपा येषु तादृशै, पक्षे उल्लासिता नानावर्णा घना –मेघा एव वितानाः, तादृशानां घनाना–मेघाना, वितानाः–विस्तारा वा येषु तादृशै, पुन **प्रतिद्वारं** सर्वद्वारेषु, **उच्छ्रितानेकमकरतोरणम्** उच्छ्रिता –उन्नमिता, अनेके मकरतोरणा –नक्रमया बाह्यद्वाराणि यस्मिंस्तादृशम्, पुन **अनेककक्षान्तरोपेतम्** अनेकै –बहुभि, कक्षान्तरै –अवान्तरभवनावलीभेदै, उपेत–युक्तम्, पुन **इतस्ततः** अत्र तत्र, **प्रकल्पिताधिकारिकर्मशालं** प्रकल्पिता –निर्मिता, अधिकारिणा–कार्याधिकृतजनाना, कर्मशाला –कार्यालया यस्मिंस्तादृशम्, पुन **शरीररक्षाधिकारनियुक्तानां**–राजकीयशरीररक्षणात्मककार्ये कृतनियोगानाम्, **वीरपुरुषाणां** पराक्रमशालिजनानाम्, **अनेकवर्णगुणलयनिकाभिः** अनेकवर्णा –नानावर्णा ये गुणा.–तन्तव, तन्मयीभि, **लयनिकाभिः** मण्डपिकाभि, **त्रिः** त्रिवारम्, **परिक्षिप्तं** परिवेष्टितम्, कीदृशीभि ? **कुण्डलीकृतशक्रकोदण्डशोभाविडम्बनदक्षाभिः** कुण्डलीकृतस्य–वलयाकारितस्य, शक्रकोदण्डस्य–इन्द्रधनुष, या शोभा तद्विडम्बनदक्षाभि –तदनुकरणकुशलाभि, पुन **अन्योऽन्यलग्नाभिः** परस्परसम्बद्धाभि, पुन कीदृशम् ? **पटागारैः** वस्त्रमयगृहै, **स्थपुटितावकाशं** स्थपुटित –निम्नोन्नतीकृत, व्याप्त इति यावत्, अवकाश –अनावृतप्रदेशो यस्मिंस्तादृशम्, कीदृशै ? **वृत्या** प्राकारेण, **समन्ततः** सर्वत, **परिवृतैः** परिवेष्टितै, कीदृश्या वृत्या ? **ऊर्ध्वनिखातनिश्चलस्थूणाश्रेणिसंयतया** ऊर्ध्वया–उन्नतया, यद्वा ऊर्ध्वे–उपरिभागे, निखातया–भूगर्भावस्थापितमूलया, निश्चलया–स्थिरया, स्थूणाश्रेण्या–स्तम्भपङ्क्त्या, संयतया–नियन्त्रितया, पुन **वेणुदण्डिकामय्या** वंशयष्टिप्रचुरया, **महाप्रमाणया** अधिकप्रमाणया, अत्युन्नतयेत्यर्थ, पुन **श्वेतैः** शुभ्रवर्णै, **च** पुन, **शितिभिः** कृष्णवर्णै, **च** पुन, **लोहितैः** रक्तवर्णै, **च** पुन, **कल्माषैः** चित्रवर्णै., पुन· **महाकायमण्डपिका**-

करेषु, पुरोनिविष्टरन्धनदक्षदासीसंधुक्षितानलासु ज्वलन्तीषु सर्वतः क्कथनवाचालस्थालीपरम्परापरिकरितचूलासु प्राङ्गणचुल्लीषु [ ख ], समकालशिथिलितरोमन्थलीलं सहेलमुत्थाय चरति सति पुञ्जितमग्रतः प्रयत्नसंगृहीतं यवसमन्योऽन्यतुण्डताडनरणद्विषाणे विषाणिवृन्दे, प्रयतमनुष्यनिश्चलधृतोर्ध्वदण्डिकासु क्रमसमुत्पाट्यमानकीलपरिपाटिविषमसंकुचद्विस्तारासु चरममुक्ततनिकाचतुष्टयच्युतावष्टम्भासु तिर्यक् पर्यस्यमानासु पटकुटीषु [ ग ], मुकुलितपटमण्डपे पिण्डीकृतकाण्डपटकप्रकटसामन्तान्तःपुरे दुष्टवाहनारोप्यमाणभयचटुलचेटीलोकविब्बोकाकृष्टविटचेतसि सहेलचलितसेनापतिसैन्यकोलाहलजनितजनकुतूहले संहृतपण्यविपणिवीथीवृथाभ्रमद्गृहीतमूल्य-

---

**टिप्पनकम्**—**पर्यस्यमानासु** पात्यमानासु [ ग ]। मुकुलित-संकोचितम्, काण्डपटक -जवनिका, विब्बोक -विलास., कीकट.-दरिद्र., निवस -नीरणम्, [ घ ]।

---

तेषु ? **सत्वरोत्थितगृहस्थनिर्दयाक्रोशकर्शितनिद्रेषु** सत्वरं-शीघ्रम्, उत्थितानां-जागृताना, गृहस्थाना-गृहवर्त्तिजनाना निर्दयाक्रोशेन-निष्ठुरकोलाहलेन तीव्राह्वानेन वा, कर्शिता-क्षपिता, निद्रा येषा तादृशेषु, पुन **अतिकष्टमुक्तसंस्तरेषु** अतिकष्टेन-अत्यन्तक्लेशेन, मुक्त -त्यक्त , संस्तर -शय्या यैस्तादृशेषु, पुन **प्राङ्गणचुल्लीषु** प्राङ्गणस्थिताधिश्रयणीषु, **ज्वलन्तीषु** दीप्यमानासु, कीदृशीषु ? **पुरोनिविष्टरन्धनदक्षदासीसन्धुक्षितानलासु** पुर -अग्रे, निविष्टया-उपविष्टया, रन्धनदक्षया-पाककुशलया, दास्या-कर्मकर्या, सन्धुक्षित -प्रज्वलित , अनल -अग्निर्यासु तादृशीषु, पुन **सर्वतः** सर्वभागेषु, **क्कथनवाचालस्थालीपरम्परापरिकरितचूलासु** क्कथनेन-अतिपाकेन, वाचालाभि -शब्दायमानाभि , स्थालीपरम्पराभि -पाकभाण्डपङ्क्तिभि , परिकरिता-व्याप्ता, चूला-ऊर्ध्वभागो यासा तादृशीषु [ ख ], पुन **विषाणिवृन्दे** पशुसमूहे, **अग्रतः** अग्रे, **पुञ्जितं** राशीकृतं, **प्रयत्नसंगृहीतं** प्रयाससञ्चित, **यवसं** घास, **सहेलं** सकौतुक यथा स्यात् तथा, उत्थाय, **चरति** खादति सति, कीदृशे ? **समकालशिथिलितरोमन्थलीले** समकालम्-एककालं, शिथिलिता-शिथिलीकृता, रोमन्थस्य-चर्वितस्याकृष्य पुनश्चर्वणस्य, लीला-क्रीडा येन तादृशे, पुन **अन्योऽन्यतुण्डताडनरणद्विषाणे** अन्योऽन्यतुण्डताडनेन- परस्परमुखकृताभिघातेन, रणन्ति-शब्दायमानानि, विषाणानि यस्य तादृशे, पुन **पटकुटीषु** वस्त्रमयगृहेषु, **तिर्यक्** कुटिलं यथा स्यात् तथा, **पर्यस्यमानासु** पात्यमानासु, उपसह्रियमाणास्वित्यर्थ , सतीषु, कीदृशीषु ? **प्रयतमनुष्यनिश्चलधृतोर्ध्वदण्डिकासु** प्रयतेन-प्रयत्नवता, समाहितमनस्केनेत्यर्थ , मनुष्येण, निश्चलं-दृढ यथा स्यात् तथा, धृता-गृहीता, ऊर्ध्वदण्डिका-ऊर्ध्वयष्टिर्यासा तादृशीषु, पुन **क्रमसमुत्पाट्यमानकीलपरिपाटिविषमसंकुचद्विस्तारासु** क्रमेण-पर्यायेण, समुत्पाट्यमानाभि -समुद्ध्रियमाणाभि , कीलपरिपाटिभि -शङ्कुश्रेणिभि , विषमम्-असम यथा स्यात् तथा, सङ्कुचन्-सकोचमासादयन्, विस्तारो-दैर्घ्यं यासा तादृशीषु, पुन **चरममुक्ततनिकाचतुष्टयच्युतावष्टम्भासु** चरममुक्तेन-सर्वत पश्चाद्विश्लेषितेन, तन्यते-विस्तार्यते पटमण्डपो यया सा तनिका-कोणचतुष्टयावलम्बिनी रज्जु , तच्चतुष्टयेन च्युत -स्खलित , निवृत्त इत्यर्थ , अवष्टम्भ -अवलम्बनं यासा तादृशीषु [ ग ], पुन **उर्वीगन्धर्वनगरे** शून्याधिष्ठान-पुराकार-नीलपीतादिमेघरचनाविशेषो गन्धर्वनगरम्, उर्व्या-पृथिव्या, न तु गगने, यद् गन्धर्वनगरं तद् उर्वीगन्धर्वनगरं तस्मिंस्तथा, पृथिवीगतगन्धर्वनगरसदृशे इत्यर्थ , **स्कन्धावारे** सैन्यसन्निवेशे, सैन्यनगरे इत्यर्थ , **अनुवेलं** प्रतिक्षणम्, **विरलता** अल्पताम्, **व्रजति** प्राप्नुवति सति, कीदृशे स्कन्धावारे ? **मुकुलितपटमण्डपे** मुकुलिता -सङ्कुचिता , पटमण्डपा -वस्त्रनिर्मितानि जनविश्रामस्थानानि यस्मिंस्तादृशे, पुन **पिण्डीकृतकाण्डपटकप्रकटसामन्तान्तःपुरे** पिण्डीकृता -सर्वतो वेष्टनेन पिण्डाकारं प्रापिता ये काण्डपटका -येषा सकोचनेन काण्डाकारो भवति तादृशा पटविशेषा , जवनिका इत्यर्थ , तै प्रकटं-प्रकटता गतम्, सामन्तानाम्-आज्ञावर्तिक्षुद्रनृपाणाम्, अन्त पुरं-वनितावृन्द यस्मिंस्तादृशे, पुन **दुष्टवाहनारोप्यमाणभयचटुलचेटीलोकविब्बोकाकृष्टविटचेतसि** दुष्टवाहने-अश्वतरादौ दुष्टाश्वादौ वा आरोप्यमाणानाम्-आरोह्यमाणाना, भयचटुलाना-भयसम्भ्रान्ताना, चेटीलोकाना-भृत्याजनानां, विब्बोकेन-विलासेन, आकृष्टवशीकृतं, विटाना-जारपुरुषाणा, चेत -हृदय यस्मिंस्तादृशे, पुन **सहेलचलितसेनापतिसैन्यकोलाहलजनितजनकुतूहले** सहेल-सलील यथा स्यात् तथा, चलिताना-प्रस्थिताना, सेनापतिसैन्याना, कोलाहलेन-कलकलेन, जनितम्-उत्पा-

तत्र चापनीतपर्यन्तपरिकरे संवृतोत्कृष्टविष्टरतया यथाकथञ्चिदासीनराजलोके ढौकितेऽध्वयोग्यगजवशावाजिनि निविश्य कृतसमुद्रावतारमार्गावलोकनः प्रत्यूषस्येव पौतिकानां कृताकृतज्ञानाय प्रेषितेन वेत्रिणा साधमापतन्तम् [ च ], असितोत्पलदलश्यामावदातवर्णमर्णवेनेव पूजाप्रीतेन प्रहितमवगाहनार्थमभिनवं वेलावनप्रियङ्गुपादपम्, अचिरमज्जनविशेषस्निग्धसुकुमारवपुषम्, अल्पमालतीपुष्परचितशेखरम्, उल्लिखितशङ्खावदातद्युतिनी तनीयसी नवे दुकूलवाससी वसानम्, अनवसानताम्बूलोपयोगपोषितस्वभावपाटलाधरपुटच्छविम् [ छ ], इन्दुलाञ्छनच्छायापहारपटुना शरीरप्रभापटलेन जलनिधिजलेनेव सातिरेकलावण्यलाभतृष्णया संनिधावनुज्झितावस्थानं, प्रस्थानकालकल्पितामनल्पविस्तारे वदनलावण्यपयसि निपततां कटकलोकलोचनानामवलम्बनाय नावमिव संगृहीतां चन्दनपङ्कलेखिकामधिललाटतटमादर्शयन्तम् [ ज ], अभ्यर्णापतत्कर्णधारव्यापारणेषु सविलासमुत्सर्पतो लोचनयुगलस्य क्षौमपाण्डुभिः प्रभानिर्गमैरधिकशोभा-

---

**च** पुन, **अपनीतपर्यन्तपरिकरे** अपनीत –त्यक्त, पर्यन्त –पार्श्ववर्ती, परिकर –परिवारो यस्मिंस्तादृशे, **तत्र** वाह्यसभामण्डपे, यद्वा 'अपनीतपर्यन्तपरिकरे' इत्यनुपदवक्ष्यमाणसप्तम्यन्तपदेनान्वेति । **संवृतोत्कृष्टविष्टरतया** संवृत –कृतगोपन, उत्कृष्ट –सुन्दर, विष्टर –आसनं यस्य तादृशतया, **यथाकथञ्चिदासीनराजलोके** यथाकथञ्चिदुपविशन्नृपजने, **ढौकिते** प्राप्ते, **अध्वयोग्यगजवशावाजिनि** अध्वयोग्य –मार्गयोग्य, यो गज, वशा–हस्तिनी, वाजी–अश्व, तत्समाहारे, **निविश्य** उपविश्य, **कृतसमुद्रावतारमार्गावलोकनः** कृत समुद्रावतारमार्गस्य–समुद्रप्रवेशमार्गस्य, अवलोकनं–दर्शनं निरूपणमित्यर्थ, येन तादृश सन्, **पञ्चविंशतिवर्षदेशीयं** पञ्चविंशतिवर्षवयस्ककल्पम्, **नाविकयुवानं** नावा चरतीति नाविक –कर्णधार, तादृशं **युवानं** यौवनावस्थं जनम्, **अद्राक्षीत्** दृष्टवान्, कीदृशम् ? **प्रत्यूषस्येव** प्रभात एव, **पौतिकानां** जलयानवाहकानाम्, **कृताकृतज्ञानाय** कृतमकृत च यत् कार्यं तन्निरूपणाय, **प्रेषितेन** प्रहितेन, **वेत्रिणा** दण्डधारिणा, **सार्धं** साकम्, **आपतन्तम्** आगच्छन्तम् [ च ], पुन **असितोत्पलदलश्यामावदातवर्णम्** असितं–कृष्णवर्णं, यदुत्पल–कमलं, तदीयदलस्येव–तदीयपत्रस्येव, श्याम, अवदात –विशुद्धश्च, वर्णो–रूपं यस्य तादृशम्, अत एव **पूजाप्रीतेन** अर्चनाप्रसन्नेन, **अर्णवेन** समुद्रेण, **अवगाहनार्थं** प्रवेशार्थं, प्रहित–प्रेषितम्, **अभिनवं** नवीनं, **वेलावनप्रियङ्गुपादपमिव** तटवर्तिवनसम्बन्धिप्रियङ्गुसञ्ज्ञकश्यामवर्णवृक्षविशेषमिवेत्युत्प्रेक्षा, पुन **अचिरमज्जनविशेषस्निग्धसुकुमारवपुषम्** अचिरमज्जनेन–किञ्चित्पूर्वकालकृतस्नानेन, विशेषस्निग्धम्–अत्यन्तश्लक्ष्णं, सुकुमारं–कोमलं च, वपु –शरीरं यस्य तादृशम्, पुन **अल्पमालतीपुष्परचितशेखरम्** अल्पै –कतिपयै, **मालतीपुष्पैः** मालत्याख्यपुष्पै, रचितं शेखरं–शिरोमाल्यं येन तादृशम्, पुन **दुकूलवाससी** उत्तराधरपट्टवस्त्रे, **वसानम्** परिदधानम्, कीदृशे ? **उल्लिखितशङ्खावदातद्युतिनी** उल्लिखित –उद्धृष्ट, य शङ्ख, तस्येव अवदाता–शुभ्रा, द्युति –कान्तिर्ययोस्तादृशे, पुन **तनीयसी** अतिसूक्ष्मे, पुन **नवे** नवीने, पुन कीदृशम् ? **अनवसानताम्बूलोपयोगपोषितस्वभावपाटलाधरपुटच्छविम्** अनवसानेन–अविरतेन, ताम्बूलोपयोगेन–ताम्बूलभक्षणेन, पोषिता–पुष्टिमापादिता, स्वभावपाटला–स्वभावत श्वेतरक्ता, अधरपुटच्छवि –ओष्ठपुटयो कान्तिर्यस्य तादृशम् [ छ ]; पुन **इन्दुलाञ्छनच्छायापहारपटुना** इन्दो –चन्द्रस्य, यत् लाञ्छनं–कलङ्क, तस्य या छाया–कान्ति, तदपहारपटुना–तदपहरणनिपुणेन, शरीरप्रभापटलेन–शरीरकान्तिकलापेन, **सन्निधौ** निकटे, **अनुज्झितावस्थानम्** अनुज्झितम्–अत्यक्तम्, अवस्थानम्–अवस्थितिर्यस्मिंस्तादृशम्, कया केनेव ? **सातिरेकलावण्यलाभतृष्णया** अधिकसौन्दर्यलिप्सया, **जलनिधिजलेनेव** समुद्रजलेनेवेत्युत्प्रेक्षा, पुन **अधिललाटतटं** भालतलप्रान्ते, **चन्दनपङ्कलेखिकां** चन्दनद्रवलेखाम्, **आदर्शयन्तं** प्रदर्शयन्तम्, कीदृशीम् ? **प्रस्थानकालकल्पितां** प्रयाणसमयरचिताम्, कामिव ? **अनल्पविस्तारे** अत्यन्तविस्तृते, **वदनलावण्यपयसि** मुखसौन्दर्यसलिले, **निपततां** निमज्जतां, **कटकलोकलोचनानां** सैनिकजननेत्राणाम्, **अवलम्बनाय** आश्रयणाय, सगृहीता–सङ्घटिता, **नावमिव** नौकामिवेत्युत्प्रेक्षा [ ज ], पुन **अभ्यर्णापतत्कर्णधारव्यापारणेषु** अभ्यर्णे–निकटे, आपतत –आगच्छत, कर्णधारस्य–नाविकस्य, व्यापारणेषु–प्रेरणेषु, **सविलासं** विलासपूर्वकम्, **उपसर्पतः** उद्वेलत, **लोचनयुगलस्य** नेत्र-

लितेन्द्रनीलशिलानाङ्गरमिव प्रियङ्गुकल्पद्रुमपादपदारुपोतम्, अशोकपादपप्रवालमृदुना संततभ्रमणमृदितवेलाविद्रुमाङ्कुररसद्रवानुरञ्जितेनेव स्वभावपाटलेन चरणद्वयेनोद्भासमानम् [ ड ], इन्दुकान्ततटलावण्यं ललाटेन शुक्तिसौन्दर्यं श्रवणयुगलेन मौक्तिकाकारं दन्तकुड्मलैर्विद्रुमरागमोष्ठेन कम्बुसौभाग्यं कण्ठेन पुलिनाभोगमुरसा तरङ्गायामं भुजाभ्यामावर्तगाम्भीर्यं नाभिमण्डलेन सततयात्रोपमर्दपीडितादर्णवादिवोपचारेण प्राप्तमुपदर्शयन्तम् [ ढ ], अनुमार्गलग्नैरनतिदूरवर्तिभिः काककोकिलकलविङ्ककण्ठकालकायैर्मकरैरिवातपं सेवितुमकूपारमध्यादेकहेलया निर्गतैर्मद्गुभिरिव प्रभूतमत्स्याभ्यवहारतृष्णया परित्यक्तपक्षिशरीरैरुरगविषवह्निधूमदण्डैरिव धरामवदार्य रसातलान्निर्यातैश्छायापुरुषैरिव कठोरशरदातपत्रासादेकत्रकृतावासैराशैशवाल्लवणजलराशिसलिलक्षारदग्धतनु-

---

टिप्पनकम्—मद्गुः—जलवायस'। लवणजलराशिसलिलक्षारदिग्धतनुभिरपि निर्लावण्यैः ये लवणसमुद्रजलक्षारदिग्धदेहास्ते कथ निर्गतलवणभावाः? अन्यत्र अपगताङ्गचारुत्वा. । नलस्तम्बैरिव जलाशयोपान्तेषु वृद्धिं गतैः एकत्र तडागादिपर्यन्तेषु, अन्यत्र जडचित्तसमीपेषु। कैवर्तैः धीवरैः [ ण ]।

---

लितम्, इन्द्रनीलशिलानाङ्गरम्–इन्द्रनीलमणिखचित 'नांगर' इति प्रसिद्ध प्रवहणोपकरणं यस्य तादृशम्, **प्रियङ्गुकल्पद्रुमपादपदारुपोतमिव** प्रियङ्गो–तत्सज्ञकस्य, कल्पद्रुमस्य–कल्पाख्यदिव्यवृक्षरूपस्य च, पादपस्य–वृक्षस्य, यद् दारु–काष्ठ, तन्मय पोत–यानपात्रमिवेत्युत्प्रेक्षा, पुन कीदृशम्? **चरणद्वयेन** पादयुगलेन, **उद्भासमानम्** उद्दीप्यमानम्, कीदृशेन? **अशोकपादपप्रवालमृदुना** अशोकाख्यपादपनूतनदलकोमलेन, पुन कीदृशेन? **स्वभावपाटलेन** स्वभावत श्वेतरक्तवर्णेन, केनेव? **सन्ततभ्रमणमृदितवेलाविद्रुमाङ्कुररसद्रवानुरञ्जितेनेव** सन्ततभ्रमणेन–अनवरतविहरणेन, मृदिताना–पादतलाभिहतानाम्, विद्रुमाङ्कुराणा–प्रवालाख्यरत्नहेतुवृक्षाङ्कुराणाम्, रसद्रवै–रसनिष्यन्दै, अनुरञ्जितेनेव–कृतरञ्जनेनेवेत्युत्प्रेक्षा [ ड ], पुन **सततयात्रोपमर्दपीडितात्** अनवरतयात्राकृतालोडनेन पीडितात्–सम्मर्दितात्, कृताङ्गमर्दनादित्यर्थ, **अर्णवात्** समुद्रात्, **उपचारेण** प्राभृतकरूपेण, **प्राप्तं** लब्धम्, विशेषणमिदमग्रेऽपि सर्वत्रान्वेति, **इन्दुकान्ततटलावण्यं** चन्द्रकान्तमणितीरसौन्दर्यम्, चन्द्रकान्तमणीनां प्रभावाही य समीपप्रदेश, तत्सौन्दर्यमित्यर्थ, **ललाटेन**–भालस्थलेन, **उपदर्शयन्तं** प्रकटयन्तम्, पुन **श्रवणयुगलेन** कर्णपुटद्वयेन, **शुक्तिसौन्दर्यं** शुक्तिसौष्ठवम्, पुन **दन्तकुड्मलैः** दन्ताङ्कुरै, **मौक्तिकाकारं** मुक्तामणिस्वरूपम्, पुन ओष्ठेन **विद्रुमरागं** प्रवालरक्तताम्, पुन कण्ठेन **कम्बुसौभाग्यं** शङ्खसौन्दर्यम्, **उरसा** वक्षसा, **पुलिनाभोगं** तटस्थलविशालताम्, पुन **भुजाभ्यां** बाहुभ्याम्, **तरङ्गायामं** तरङ्गदीर्घताम्, पुन **नाभिमण्डलेन** वर्तुलाकारनाभिप्रदेशेन, **आवर्तगाम्भीर्यं** जलभ्रमिगम्भीरताम्, भ्रमज्जलगम्भीरतामित्यर्थ, **उपदर्शयन्तं** प्रकाशयन्तम्, विशेषणमिदमनुपदोक्तनिखिलद्वितीयान्तपदैरन्वेति [ ढ ], पुन **कैवर्तैः** धीवरै, **परिवृतं** परिवेष्टितम्, कीदृशै? **अनुमार्गलग्नैः** प्रतिमार्गमिलितै, पुन **अनतिदूरवर्तिभिः** किञ्चिन्निकटवर्तिभि, **काक कोकिल-कलविङ्क-कण्ठकालकायैः** काक कोकिलश्च प्रसिद्धपक्षिविशेष, कलविङ्क–चटक, कण्ठकाल–मयूर, तेषामिव काय–शरीरं येषा तादृशै, पुन **आतपं** सूर्यप्रकाश, **सेवितुम्** अनुभवितुम्, **एकहेलया** एकचेष्टाविशेषेण, एकदेत्यर्थ, न तु पर्यायेणेत्यर्थ, **अकूपारमध्यात्** समुद्रमध्यात्, **निर्गतैः** नि सृतै, **मकरैरिव** नक्रैरिवेत्युत्प्रेक्षा, पुन **प्रभूतमत्स्याभ्यवहारतृष्णया** प्रचुरमत्स्यबुभुक्षया, **परित्यक्तपक्षिशरीरैः** पक्षिशरीरं परित्यज्य धृतकैवर्ताकारै, **मद्गुभिरिव** जलवायसैरिवेति चोत्प्रेक्षा, पुन **धरां** भूतलम्, **अवदार्य** उद्भिद्य, **रसातलात्** पातालमध्यात्, **निर्यातैः** निर्गतै, **उरगविषवह्निधूमदण्डैरिव** सर्पविषरूपस्य वह्ने–अग्ने, धूमलेखाभिरिवेति चोत्प्रेक्षा, पुन **कठोरशरदातपत्रासात्** तीव्रशरत्कालिकातपभयात्, **एकत्र** एकस्मिन् स्थाने, **कृतावासैः** कृतनिवासै, **छायापुरुषैरिव** छायात्मकनरैरिवेति चोत्प्रेक्षा, पुन **आशैशवात्** बाल्यादारभ्य, **लवणजलराशिसलिलक्षारदग्धतनुभिरपि** लवणजलराशे–लवणसमुद्रस्य, सलिलाना–जलानाम्, क्षारेण–क्षाररसेन, दग्धा–गलिता, दिग्धेति पाठे दिग्धा–व्याप्ता, तनु–शरीरं येषां

लितेन्द्रनीलशिलानाङ्गरमिव प्रियङ्गुकल्पद्रुमपादपदारुपोतम्, अशोकपादपप्रवालमृदुना संततभ्रमणमृदितवेलाविद्रुमाङ्कुररसद्रवानुरञ्जितेनेव स्वभावपाटलेन चरणद्वयेनोद्भासमानम् [ ड ], इन्दुकान्ततटलावण्यं ललाटेन शुक्तिसौन्दर्यं श्रवणयुगलेन मौक्तिकाकारं दन्तकुड्मलैर्विद्रुमरागमोष्ठेन कम्बुसौभाग्यं कण्ठेन पुलिनाभोगमुरसा तरङ्गायामं भुजाभ्यामावर्तगाम्भीर्यं नाभिमण्डलेन सततयात्रोपमर्दपीडितादर्णवादिवोपचारेण प्राप्तमुपदर्शयन्तम् [ ढ ], अनुमार्गलग्नैरनतिदूरवर्तिभिः काककोकिलकलविङ्ककण्ठकालकायैर्मकरैरिवातपं सेवितुमकूपारमध्यादेकहेलया निर्गतैर्मद्गुभिरिव प्रभूतमत्स्याभ्यवहारतृष्णया परित्यक्तपक्षिशरीरैरुरगविषवह्निधूमदण्डैरिव धरामवदार्य रसातलान्निर्यातैश्छायापुरुषैरिव कठोरशरदातपत्रासादेकत्रकृतावासैराशैशवाल्लवणजलराशिसलिलक्षारदग्धतनु-

---

**टिप्पनकम्**—**मद्गु**—जलवायसः। **लवणजलराशिसलिलक्षारदिग्धतनुभिरपि निर्लावण्यैः** ये लवणसमुद्रजलक्षारदिग्धदेहास्ते कथं निर्गतलवणभावाः? अन्यत्र अपगताङ्गचारुत्वाः। **नलस्तम्बैरिव जलाशयोपान्तेषु वृद्धिं गतैः** एकत्र तडागादिपर्यन्तेषु, अन्यत्र जडचित्तसमीपेषु। **कैवर्तैः** धीवरैः [ ण ]।

---

लितम्, इन्द्रनीलशिलानाङ्गरम्–इन्द्रनीलमणिखचितं 'नांगर' इति प्रसिद्धं प्रवहणोपकरणं यस्य तादृशम्, **प्रियङ्गुकल्पद्रुमपादपदारुपोतमिव** प्रियङ्गोः–तत्संज्ञकस्य, कल्पद्रुमस्य–कल्पाख्यदिव्यवृक्षरूपस्य च, पादपस्य–वृक्षस्य, यद् दारु–काष्ठं, तन्मयं पोतं–यानपात्रमिवेत्युत्प्रेक्षा, पुनः कीदृशम्? **चरणद्वयेन** पादयुगलेन, **उद्भासमानम्** उद्दीप्यमानम्, कीदृशेन? **अशोकपादपप्रवालमृदुना** अशोकाख्यपादपनूतनदलकोमलेन, पुनः कीदृशेन? **स्वभावपाटलेन** स्वभावतः श्वेतरक्तवर्णेन, केनेव? **सन्ततभ्रमणमृदितवेलाविद्रुमाङ्कुररसद्रवानुरञ्जितेनेव** सन्ततभ्रमणेन–अनवरतविहरणेन, मृदितानां–पादतलाभिहतानाम्, विद्रुमाङ्कुराणां–प्रवालाख्यरत्नहेतुवृक्षाङ्कुराणाम्, रसद्रवैः–रसनिष्यन्दैः, अनुरञ्जितेनेव–कृतरञ्जनेनेवेत्युत्प्रेक्षा [ ड ], पुनः **सततयात्रोपमर्दपीडितात्** अनवरतयात्राकृतालोडनेन पीडितात्–सम्मर्दितात्, कृताङ्गमर्दनादित्यर्थः, **अर्णवात्** समुद्रात्, **उपचारेण** प्राभृतकरूपेण, **प्राप्तं** लब्धम्, विशेषणमिदमग्रेऽपि सर्वत्रान्वेति, **इन्दुकान्ततटलावण्यं** चन्द्रकान्तमणितीरसौन्दर्यम्, चन्द्रकान्तमणीनां प्रभावाही यः समीपप्रदेशः, तत्सौन्दर्यमित्यर्थः, **ललाटेन**–भालस्थलेन, **उपदर्शयन्तं** प्रकटयन्तम्, पुनः **श्रवणयुगलेन** कर्णपुटद्वयेन, **शुक्तिसौन्दर्यं** शुक्तिसौष्ठवम्, पुनः **दन्तकुड्मलैः** दन्ताङ्कुरैः, **मौक्तिकाकारं** मुक्तामणिस्वरूपम्, पुनः ओष्ठेन **विद्रुमरागं** प्रवालरक्तताम्, पुनः कण्ठेन **कम्बुसौभाग्यं** शङ्खसौन्दर्यम्, **उरसा** वक्षसा, **पुलिनाभोगं** तटस्थलविशालताम्, पुनः **भुजाभ्यां** बाहुभ्याम्, **तरङ्गायामं** तरङ्गदीर्घताम्, पुनः **नाभिमण्डलेन** वर्तुलाकारनाभिप्रदेशेन, **आवर्तगाम्भीर्यं** जलभ्रमिगम्भीरताम्, भ्रमज्जलगम्भीरतामित्यर्थः, **उपदर्शयन्तं** प्रकाशयन्तम्, विशेषणमिदमनुपदोक्तनिखिलद्वितीयान्तपदैरन्वेति [ ढ ], पुनः **कैवर्तैः** धीवरैः, **परिवृतं** परिवेष्टितम्, कीदृशैः? **अनुमार्गलग्नैः** प्रतिमार्गमिलितैः, पुनः **अनतिदूरवर्तिभिः** किञ्चिन्निकटवर्तिभिः, **काक कोकिल-कलविङ्क-कण्ठकालकायैः** काकः कोकिलश्च प्रसिद्धपक्षिविशेषः, कलविङ्कः–चटकः, कण्ठकालः–मयूरः, तेषामिव कायः–शरीरं येषां तादृशैः, पुनः **आतपं** सूर्यप्रकाशं, **सेवितुम्** अनुभवितुम्, **एकहेलया** एकचेष्टाविशेषेण, एकदेत्यर्थः, न तु पर्यायेणेत्यर्थः, **अकूपारमध्यात्** समुद्रमध्यात्, **निर्गतैः** निःसृतैः, **मकरैरिव** नक्रैरिवेत्युत्प्रेक्षा, पुनः **प्रभूतमत्स्याभ्यवहारतृष्णया** प्रचुरमत्स्यबुभुक्षया, **परित्यक्तपक्षिशरीरैः** पक्षिशरीरं परित्यज्य धृतकैवर्ताकारैः, **मद्गुभिरिव** जलवायसैरिवेति चोत्प्रेक्षा, पुनः **धरां** भूतलम्, **अवदार्य** उद्भिद्य, **रसातलात्** पातालमध्यात्, **निर्यातैः** निर्गतैः, **उरगविषवह्निधूमदण्डैरिव** सर्पविषरूपस्य वह्नेः–अग्नेः, धूमलेखाभिरिवेति चोत्प्रेक्षा, पुनः **कठोरशरदातपत्रासात्** तीव्रशरत्कालिकातपभयात्, **एकत्र** एकस्मिन् स्थाने, **कृतावासैः** कृतनिवासैः, **छायापुरुषैरिव** छायात्मकनरैरिवेति चोत्प्रेक्षा, पुनः **आशैशवात्** बाल्यादारभ्य, **लवणजलराशिसलिलक्षारदग्धतनुभिरपि** लवणजलराशेः–लवणसमुद्रस्य, सलिलानां–जलानाम्, क्षारेण–क्षाररसेन, दग्धा–गलिता, दिग्धेति पाठे दिग्धा–व्याप्ता, तनुः–शरीरं येषां

प्रवीणः किमपि लोकयात्रायां सांयात्रिकवणिग् वैश्रवणो नाम। तस्य सर्वदा देवद्विजातिश्रमणगुरुशुश्रूषापरस्य निजभुजार्जितं पूर्वपुरुषोपार्जितं च प्राज्यमर्थमर्थिजनैः सुहृद्भिर्बान्धवैर्विद्वद्भिश्च भुक्तशेषमुपभुञ्जानस्य पश्चिमे वयसि वसुदत्ताभिधानायां गृहिण्यामपश्चिमः सर्वापत्यानां तारको नाम दारकः समुदपादि [ थ ]। स रूपसंपदा तुलितसुरकुमारः कौमार एव यथाविधिश्रुतशास्त्रः कलासु कृतश्रमः क्रमागतमशेषपुरुषार्थसंपत्तिपात्रमभिनवमधिरुह्य यौवनं यानपात्रं च गृहीतप्रचुरसारभाण्डैर्भूरिशः कृतद्वीपान्तरयात्रैः सहकारिभिरनेकैः सांयात्रिकैरनुगम्यमान इमामेव नगरीं रङ्गशालामागच्छत् [ द ]। आयातमात्रस्य च तस्य विविधानिबद्धनगरलोकसंपातपरिहाराय विपुलावकाशे जलराशिपरिसरे समावासितस्य समीपवासिना सकलकैवर्तकुलनायकेन जलकेतुनाम्ना कर्णधारेण सार्धं कथञ्चित् सख्यमजनि। परस्परोपचारकर्मणा च प्रौढिमुपगते तत्र कदाचिदारूढनवयौवना त्रिदशवनितेव शापदोषान्निपतिता मनुष्यलोके निकामकमनीयदर्शना प्रियदर्शना नाम

---

टिप्पनकम्—अशेषपुरुषार्थसंप्राप्तिपात्रं यौवनं पात्रं च-एकत्र सर्वधर्मार्थकामप्राप्तिभाजनम्, अन्यत्र सर्वपुरुषद्रव्यसंस्थापनम् [ द ]।

---

**राज्ञः** नृपस्य, **च** पुन , **पौरवर्गस्य** पुरवासिवृन्दस्य, **बहुमतः** परमाभिमत , पुन **लोकयात्रायां** लोकव्यवहारे, **किमपि** अवर्णनीय , **प्रवीणः** दक्ष , **वैश्रवणः** तदाख्य , **सांयात्रिकवणिक्** पोतवणिक्, **अस्ति** विद्यते, **नामे**ति वाक्यालङ्कारे, **तस्य** वैश्रवणस्य, **पश्चिमे वयसि** वार्धक्यावस्थायाम् , **वसुदत्ताभिधानायां** वसुदत्तानाम्न्या, **गृहिण्यां** भार्यायाम् , **सर्वापत्यानां** सर्वसन्तानानाम् , **अपश्चिमः** उत्कृष्ट , चरमो वा, **तारकः** तत्सञ्ज्ञक , **दारकः** सुत , **समुदपादि** समुत्पन्न , **नामे**ति वाक्यालङ्कारे, कीदृशस्य तस्य ? **देव-द्विजाति-श्रमण-गुरुशुश्रूषापरस्य** देवा -प्रसिद्धा , द्विजातय -द्विजा , श्रमणा -साधव , गुरु -धर्मोपदेशक , तेषां शुश्रूषा-परिचर्या, तत्परस्य-तल्लग्नहृदयस्य, पुन **निजभुजार्जितं** स्वबाहूपार्जित, **च** पुन , **पूर्वपुरुषोपार्जितं** स्वपूर्वजजनोपार्जितम् , प्राज्यं-प्रचुरम् , **अर्थं** धनम् , **अर्थिजनैः** याचकजनै , **सुहृद्भिः** मित्रजनै , **बान्धवैः** बन्धुजनै , **विद्वद्भिश्च** विद्वज्जनैश्च, **भुक्तशेषम्** उपभुक्तावशिष्टम्, उपभुञ्जानस्य [ थ ]। **रूपसम्पदा** स्वरूपसम्पत्त्या, **तुलितसुरकुमारः** उपमितदेवकुमार , **स** तारक , **कौमार एव** बाल्यकाल एव, **यथाविधिश्रुतशास्त्रः** यथाविधि-विध्यनुसारं, श्रुतं-श्रवणगोचरीकृतम् , अधीतमिति यावत् , शास्त्रम्-आगमो येन तादृश , पुन **कलासु** शिल्पविद्यासु, **कृतश्रमः** कृतव्यवसाय , **क्रमागतं** शैशवादिक्रमेण पक्षे पितृपितामहादिक्रमेणोपनतम् , **अशेषपुरुषार्थसंप्राप्तिपात्रम्** अशेषाणां-समस्ताना, पुरुषार्थाना-धर्मार्थकाममोक्षरूपाणा, पक्षे अशेषाणां पुरुषाणां-स्वपूर्वजपुरुषाणां, या अर्थसप्राप्ति -धनप्राप्ति , तस्या पात्रं-सस्थानम् , **अभिनवं** नवीनं, **यौवनं** युवावस्थां, **च** पुन , **यानपात्रं** पोतं च, **अधिरुह्य** आरुह्य, **गृहीतप्रचुरसारभाण्डैः** गृहीतानि, प्रचुराणि-विपुलानि, सारभाण्डानि-श्रेष्ठभाजनानि दृढभाजनानि धनपात्राणि वा यैस्तै , **भूरिशः** बहुश , **कृतद्वीपान्तरयात्रैः** विहितान्यद्वीपप्रयाणै , **सहकारिभिः** सहकारिभूतै , **अनेकैः** बहुभि , **सांयात्रिकैः** पोतवणिग्भि , **अनुगम्यमानः** अनुस्रियमाण , **इमामेव** प्रत्यक्षभूतामेव, **रङ्गशालां** तदाख्यां नगरीम्, **आगच्छत्** आगतवान् [ द ]। **च** पुन , **आयातमात्रस्य** आगतमात्रस्य, **विविधानिबद्धनगरलोकसम्पातपरिहाराय** विविधा -बहुविधा , अनिबद्धाः-अनियन्त्रिताश्च, ये नगरलोका -नगरवास्तव्यजना , तेषां सम्पातस्य-समागमस्य, परिहाराय-परिवर्जनाय, **विपुलावकाशे** प्रचुरावकाशान्विते, **जलराशिपरिसरे** समुद्रकच्छप्रदेशे, **समावासितस्य** सम्यङ्निवासितस्य, **तस्य** तारकाख्यकुमारस्य, **समीपवासिना** निकटवास्तव्येन, **सकलकैवर्तकुलनायकेन** समस्तधीवरकुलश्रेष्ठेन, जलकेतुनाम्ना, **कर्णधारेण** नाविकेन, **सार्धं** साकम् , **कथञ्चित्** कथमपि, **सख्यं** मैत्री, **समजनि** सम्यगभूत् । **तत्र** तस्मिन् , सख्य इत्यर्थ , **परस्परोपचारकर्मणा** पारस्परिकसत्कारात्मककार्यद्वारा, **प्रौढिं** पूर्णरूपताम् , **उपगते** प्राप्ते सति, **कदाचित्** कस्मिंश्चित् समये, **आरूढनवयौवना** प्राप्ताभिनवतारुण्या, **शापदोषात्** कस्यापि शापरूपात्-अशुभाशंसनरूपात्, दोषात्, **मनुष्यलोके** मर्त्यभुवने, **निपतिता** अवतीर्णा, **त्रिदशवनितेव** देवाङ्गनेव,

सविभ्रमोल्लासितैकभ्रुवा गुरुणेव नवानुरागेण कारितप्रगल्भकलालापपरिचया चिरकाललब्धावसरया विदग्धसख्येव तत्समागमतृष्णया स्थापिता स्वयं दूतीव्रतविधौ निसर्गमुग्धापि प्रौढवनितेव किञ्चिद् विहस्य वचनमिदमुदीरितवती [ फ ]। 'कुमार! त्वया गृहीतपाणिः कथमहं विसंस्थूलीभूतमात्मानं संवृणोमि, कथं च गेहादितो गृहान्तरं गच्छामि, सांप्रतमिदमेव मे त्वदीयं सदनमाश्रयः संवृत्तः' इत्युक्त्वा त्रपावनतवदना पुरःप्रसृतधवलनखमयूखोद्द्योतया तदीयवक्रालापश्रवणजातहासयेव वामचरणाङ्गुष्ठलेखया मन्दमन्दमलिखत् कुट्टिमम् [ ब ]। असावपि युवा तेन तस्याः स्मरविकारदर्शनेन, तेन तत्कालमतिशयस्पृहणीयतां गतेन रूपलावण्यादिगुणकलापेन, तेनामृतस्यन्दशीतलेन करतलस्पर्शेन, तेन च प्रकटितानुरागेण, निपुणया वचनभङ्ग्या कृतेनात्मसमर्पणेन परमरंस्त [ भ ]।

सहासवदनश्च मन्दमाश्लिष्य तामानन्दमुकुलायमानलोचनोत्पलां परिघट्य च कपोलोदरे कपोलेन 'सुन्दरि! यदि न यातव्यं गृहान्तरमिति निश्चयस्ते, ततः किम्? एकेन गृहेण, द्रविणसंग्रहो रत्नानि

---

**अपसारितसाध्वसा** निष्कासितभया, पुन **गुरुणेव** शिक्षकेणेव, **सविभ्रमोल्लासितैकभ्रुवा** सविभ्रमं-सविलास यथा स्यात् तथा, उल्लासिता-उन्नमिता, एका भ्रू-नेत्रोर्ध्वरोमराजिर्येन तादृशेन, **नवानुरागेण** नूतनप्रणयेन, **कारितप्रगल्भकलालापपरिचया** कारित-जनित, प्रगल्भकलालापानां-प्रतिभान्वितमधुरालापानाम्, परिचयो यस्यास्तादृशी सती, पुन **विदग्धसख्येव** निपुणवयस्ययेव, **चिरकाललब्धावसरया** दीर्घकालप्राप्तावसरया, **तत्समागमतृष्णया** तारकसमागमनेच्छया, **स्वयम्** आत्मनैव, **दूतीव्रतविधौ** दूतीनियमानुष्ठाने, **स्थापिता** नियुक्ता, **निसर्गमुग्धाऽपि** प्रकृत्याऽप्रगल्भापि, **प्रौढवनितेव** प्रगल्भनायिकेव, **किञ्चित्** ईषत्, **विहस्य** हास कृत्वा, **इदम्** अनुपदमनूद्यमानं वचनम्, **उदीरितवती** उक्तवती [ फ ], किमित्याह—**कुमार!** तारक! **त्वया** भवता, **गृहीतपाणिः** कृतपाणिग्रहणा, अहम्, **विसंस्थूलीभूतं** विक्षिप्तम्, **आत्मानं** स्वं, **कथं** केन प्रकारेण, **संवृणोमि** उपसहरामि, **च** पुन, **इतः** अस्मात्, भावत्कादित्यर्थ, **गेहात्** गृहात्, **गेहान्तरं** गृहान्तरं, **कथं** केन प्रकारेण, **गच्छामि** उपसरामि, **त्वदीयं** भवदीयम्, **इदमेव** प्रत्यक्षभूतमेव, **सदनं** गृहम्, **साम्प्रतम्** अधुना, **आश्रयः** मम शरणं, **संवृत्तः** सम्पन्न, **इत्युक्त्वा** इति कथयित्वा, **त्रपावनतवदना** लज्जाऽधोमुखी सती, **तदीयवक्रालापश्रवणजातहासयेव** प्रियदर्शनावक्रोक्तिश्रवणोत्पन्नहासयेव, **पुरःप्रसृतधवलनखमयूखोद्द्योतया** पुर-अग्रे, प्रसृत-प्रकीर्णे, धवलनखाना-शुभ्रनखानां, मयूखरूप-किरणरूप, उद्द्योत-प्रकाशो यस्यास्तादृश्या, **वामचरणाङ्गुष्ठलेखया** वामपादाङ्गुष्ठलेखया, **कुट्टिमं** मणिबद्धभूमिम्, **अलिखत्** लिखितवती [ ब ]। **असावपि** सोऽपि, तारकोऽपीत्यर्थ, **युवा** तरुणपुरुष, **तेन** तदानीन्तनेन, **तस्याः** प्रियदर्शनाया, **स्मरविकारदर्शनेन** कामविकारानुभवेन, पुन **तत्कालं** तत्क्षणम्, **अतिशयस्पृहणीयताम्** अत्यन्तकमनीयताम्, **गतेन** प्राप्तेन, **तेन** अनुभूतेन, **रूपलावण्यादिगुणकलापेन** रूपसौन्दर्यादिगुणगणेन, पुन **अमृतस्यन्दशीतलेन** स्पन्दमानामृतसदृशशीतलेन, **तेन** अनुभूतेन, **करतलस्पर्शेन** हस्ततलाश्लेषेण, **च** पुन, **प्रकटितानुरागेण** प्रकटित-अभिव्यक्त, अनुराग-प्रीतिर्येन तादृशेन, **निपुणया** प्रागल्भ्यपूर्णया, **वचनभङ्ग्या** वचनरचनाविशेषेण, **कृतेन**, **तेन** अनुभूतेन, **आत्मसमर्पणेन** आत्मन-स्वस्य, अधीनीकरणेन, **परम्** अत्यन्तम्, **अरंस्त** अप्रीयत [ भ ]।

**च** पुन, **सहासवदनः** हसितमुख सन्, **आनन्दमुकुलायमानलोचनोत्पलाम्** आनन्देन मुकुलायमाने-सङ्कुचन्ती, लोचनोत्पले-नयनकमले यस्यास्तादृशीम्, **तां** प्रियलोचनाम्, **मन्दं** किञ्चित्, **आश्लिष्य** आलिङ्ग्य, **च** पुन, **कपोलोदरे** गण्डस्थलमध्यभागे, **कपोलेन** गण्डस्थलेन, **परिघट्य** संश्लिष्य, **सुन्दरि!** मनोहारिणि!, यदि **ते** तव, **गृहान्तरम्** अन्यगृहम्, न **यातव्यं** गन्तव्यम्, इति **निश्चयः** सकल्प, अस्तीति शेष, **ततः** तर्हि, **एकेन** एकमात्रेण, **गृहेण** गृहमात्रवस्तुना, **किं** न किमपि स्यादित्यर्थ, किन्तु **द्रविणसंग्रहः** धान्यादिराशि, **रत्नानि** मौक्तिकहीरकादीनि, **वाहनानि**

चन्द्रकेतुना निर्वर्ण्य सुचिरं परिजनादाकर्णिततदीयपूर्वापरवृत्तान्तेन चापलं प्रति पुनः पुनः सपरिहासमाभाषितो मधुरमारोपितबहुमानश्च जामातृप्रतिपत्त्या दत्त्वा जीवनमतिप्रभूतं कृतः प्रभुरखिलस्यापि नाविकतन्त्रस्य [ र ]। तत्र च कुर्वताधिपत्यमचिरेणैव शिक्षितानेन सकलापि नौप्रचारविद्या, विदितमखिलमपि कर्णधाराणां कर्म, कृतानि बहुकृत्वः सलिलराशौ गमनागमनानि, दृष्टा दूरविप्रकृष्टा अपि द्वीपान्तरभूमयः, प्रत्यक्षीकृताः क्षुद्रा अपि जलपथाः, लक्षितानि तेषु सम्यक्समविषमस्थानानि, किं बहुना, स्वल्पेनापि कालेन जातः स सकलस्यापि कर्णधारचक्रस्य धौरेयः, स चायमेवाधार्यतां धीरेण [ ल ]।

अस्य हि किमपि लोकोत्तरं धैर्यम्, असाधारणः सत्त्वावष्टम्भः, दृष्टान्तभूतं पौरुषम्, ईषदपि न स्पृष्ट एष कैवर्तकुलसंपर्कदोषाशङ्किनेव वणिग्जातिसहभुवा भीरुत्वेन, वीर्यमपि शारीरमविचार्यमस्य, जलधिमध्यमग्ननौसमुद्धरणेष्वनेकशः कवलितोऽपि हर्म्यतलप्रणालसलिलपूर इव हेलया निष्क्रामति मकरमुखतः, कराग्रोल्लालितशीकर इव करटभित्तिमाहत्य हरति मदमुदग्रकायानामपि करियादसाम्, मुखान्तरक्षिप्तदुन्दुभ-

---

**टिप्पनकम्**—**मकरमुखतः** जलचरविशेषवक्त्राद्, अन्यत्र मकरमुखप्रणालात्। **हरति मदम्** एकत्र मदमत्तताम्, अन्यत्र दर्पम्। दुन्दुभ –जलसर्पः। **प्रकृष्टजाङ्गुलिक इव न मुह्यति विषमोदकविपत्सु** एकत्र रौद्रजलापत्सु, अन्यत्र विषमिश्रणजलाद्युकापत्सु, जाङ्गुलिकः–विषवैद्यो गारुडिको वा [ व ]।

---

सौष्ठवेन, आकृष्ट चेतो–हृदय यस्य तादृशेन, **देवेन** राज्ञा चन्द्रकेतुना, **सुचिरं** सुदीर्घकालम्, **निर्वर्ण्य** दृष्ट्वा, **परिजनात्** परिवारसकाशात्, **आकर्णिततदीयपूर्वापरवृत्तान्तेन** श्रुततदीयसमग्रवार्तिकेन, **चापलं प्रति** परिणयनविषयकचाञ्चल्यविषये, **सपरिहासं** परिहासपूर्वकम्, **मधुरं** प्रियं यथा स्यात् तथा, **आभाषितः** उक्त, **च** पुन, **जामातृप्रतिपत्त्या** जामातृबुद्ध्या, **आरोपितबहुमानः** कृतप्रचुरसम्मान, **अतिप्रभूतम्** अत्यधिकम्, **जीवनं** जीविकाम्, **दत्त्वा**, **अखिलस्यापि** समग्रस्यापि, **नाविकतन्त्रस्य** कर्णधारगणस्य, **प्रभुः** नायक, कृत [ र ]। **च** पुन, **तत्र** कर्णधारगणे, **आधिपत्यं** प्रभुत्वम्, **कुर्वता** स्थापयता, **अनेन** तारकेण, **सकलापि** समग्रापि, **नौप्रचारविद्या** नौवहनकला, **शिक्षिता** अधिगता, पुन **अखिलमपि** समग्रमपि, **कर्णधाराणां** नाविकानां, **कर्म** कार्यम्, **विदितं** परिचितम्, पुन **सलिलराशौ** समुद्रे, **बहुकृत्वः** बहुवारम्, गमनागमनानि कृतानि, पुन **दूरविप्रकृष्टा अपि** अतिदूरस्थिता अपि, **द्वीपान्तरभूमयः** अन्यद्वीपभूमय, **दृष्टाः** दृष्टिगोचरीकृता, पुन **क्षुद्रा अपि** लघवोऽपि, **जलपथाः** जलमार्गा, **प्रत्यक्षीकृताः** दृष्टिगोचरीकृता, पुन **तेषु** जलपथेषु, **समविषमस्थानानि** समानि–अनिम्नोन्नतानि, विषमाणि–निम्नोन्नतानि च, स्थानानि–स्थलानि, **सम्यक्** अत्यन्तम्, **लक्षितानि** परिचितानि, **किं बहुना** किमधिकेन। **स** तारक, **स्वल्पेनापि** अल्पेनापि, कालेन, **सकलस्यापि** समग्रस्यापि, **कर्णधारचक्रस्य** नाविकगणस्य, **धौरेयः** अग्रणी, **जातः** सम्पन्न, **स च** तारकश्च, **अयमेव** प्रत्यक्ष दृश्यमान एव, **धीरेण** प्राज्ञेन, **अवधार्यतां** निश्चीयताम् [ ल ]। **हि** निश्चयेन, **अस्य** तारकस्य, **लोकोत्तरं** लोकोत्कृष्टम्, **धैर्यं** धीरत्वम्, पुन **असाधारणः** उत्कृष्ट, **सत्त्वावष्टम्भः** बलावलम्ब, बलाभिमान इत्यर्थ, यद्वा सत्त्वाना–जन्तूनामाक्रमणम्, पुन **दृष्टान्तभूतम्** आदर्शभूतम्, **पौरुषं** पराक्रम। पुन **एषः** अयम्, **भीरुत्वेन** भयशीलत्वेन, **ईषदपि** किञ्चिदपि, न **स्पृष्टः** कृतस्पर्श, कीदृशेन ? **वणिग्जातिसहभुवा** वैश्यजातिसहजेन, कीदृशेनेव ? **कैवर्तकुलसम्पर्कदोषाशङ्किनेव** कर्णधारकुलसम्पर्कजन्यकलङ्कशङ्कावतेव। अस्य **शारीरं** शरीरसम्बन्धि, **वीर्यं** सामर्थ्यमपि, **अविचार्यम्** अनाकलनीयम्। **जलधिमध्यमग्ननौसमुद्धरणेषु** जलधिमध्ये–समुद्रमध्ये, मग्नाना नावां, समुद्धरणेषु–ततो निष्कासनकार्येषु, **कवलितोऽपि** मकरभक्षितोऽपि, **हर्म्यतलप्रणालसलिलपूर इव** प्रासादतलस्थितप्रणालिकास्थजलप्रवाह इव, **मकरमुखतः** जलचरविशेषमुखमार्गत, अन्यत्र तदाकृतिप्रणालमुखाभ्यन्तरात्, **हेलया** खेलया, अनायासेनेत्यर्थ, **निष्क्रामति** नि सरति। पुन **कराग्रोल्लालितशीकर इव** कराग्रेण–शुण्डाग्रभागेन, उल्लालित –उत्क्षिप्त, **शीकर इव** जलकण इव, **करटभित्तिं** गण्डभित्तिम्, **आहत्य** ताडयित्वा, **उदग्रकायानाम्** उन्नतशरीराणाम्, **करियादसां** हस्तिरूपाणा जलचराणां, जलहस्तिनामित्यर्थ, **मदं** गर्वं मत्तता च, **हरति** नाशयति, शमय-

चन्द्रकेतुना निर्वर्ण्य सुचिरं परिजनादाकर्णिततदीयपूर्वापरवृत्तान्तेन चापलं प्रति पुनः पुनः सपरिहासमाभाषितो मधुरमारोपितबहुमानश्च जामातृप्रतिपत्त्या दत्त्वा जीवनमतिप्रभूतं कृतः प्रभुरखिलस्यापि नाविकतन्त्रस्य [ र ]। तत्र च कुर्वताधिपत्यमचिरेणैव शिक्षितानेन सकलापि नौप्रचारविद्या, विदितमखिलमपि कर्णधाराणां कर्म, कृतानि बहुकृत्वः सलिलराशौ गमनागमनानि, दृष्टा दूरविप्रकृष्टा अपि द्वीपान्तरभूमयः, प्रत्यक्षीकृताः क्षुद्रा अपि जलपथाः, लक्षितानि तेषु सम्यक्समविषमस्थानानि, किं बहुना, स्वल्पेनापि कालेन जातः स सकलस्यापि कर्णधारचक्रस्य धौरेयः, स चायमेवावधार्यतां धीरेण [ ल ]।

अस्य हि किमपि लोकोत्तरं धैर्यम्, असाधारणः सत्त्वावष्टम्भः, दृष्टान्तभूतं पौरुषम्, ईषदपि न स्पृष्ट एष कैवर्तकुलसंपर्कदोषाशङ्किनेव वणिग्जातिसहभुवा भीरुत्वेन, वीर्यमपि शारीरमविचार्यमस्य, जलधिमध्यमग्ननौसमुद्धरणेष्वनेकशः कवलितोऽपि हर्म्यतलप्रणालसलिलपूर इव हेलया निष्क्रामति मकरमुखतः; कराग्रोल्लालितशीकर इव करटभित्तिमाहत्य हरति मदमुदग्रकायानामपि करियादसाम्, मुखान्तरक्षिप्तदुन्दुभ-

---

**टिप्पनकम्—मकरमुखतः** जलचरविशेषवक्त्राद्, अन्यत्र मकरमुखप्रणालात्। **हरति मदम्** एकत्र मदमत्तताम्, अन्यत्र दर्पम्। दुन्दुभ –जलसर्प। **प्रकृष्टजाङ्गुलिक इव न मुह्यति विषमोदकविपत्सु** एकत्र रौद्रजलापत्सु, अन्यत्र विषमिश्रणजलाद्युकापत्सु, जाङ्गुलिक'–विषवैद्यो गारुडिको वा [ व ]।

---

सौष्ठवेन, आकृष्टं चेतो–हृदयं यस्य तादृशेन, **देवेन** राज्ञा चन्द्रकेतुना, **सुचिरं** सुदीर्घकालम्, **निर्वर्ण्य** दृष्ट्वा, **परिजनात्** परिवारसकाशात्, **आकर्णिततदीयपूर्वापरवृत्तान्तेन** श्रुततदीयसमग्रवार्तिकेन, **चापलं प्रति** परिणयनविषयकचाञ्चल्यविषये, **सपरिहासं** परिहासपूर्वकम्, **मधुरं** प्रियं यथा स्यात् तथा, **आभाषितः** उक्त, **च** पुन, **जामातृप्रतिपत्त्या** जामातृबुद्ध्या, **आरोपितबहुमानः** कृतप्रचुरसम्मान, **अतिप्रभूतम्** अत्यधिकम्, **जीवनं** जीविकाम्, दत्त्वा, **अखिलस्यापि** समग्रस्यापि, **नाविकतन्त्रस्य** कर्णधारगणस्य, **प्रभुः** नायक, कृत [ र ]। **च** पुन, **तत्र** कर्णधारगणे, **आधिपत्यं** प्रभुत्वम्, **कुर्वता** स्थापयता, **अनेन** तारकेण, **सकलापि** समग्रापि, **नौप्रचारविद्या** नौवहनकला, **शिक्षिता** अधिगता, पुन **अखिलमपि** समग्रमपि, **कर्णधाराणां** नाविकानां, **कर्म** कार्यम्, **विदितं** परिचितम्, पुन **सलिलराशौ** समुद्रे, **बहुकृत्वः** बहुवारम्, गमनागमनानि कृतानि, पुन **दूरविप्रकृष्टा अपि** अतिदूरस्थिता अपि, **द्वीपान्तरभूमयः** अन्यद्वीपभूमय, **दृष्टाः** दृष्टिगोचरीकृता, पुन **क्षुद्रा अपि** लघवोऽपि, **जलपथाः** जलमार्गा, **प्रत्यक्षीकृताः** दृष्टिगोचरीकृता, पुन **तेषु** जलपथेषु, **समविषमस्थानानि** समानि–अनिम्नोन्नतानि, विषमाणि–निम्नोन्नतानि च, स्थानानि–स्थलानि, **सम्यक्** अत्यन्तम्, **लक्षितानि** परिचितानि, **किं बहुना** किमधिकेन। **स** तारक, **स्वल्पेनापि** अल्पेनापि, कालेन, **सकलस्यापि** समग्रस्यापि, **कर्णधारचक्रस्य** नाविकगणस्य, **धौरेयः** अग्रणी, **जातः** सम्पन्न, **स च** तारकश्च, **अयमेव** प्रत्यक्षं दृश्यमान एव, **धीरेण** प्राज्ञेन, **अवधार्यतां** निश्चीयताम् [ ल ]। हि निश्चयेन, **अस्य** तारकस्य, **लोकोत्तरं** लोकोत्कृष्टम्, **धैर्य** धीरत्वम्, पुन **असाधारणः** उत्कृष्ट, **सत्त्वावष्टम्भः** बलावलम्ब, बलाभिमान इत्यर्थ, यद्वा सत्त्वाना–जन्तूनामाक्रमणम्, पुन **दृष्टान्तभूतम्** आदर्शभूतम्, **पौरुषं** पराक्रम। पुन **एषः** अयम्, **भीरुत्वेन** भयशीलत्वेन, **ईषदपि** किञ्चिदपि, न **स्पृष्टः** कृतस्पर्श, कीदृशेन? **वणिग्जातिसहभुवा** वैश्यजातिसहजेन, कीदृशेनेव? **कैवर्तकुलसम्पर्कदोषाशङ्किनेव** कर्णधारकुलसम्पर्कजन्यकलङ्कशङ्कावतेव। अस्य **शारीरं** शरीरसम्बन्धि, **वीर्यं** सामर्थ्यमपि, **अविचार्यम्** अनाकलनीयम्। **जलधिमध्यमग्ननौसमुद्धरणेषु** जलधिमध्ये–समुद्रमध्ये, मग्नानां नावा, समुद्धरणेषु–ततो निष्कासनकार्येषु, **कवलितोऽपि** मकरभक्षितोऽपि, **हर्म्यतलप्रणालसलिलपूर इव** प्रासादतलस्थितप्रणालिकास्थजलप्रवाह इव, **मकरमुखतः** जलचरविशेषमुखमार्गत, अन्यत्र तदाकृतिप्रणालमुखाभ्यन्तरात्, **हेलया** खेलया, अनायासेनेत्यर्थ, **निष्क्रामति** नि सरति। पुन **कराग्रोल्लालितशीकर इव** कराग्रेण–शुण्डाग्रभागेन, उल्लालित–उत्क्षिप्त, **शीकर इव** जलकण इव, **करटभित्तिं** गण्डभित्तिम्, **आहत्य** ताडयित्वा, **उदग्रकायानाम्** उन्नतशरीराणाम्, **करियादसां** हस्तिरूपाणा जलचराणां, जलहस्तिनामित्यर्थ, **मदं** गर्वं मत्तता च, **हरति** नाशयति, शमय-

वाहनानि परिजनः शरीरं हृदयमिन्द्रियाणि प्राणाः सर्वमेव त्वदीयम्, एतदारोपय क्षणेनाङ्गीकारेण गौरवम्' इत्युदीर्य "दुष्कुलादपि ग्राह्यमङ्गनारत्नम्" इत्याचार्यवचनं मनसि कृत्वा स्वजातिनिरपेक्ष एव क्षणे ज्वलन्तमन्तर्भवनानलं साक्षीकृत्य भूयो गृहीतपाणिस्तां चकितमृगशावलोचनामत्यन्तमनुरागान्धो योजनगन्धामिव पाराशरः प्रणयिनीमकृत [म]। तस्माच्च पाणिग्रहणदिवसादारभ्य निर्भरानुरागतया सर्वाङ्गसुन्दर्या सह विवर्धमानविविधविदग्धपरिहासमभ्रान्तचित्रचाटुक्रममप्रकटितस्वस्वामिभावमल्पक्षणोपजायमानानेककोपप्रसादमस्थानसम्पाद्यमानस्पृहणीयनिग्रहानुग्रहमनुदिवसमासेवमानो नवयौवनोपभोगसुखमपरकामिनीसुखसंभोगानां गृहव्यापारयोगानां च प्रायच्छदुदकाञ्जलिम् [य]। जलकेतुना कस्यापि सांयात्रिकस्य तनया वहनभङ्गे सागरात्समुद्धृत्य परिपालितेयमिति तत्त्ववेदिभिरावेदिततदीयवृत्तान्तोऽपि सहागतैर्वणिग्भिः स्वदेशगमनाय पुनः पुनरभ्यर्थ्यमानोऽपि दर्शनोत्कण्ठितेन ज्ञातिवर्गेण सोपालम्भवचनैः सन्देशदानैरुन्मनीक्रियमाणोऽपि त्रपया स्थितोऽत्रैव न गतो निजस्थानम्, आस्थानभूमौ उपगतश्च प्रभुमाकृतिगुणाकृष्टचेतसा देवेन

---

वाहनानीति परिजनः परिवारः शरीरं कलेवरम् हृदयम् अन्तःकरणम्, इन्द्रियाणि ज्ञान-कर्मसाधनानि चक्षुरादीनि प्राणाः—जीवितम्, एतत् सर्वं त्वदीयं भवदीयम्, क्षणेन क्षणमात्रेण अङ्गीकारेण स्वीकारेण गौरवं महत्त्वम् आरोपय आपादय इति इत्थम् उक्त्वा अङ्गनारत्नं दुष्कुलादपि—नीचकुलादपि ग्राह्यं—स्वीकार्यम् इति आचार्यवचनं नीतिमार्गोपदेशकवाक्यम्, मनसि हृदये कृत्वा प्रमाणीकृत्य स्वजातिनिरपेक्षः पाणिग्रहणे स्वजात्यनपेक्षः तत्रैव तस्मिन्नेव क्षणे समये अन्तःभवने ज्वलन्तं दीप्यमानं भवनानलं गृहाग्निम्, साक्षीकृत्य पाणिग्रहणसाक्षित्वेनाङ्गीकृत्य भूयः पुनरपि गृहीतपाणिः स्वीकृतप्रियतमाहस्तः सन् चकितमृगशावलोचनां चकितः—सम्भ्रान्तो यो मृगशावः—हरिणशिशुः तस्येव लोचने—नयने यस्यास्तादृशीम्, पुनः अनुरागान्धः प्रणयान्धः, तां प्रियदर्शनाम्, पाराशरः पराशरसुतो व्यासः योजनगन्धामिव सत्यवतीनामधेयां धीवरकन्यकामिव प्रणयिनीं प्रियाम्, [illegible] अकृत स्वपत्नीम् [म]। स पुनः तस्मात् पाणिग्रहणदिवसात् विवाहदिनात् आरभ्य निर्भरानुरागः सान्द्रस्नेहः सन् सर्वाङ्गसुन्दर्या सर्वाङ्गमनोज्ञया तया सह उपभोगसुखं सुरतसम्भोगप्रधानम्, नवयौवनोपभोगं नवयौवनसुखम्, अनुदिनं प्रतिदिनम्, आसेवमानः सम्यगनुभवन् अपरकामिनीसुखसम्भोगानां तदन्यवनितारतिसुखानाम्, न पुनः गृहव्यापारयोगानां गृहधर्मसम्बन्धानां च उदकाञ्जलिं तिलाञ्जलिं, प्रायच्छत् प्रदत्तवान् सर्वं त्यक्तवानित्यर्थः; कीदृशं नवयौवनोपभोगम्? विवर्धमानविविधविदग्धपरिहासं विवर्धमानाः—विशेषेण वर्धमाना विविधाः—अनेकविधाः विदग्धाः—चमत्कारिपूर्णाः परिहासा यस्मिंस्तादृशम् पुनः अभ्रान्तचित्रचाटुक्रमम् अभ्रान्तः—अनवरतः चित्रचाटूनां विचित्रमधुरवचनानाम्, क्रमः—धारा यस्मिंस्तादृशम्, पुनः अप्रकटितस्वस्वामिभावम् अप्रकटितः—अप्रकाशितः स्वस्वामिभावः—ईशितृत्वेशितव्यभावो यस्मिंस्तादृशम्, पुनः अल्पक्षणोपजायमानानेककोपप्रसादम् अल्पक्षणे—स्तोककालाभ्यन्तरे उपजायमानाः—उत्पद्यमानाः अनेके—विविधाः कोपाः—प्रणयकोपाः प्रसादाः—प्रसन्नताश्च यस्मिंस्तादृशम् पुनः अस्थानसम्पाद्यमानस्पृहणीयनिग्रहानुग्रहम् अस्थाने—अनवसरे सम्पाद्यमानौ—क्रियमाणौ स्पृहणीयौ अभिलषणीयत्वेन रमणीयौ निग्रहानुग्रहौ—दण्डमोक्षौ यस्मिंस्तादृशम् [य]। कस्यापि सांयात्रिकस्य पोतवणिज इयं तनया कन्या वहनभङ्गे तदीयपोतमग्नतायां सत्याम् सागरात् समुद्रात् समुद्धृत्य निष्कास्य जलकेतुना तदाख्यश्रेष्ठिना परिपालिता रक्षिता इति तत्त्ववेदिभिः यथार्थज्ञातृभिः आवेदिततदीयवृत्तान्तोऽपि विज्ञापितप्रियदर्शनावृत्तान्तो ज्ञातोऽपि पुनः सहागतैः आत्मना साकमागतैः वणिग्भिः वाणिज्यव्यापारिभिः स्वदेशगमनाय स्वदेशप्रत्यावर्तनाय पुनः पुनः वारंवारम् अभ्यर्थ्यमानोऽपि प्रार्थ्यमानोऽपि पुनः दर्शनोत्कण्ठितेन तद्दर्शनोत्सुकेन ज्ञातिवर्गेण बन्धुवर्गेण सोपालम्भवचनैः साक्षेपवाक्यैः सन्देशदानैः वाचिकप्रेषणैः उन्मनीक्रियमाणोऽपि समुत्सुकीक्रियमाणोऽपि त्रपया लज्जया अत्रैव अस्मिन्नेव स्थाने स्थितः निजस्थानं स्वस्थानम् न गतः। स पुनः आस्थानभूमौ राजसभाभूमौ प्रभुम् अवलोकितुम्, उपगतः उपस्थितः आकृतिगुणाकृष्टचेतसा आकृतिगुणेन—आकार

चन्द्रकेतुना निर्वर्ण्य सुचिरं परिजनादाकर्णिततदीयपूर्वापरवृत्तान्तेन चापलं प्रति पुनः पुनः सपरिहासमाभाषितो मधुरमारोपितबहुमानश्च जामातृप्रतिपत्त्या दत्त्वा जीवनमतिप्रभूतं कृतः प्रभुरखिलस्यापि नाविकतन्त्रस्य [ र ]। तत्र च कुर्वताधिपत्यमचिरेणैव शिक्षितानेन सकलापि नौप्रचारविद्या, विदितमखिलमपि कर्णधाराणां कर्म, कृतानि बहुकृत्वः सलिलराशौ गमनागमनानि, दृष्टा दूरविप्रकृष्टा अपि द्वीपान्तरभूमयः, प्रत्यक्षीकृताः क्षुद्रा अपि जलपथाः, लक्षितानि तेषु सम्यक्समविषमस्थानानि, किं बहुना, स्वल्पेनापि कालेन जातः स सकलस्यापि कर्णधारचक्रस्य धौरेयः, स चायमेवावधार्यतां धीरेण [ ल ]।

अस्य हि किमपि लोकोत्तरं धैर्यम्, असाधारणः सत्त्वावष्टम्भः, दृष्टान्तभूतं पौरुषम्, ईषदपि न स्पृष्ट एष कैवर्तकुलसंपर्कदोषाशङ्किनेव वणिग्जातिसहभुवा भीरुत्वेन, वीर्यमपि शारीरमविचार्यमस्य, जलधिमध्यमग्ननौसमुद्धरणेष्वनेकशः कवलितोऽपि हर्म्यतलप्रणालसलिलपूर इव हेलया निष्क्रामति मकरमुखतः, कराग्रोल्लालितशीकर इव करटभित्तिमाहत्य हरति मदमुदग्रकायानामपि करियादसाम्, मुखान्तरक्षिप्तदुन्दुभ-

---

**टिप्पनकम्**—**मकरमुखतः** जलचरविशेषवक्त्राद्, अन्यत्र मकरमुखप्रणालात्। **हरति मदम्** एकत्र मदमत्तताम्, अन्यत्र दर्पम्। दुन्दुभ—जलसर्पः। **प्रकुपजाङ्गुलिक इव न मुह्यति विषमोदकविपत्सु** एकत्र रौद्रजलापत्सु, अन्यत्र विषमिश्रणजलाडुकापत्सु, जाङ्गुलिकः—विषवैद्यो गारुडिको वा [ व ]।

---

सौष्ठवेन, आकृष्टं चेतो—हृदयं यस्य तादृशेन, **देवेन** राज्ञा चन्द्रकेतुना, **सुचिरं** सुदीर्घकालम्, **निर्वर्ण्य** दृष्ट्वा, **परिजनात्** परिवारसकाशात्, **आकर्णिततदीयपूर्वापरवृत्तान्तेन** श्रुततदीयसमग्रवार्तकेन, **चापलं प्रति** परिणयनविषयकचापल्य-विषये, **सपरिहासं** परिहासपूर्वकम्, **मधुरं** प्रियं यथा स्यात् तथा, **आभाषितः** उक्त, **च** पुन, **जामातृप्रतिपत्त्या** जामातृबुद्ध्या, **आरोपितबहुमानः** कृतप्रचुरसम्मान, **अतिप्रभूतम्** अत्यधिकम्, **जीवनं** जीविकाम्, दत्त्वा, **अखिलस्यापि** समग्रस्यापि, **नाविकतन्त्रस्य** कर्णधारगणस्य, **प्रभुः** नायक, कृत [ र ]। च पुन, **तत्र** कर्णधारगणे, **आधिपत्यं** प्रभुत्वम्, **कुर्वता** स्थापयता, **अनेन** तारकेण, **सकलापि** समग्रापि, **नौप्रचारविद्या** नौवहनकला, **शिक्षिता** अधिगता, पुन **अखिलमपि** समग्रमपि, **कर्णधाराणां** नाविकानां, **कर्म** कार्यम्, **विदितं** परिचितम्, पुन **सलिलराशौ** समुद्रे, **बहुकृत्वः** बहुवारम्, गमनागमनानि कृतानि, पुन **दूरविप्रकृष्टा अपि** अतिदूरस्थिता अपि, **द्वीपान्तरभूमयः** अन्यद्वीपभूमय, **दृष्टाः** दृष्टिगोचरीकृता, पुन **क्षुद्रा अपि** लघवोऽपि, **जलपथाः** जलमार्गा, **प्रत्यक्षीकृताः** दृष्टिगोचरीकृता, पुन **तेषु** जलपथेषु, **समविषमस्थानानि** समानि—अनिम्नोन्नतानि, विषमाणि—निम्नोन्नतानि च, स्थानानि—स्थलानि, **सम्यक्** अत्यन्तम्, **लक्षितानि** परिचितानि, **किं बहुना** किमधिकेन। **स** तारक, **स्वल्पेनापि** अल्पेनापि, कालेन, **सकलस्यापि** समग्रस्यापि, **कर्णधारचक्रस्य** नाविकगणस्य, **धौरेयः** अग्रणी, **जातः** सम्पन्न, **स च** तार कश्च, **अयमेव** प्रत्यक्षं दृश्यमान एव, **धीरेण** प्राज्ञेन, **अवधार्यतां** निश्चीयताम् [ ल ]। **हि** निश्चयेन, **अस्य** तारकस्य, **लोकोत्तरं** लोकोत्कृष्टम्, **धैर्यं** धीरत्वम्, पुन **असाधारणः** उत्कृष्ट, **सत्त्वावष्टम्भः** बलावलम्ब, बलाभिमान इत्यर्थ, यद्वा सत्त्वाना—जन्तूनामाक्रमणम्, पुन **दृष्टान्तभूतम्** आदर्शभूतम्, **पौरुषं** पराक्रम। पुन **एषः** अयम्, भीरुत्वेन भयशीलत्वेन, **ईषदपि** किञ्चिदपि, न **स्पृष्टः** कृतस्पर्श, कीदृशेन ? **वणिग्जातिसहभुवा** वैश्यजातिसहजेन, भीरुत्वेन! **कैवर्तकुलसम्पर्कदोषाशङ्किनेव** कर्णधारकुलसम्पर्कजन्यकलङ्कशङ्कावतेव। अस्य **शारीरं** शारीरमपि, वीर्यं सामर्थ्यमपि, **अविचार्यम्** अनाकलनीयम्। **जलधिमध्यमग्ननौसमुद्धरणेषु** जलधिमध्ये—समुद्रमध्ये, मग्ना नावां, समुद्धरणेषु—ततो निष्कासनकार्येषु, **कवलितोऽपि** मकरभक्षितोऽपि, **हर्म्यतलप्रणालसलिलपूर इव** [illegible] प्रणालिकास्थजलप्रवाह इव, **मकरमुखतः** जलचरविशेषमुखमार्गत, अन्यत्र तदाकृतिप्रणालमुखमार्गत, **हेलया** खेलया, अनायासेनेत्यर्थः, **निष्क्रामति** नि सरति। पुन **कराग्रोल्लालितशीकर इव** कराग्रेण [illegible], **उल्लालित**—उत्क्षिप्त, **शीकर इव** जलकण इव, **करटभित्तिं** गण्डभित्तिम्, **आहत्य** ताडयित्वा, **उदग्रकायानाम्** [illegible] शरीराणाम्, **करियादसां** हस्तिरूपाणां जलचराणां, जलहस्तिनामित्यर्थ [illegible] हरति [illegible]

देहस्थितिसाधनमधिकृतैर्यः कश्चिदर्पितः सोऽपि सर्पिस्तैलकम्बलौषधप्रायः प्रायशो विन्यस्तः समस्तोऽपि द्वीपान्तरदुरापो द्रव्याणां कलापः, स्थापिताश्च सर्वतः समारोपितसमर्थनाविकास्तीर्थेषु दृढकाष्ठगुम्फनिष्ठुरा नावः, प्रतिष्ठते अनवरतमारुह्यारुह्य तासु गृहीतनानाविधास्त्रः शिबिरवीरलोकः, निवर्तते नगरसंमुखमखिलोऽपि तत्तत्कार्यमङ्गीकृत्य प्रवर्तितः प्रस्थानकाले रथाश्ववारणादिर्नौतन्त्रयात्रायामनुपयुक्तः सेनापरिच्छदः, कुमारस्यापि शत्रुविजयाय सज्जीकृता विजययात्राभिधाना नौः, यदि न कश्चित् कार्यविलम्बस्ततः प्रस्थीयतामभ्युदयाय' इति [ स ]। अहं तु तद्वचनानन्तरमेव सत्वरमुपसृत्य मौहूर्तिकेन शंसितप्रस्थानक्षणस्तत्क्षणमेव राजलोकपरिवृतो गत्वा समासन्ननीरमर्णवतीरदेशं, तथैवोर्ध्वस्थितः पुरस्थितानुत्तमाङ्गावर्जनेन विनयाञ्जलिकर्मणा नर्मालापेन स्मितेन स्निग्धावलोकितेन च यथोचितं प्रयुक्तेन कृतानुव्रजनान् स्वाभिजनवृद्धबान्धवान् सुहृदो राजसेवकान् नगरलोकांश्च प्रत्येकं व्यसर्जयम् [ ह ]। अथ ससंभ्रमेण नौर्नौरिति समकालमुच्चैर्व्याहरतः प्रतीहारवृन्दस्य शब्दमाकर्ण्य तूर्णमानीयत तटाभ्यर्णमर्णवस्य नाविकगणेन नौः, तां

---

टिप्पनकम्—स्वाभिजनः-स्वकुलम् [ ह ]।

---

**रोपितं** निहितम् [ ष ]। पुन **अपरोऽपि** तदन्योऽपि, **देहस्थितिसाधनं** शरीरोपकरणभूत, **सर्पिस्तैलकम्बलौषधप्रायः** घृततैलादिप्रचुर, **द्वीपान्तरदुरापः** अन्यद्वीपदुर्लभ, य **कश्चित्** कोऽपि, **द्रव्याणां** वस्तूनाम्, **कलापः** समूह, **अधिकृतैः** नियुक्तजनै, **अर्पितः** दत्त, **सोऽपि** असावपि, **प्रायशः** प्रायेण, समस्तोऽपि, **विन्यस्तः** निवेशित । **च** पुन, **समारोपितसमर्थनाविकाः** समारोपिता –सम्यगारोहिता, समर्था –नौवाहनक्षमा, नाविका –कर्णधारा यासु ता, पुन **तीर्थेषु** तत्तज्जलावतारस्थलेषु, **दृढकाष्ठगुम्फनिष्ठुराः** प्रबलकाष्ठनिवेशनदृढाः, **नावः** नौकाः, **सर्वतः** समन्तत, **स्थापिताः** निवेशिता । **गृहीतनानाविधास्त्रः** धृतविविधास्त्र सन्, **शिबिरवीरलोकः** सेनाशूरजन, **तासु** नौषु, **अनवरतं** सततम्, **आरुह्य आरुह्य** प्रत्येकम् आरुह्य, **प्रतिष्ठते** प्रस्थान करोति । **नौतन्त्रयात्रायां** नौसाध्ययात्रायाम्, **अनुपयुक्तः** अनपेक्षित, **अखिलोऽपि** सर्वोऽपि, **रथाश्ववारणादिः** रथ-तुरग-गजप्रभृति, **सेनापरिच्छदः** सेनापरिवार, तत्तत्कार्यम्, **अङ्गीकृत्य** स्वीकृत्य, **प्रवर्तितः** प्रेरित सन्, **प्रस्थानकाले** प्रयाणवेलायाम्, नगरसम्मुख **निवर्तते** प्रत्यावर्तते । **कुमारस्यापि** भवतोऽपीत्यर्थ, **शत्रुविजयाय** शत्रुविजयनिमित्तम्, **विजययात्राभिधाना** अन्वर्थतदाख्या, नौ, **सज्जीकृता** सज्जिता । यदि **कश्चित्** कोऽपि, **कार्यविलम्बः** प्रस्थानविलम्बो न, अस्तीति शेष, तर्हि **अभ्युदयाय** शत्रुविजयाय, **प्रस्थीयतां** प्रस्थान विधीयताम् [ स ]। **अहं तु** अह समरकेतुस्तु, **तद्वचनानन्तरमेव** तत्कथनानन्तरमेव, **सत्वरं** शीघ्रम्, **उपसृत्य** उपगत्य, **मौहूर्तिकेन** मुहूर्ताभिज्ञेन, **शंसितप्रस्थानक्षणः** सूचितप्रस्थानमुहूर्त सन्, **तत्क्षणमेव** तत्कालमेव, **राजलोकपरिवृतः** नृपजनपरिवेष्टित, **समासन्ननीरम्** अतिसन्निहितजलम्, **अर्णवतीरदेशं** समुद्रतटप्रदेशम्, गत्वा, **तत्रैव** तत्तीरदेश एव, **तथैवेति** पाठे तेनैव प्रकारेण, राजलोकपरिवृताकारेणैवेत्यर्थ, **ऊर्ध्वस्थितः** तीरदेशोपरि अनुपविष्टः सन्, **पुरः स्थितान्** अग्रे स्थितान्, **स्वाभिजनवृद्धबान्धवान्** स्ववंश्यान् वयोवृद्धबन्धुजनान्, **सुहृदः** मित्राणि, **च** पुन, **राजसेवकान्** राजशुभचिन्तकान्, **नगरलोकान्** नगरवास्तव्यजनान्, **प्रत्येकम्** एकैकम्, **व्यसर्जयं** प्रत्यावर्तयम्, कीदृशान्? **यथोचितं** यथायोग्यम्, **प्रयुक्तेन** कृतेन, **उत्तमाङ्गावर्जनेन** उत्तमाङ्गस्य–मस्तकस्य, आवर्जनेन–किञ्चिन्नमनेन, पुन **विनयाञ्जलिकर्मणा** विनयपूर्वकाञ्जलिबन्धरूपकार्येण, पुन **नर्मालापेन** प्रेमपूर्वकाभाषणेन, **स्मितेन** मन्दहासेन, **च** पुन, **स्निग्धावलोकितेन** स्नेहपूर्णावलोकनेन, **कृतानुव्रजनान्** कृतानुगमनान्, कतिपयपदान्यनुगम्येत्यर्थ [ ह ]।

अथ अनन्तरम्, **नौर्नौः** आनीयतामिति शेष, इति **उच्चैः** उच्चस्वरेण, **समकालं** युगपत्, **व्याहरतः** उद्घोषयत, **प्रतीहारवृन्दस्य** द्वारपालवर्गस्य, **शब्दम्** उद्घोषम्, **आकर्ण्य** श्रुत्वा, **ससम्भ्रमेण** सभ्रान्तेन, **नाविकगणेन** कर्ण-

समाहृतसमस्तनिजोपकरणेन सत्यपि स्वकर्मसावधाने संनिधानवर्तिनि नाविकव्राते विनीतताप्रतिपादनाय कर्णधारतां प्रतिपद्य सद्यो धृतारित्रेण तारकेणाधिष्ठितया पृष्ठतोऽनुकूलपवनास्फालनतरङ्गितेन फेनपाण्डुना सलिलसंघातेन पुरस्ताच्च सितपटेन प्रवर्त्यमानया व्रजन्त्याप्यतिजवेन दुर्विभावत्वाद् गतेरनुज्झितस्थानयेवोह्यमानया नावोह्यमानः [ इ ], प्रतिवेलमपसरत्सानुविस्तारान् निरन्तरोपलक्ष्यमाणसान्तरालतरुगणान् सुवेलगिरिदर्शनाय सेनया सह प्रचलितानिवावलोकयन् वेलावनाचलान् [ ई ], अलघुविस्तारपिहितदिक्चक्रेण चकितनक्रचक्रोन्मुच्यमानपुरोवर्त्मना पवनासूत्रितविचित्रभङ्गाभिर्गाढसंमर्दभयादूर्मिमालाभिरिव वारिधेरन्तरिक्षमुत्पतिताभिः फेनमुक्ताफलशङ्खधवलाभिर्ध्वजपताकाभिरुपपादितवनावनीविलासेन संसर्पता विविधकवचशस्त्रशिरस्त्रपूरितेन पोतसंतानेन पर्वतसेतुनेवापरेण सीमन्तयन् दक्षिणां दिशं क्षणेनैवादृश्यतीरभागमविभाव्यमान-

---

**टिप्पनकम्**—**ऊह्यमानया** वितर्क्यमाणया [ इ ]।

---

पिष्टपञ्चाङ्गुल-पिष्टातकाभिधवर्णचूर्णद्रवार्द्रितं, पञ्चाङ्गुल-पञ्चाङ्गुलि समाहारो यस्यां तादृश्या, पुन **ध्वजाग्रबद्धाभिनववर्णांशुकपताकया** ध्वजाग्रे-पताकास्तम्भाग्रे, बद्धा-लम्बिता, अभिनववर्णांशुकपताका-नवीनवर्णविशिष्टश्लक्ष्णवस्त्ररूपपताका यस्यां तादृश्या, पुन **समाहृतसमस्तनिजोपकरणेन** समाहृतानि-सगृहीतानि, समस्तानि-अशेषाणि, निजोपकरणानि-निजानि नौवहनोपकरणवस्तूनि येन तादृशेन, तथा **स्वकर्मसावधाने** स्वकार्यावहितहृदये, **नाविकगणे** कर्णधारगणे, **सन्निधानवर्तिनि** निकटवर्तिनि, सत्यपि, **विनीतताप्रतिपादनाय** विनीतताप्रकटनाय, **कर्णधारतां** नाविकतां, प्राप्य, **सद्यः** तत्क्षणम्, **धृतारित्रेण** धृत-गृहीतम्, अरित्र-जलोत्क्षेपकं येन तादृशेन, तारकेण, **अधिष्ठितया** अध्यासितया, पुन. **पृष्ठतः** पश्चात्, **अनुकूलपवनास्फालनतरङ्गितेन** अनुकूलवाय्वाघाततरङ्गितेन, **फेनपाण्डुना** फेनप्रयुक्तपाण्डुवर्णेन, **सलिलसंघातेन** जलसमूहेन, **पुरस्ताच्च** अग्रतश्च, **सितपटेन** श्वेतवस्त्रेण, तदात्मकपताकयेत्यर्थ, **प्रवर्त्यमानया** प्रेर्यमाणया, पुन **अतिजवेन** अतिवेगेन, **व्रजन्त्यापि** गच्छन्त्यापि, **गतेः** गमनस्य, **दुर्विभावत्वात्** दुर्लक्षत्वात्, **अनुज्झितस्थानयेव** अत्यक्तस्थानयेव, **ऊह्यमानया** तर्क्यमाणया [ इ ]। पुन कीदृशोऽहम्? **प्रतिवेलं** प्रतितटम्, **अपसरत्सानुविस्तारान्** अपसरन्त-अपगच्छन्त, सानुविस्तारा-पर्वतसम्बन्धिसमप्रदेशविस्तारा येषु तादृशान्, **निरन्तरोपलक्ष्यमाणसान्तरालतरुगणान्** निरन्तरम्-अव्यवहितं यथा स्यात् तथा, उपलक्ष्यमाण-दृश्यमान, सान्तरालाना-व्यवहितानां, तरूणां गण-समूहो येषु तादृशान्, **वेलावनाचलान्** तटस्थितवनव्याप्तपर्वतान्, **अवलोकयन्** निरीक्षमाण, कीदृशानिव? **सुवेलगिरिदर्शनाय** सुवेलाख्यपर्वतदर्शनाय, सेनया सह **प्रचलितानिव** प्रस्थितानिव, अत्र तरुगणस्य सेनास्थानीयत्व पर्वतस्य च नृपस्थानीयत्व बोध्यम् [ ई ]। पुन कीदृशोऽहम्? **पोतसंतानेन** जलयानगणेन, दक्षिणां दिशं **सीमन्तयन्** केशवेशयुततामिवापादयन्, व्याप्नुवन्नित्यर्थ। कीदृशेन पोतसन्तानेन? **अलघुविस्तारपिहितदिक्चक्रेण** अलघुविस्तारेण-अतिविस्तारेण, पिहितम्-आवृतम्, दिक्चक्र-दिङ्मण्डलं येन तादृशेन, पुन **चकितनक्रचक्रोन्मुच्यमानपुरोवर्त्मना** चकितेन-सम्भ्रान्तेन, नक्रचक्रेण-जलजन्तुगणेन, उन्मुच्यमानं-परित्यज्यमानं, पुरोवर्त्म-अग्रभागो यस्य तादृशेन, पुन **ध्वजपताकाभिः** ध्वजदण्डलम्बितपताकाभि, **उपपादितवनावनीविलासेन** उपपादित-निष्पादित, वनावन्या-लिङ्गसाम्यात् वनभूमिरूपवनिताया, विलास-शृङ्गारचेष्टा येन तादृशेन, कीदृशीभि? **पवनासूत्रितविचित्रभङ्गाभिः** पवनेन-क्षोद्गमितवायुना, आ-समन्तात्, सूत्रिता-रचिता, विचित्रा-विलक्षणा, भङ्गा-वक्रभावा विच्छित्तयो वा यासा तादृशीभि, पुन **गाढसंमर्दभयात्** अत्यन्तपोतसघर्षभयात्, **अन्तरिक्षं** गगनम्, **उत्पतिताभिः** उच्छलिताभि, **वारिधेः** समुद्रस्य, **ऊर्मिमालाभिरिव** तरङ्गमालाभिरिवेत्युत्प्रेक्षा, पुन **फेन-मुक्ताफल-शङ्खधवलाभिः** फेन मुक्ताफल-शङ्खसदृशश्वेताभि, यद्वा फेन मुक्ताफल-शङ्खैर्धवलाभिरिति ऊर्मिमालाभिरित्यस्यापि विशेषणम्, पुन **संसर्पता** सञ्चरता, पुन **विविधकवचशस्त्रशिरस्त्रपूरितेन** विविधै, कवचै-वर्मभि, शस्त्रै-खड्गादिभिः, शिरस्त्रै-शिरस्त्राणकरणविशेषै, पूरितेन-पूर्णेन, केनेव? **अपरेण** अन्येन पूर्वं रामसेनासतरणसमयाद् भिन्नेनेवेति भाव, **पर्वतसेतुनेव** पर्वतरूपसेतुनेव, **क्षणेनैव** निमेषमात्रेणेव,

मानगतीनभिषेकविधिना पट्टबन्धेनान्यैश्च निर्वृतिकरै राज्यदानादिभिर्मधुरोपचारैः पुनस्तामेव प्राक्तनीं प्रकृतिमानयम् [ ऌ ]। आत्मीकृतासन्नसामन्तचक्रश्च क्रमेण निरन्तरक्रमुकवनानि, प्रतिनगरमुपलक्ष्यमाणानेकभूमिकप्रभूतप्रासादानि, स्थानस्थानदृश्यमाननानामणिसुवर्णरजताकराणि, तत इतः पुञ्जितमहाप्रमाणशुक्तिकूटप्रकटितमौक्तिकप्राचुर्याणि, चन्दनविटपवृतिपरिक्षेपरक्षितक्षेत्रवलयानि, संपतत्समुद्रचरमहापक्षिरक्षणाक्षणिकवनपालपालितारामबालवृक्षाणि, बन्धकीजनावन्ध्यग्रामतरङ्गिणीतीरतमालतरुनिकुञ्जानि, देशान्तरापतदनेकसांयात्रिकप्रवेशनिरवकाशपर्यन्तानि, दुर्गतगृहेष्वपि प्राप्यनरपतिभूषणोचितानन्तरत्नानि रेणुगणनयोत्सृज्य-

---

**टिप्पनकम्**—ऊष्मा-दर्प उष्णत्व च। **प्रसन्नमुखरागान्** एकत्र गताप्रभागरक्तत्वान्, अन्यत्र प्रसादवद्वक्त्रविकारान्। **विगलितोन्नतीन्** गतोदयाश्च [ गतोदयान् विगलितवृद्धींश्च ]। **अविद्यमानगतीन्** एकत्र अविद्यमानपूयप्रवाहान्, अन्यत्र अविद्यमानप्रचारान्। **अल्पैश्च निर्वृतिकरै राज्यदानादिभिर्मधुरोपायैः** एकत्र घृतादिवितरणै., अन्यत्र राज्यादिप्रदानै. [ ऌ ]। क्रमुक-पूगीफलम्। बन्धकी-स्वैरिणी [ ऌ ]।

---

मुक्तदर्पज्वरान्, पक्षे त्यक्ततापान्, पुन **प्रकटितप्रसन्नमुखरागान्** प्रसन्नतावन्मुखविकारान् पक्षे प्रकर्षेण गताप्रभागरक्तत्वान्, पुन **विगलितोन्नतीन्** निवृत्ताभ्युदयान्, पक्षे निवृत्तवृद्धीन्, पुन **अविद्यमानगतीन्** अविद्यमानजीवनोपायान् अविद्यमानप्रचारान् वा, पक्षेऽविद्यमानपूयप्रवाहान्, तानिति शेष, **अभिषेकविधिना** स्नपनविधिना, पक्षे प्रक्षालनविधिना, **पट्टबन्धेन** पट्टे-राजसिंहासने, बन्धेन-निवेशनेन, पक्षे व्रणोपरि वस्त्रवेष्टनेन, **च** पुन, **अन्यैः** तदतिरिक्तै, **राज्यदानादिभिः** राज्यार्पणप्रभृतिभि, पक्षे **आज्यदानादिभिः** घृतदानादिभि, **निर्वृतिकरैः** सुखजनकै, **मधुरोपचारैः** प्रियचिकित्साभि, पक्षे मनोज्ञव्यवहारै, तामेव, **प्राक्तनीं** पुरातनीम्, **प्रकृतिं** राष्ट्र पक्षे स्वभावं स्वस्थतामित्यर्थ, **आनयं** प्रापयम् [ ऌ ]। **च** पुन, **आत्मीकृतासन्नसामन्तचक्रः** आत्मीकृतम्-आत्मतामापादितम्, स्वायत्तीकृतमित्यर्थ, आसन्नाना-सन्निहितानां, सामन्ताना-लघुनृपाणां, चक्र-मण्डल येन तादृश सन्, **द्वीपान्तराणि** अन्यद्वीपान्, **प्रसाधयन्** परिभ्रमणेन अलङ्कुर्वन्, यद्वा वशीकुर्वन्नित्यर्थ, **सुवेलनामानं** तत्सञ्ज्ञकम्, **अचलराजं** पर्वतराजम्, **अव्रजम्** अगच्छम्, इत्यग्रेणान्वेति। कीदृशानि द्वीपान्तराणि? **निरन्तरक्रमुकवनानि** निरन्तराणि-निबिडानि, क्रमुकवनानि-पूगीफलकाननानि येषु तादृशानि, पुन **प्रतिनगरं** नगरे नगरे, **उपलक्ष्यमाणानेकभूमिकप्रासादानि** उपलक्ष्यमाणा-दृश्यमाना, अनेकभूमिका-अनेकखण्डका, प्रभूता-प्रचुरा, प्रासादा-हर्म्याणि येषु तादृशानि, पुन **स्थानस्थानदृश्यमाननानामणिसुवर्णरजताकराणि** स्थानस्थानेषु-तत्तत्स्थानेषु, दृश्यमाना नानामणीना-हीरकमौक्तिकादिमणीनां, सुवर्णानां रजतानां च, आकरा-खनयो येषु तादृशानि, पुन **इतस्ततः** अत्र तत्र, **पुञ्जितमहाप्रमाणशुक्तिकूटप्रकटितमौक्तिकप्राचुर्याणि** पुञ्जिताना-सहतानां, महाप्रमाणानाम्-अधिकप्रमाणकाना, शुक्तीना, कूटेन-राशिना, प्रकटितम्-आविष्कृत, मौक्तिकानां-मुक्तामणीनां, प्राचुर्यं-बाहुल्य येषु तादृशानि, पुन **चन्दनविटपवृतिपरिक्षेपरक्षितक्षेत्रवलयानि** चन्दनविटपवृत्या-चन्दनशाखानिर्मितया, वृत्या-प्राकारेण, य परिक्षेप-परिवेष्टन, तेन रक्षितं क्षेत्रवलयं-केदारमण्डल येषु तादृशानि, पुन **संपतत्समुद्रचरमहापक्षिरक्षणाक्षणिकवनपालरक्षितारामबालवृक्षाणि** सपतद्भ्यः आपतद्भ्य, समुद्रचरेभ्य-समुद्रसञ्चारिभ्य, महापक्षिभ्य-पक्षिराजेभ्य, रक्षणे-पुष्पफलादिसरक्षणे, अक्षणिका-स्थायिन, व्यग्रा वा, ये वनपाला-उद्यानपाला, तै रक्षिता-पालिता, आरामस्य-उद्यानस्य, बालवृक्षा-नववृक्षा येषु तादृशानि, पुन **बन्धकीजनावन्ध्यग्रामतरङ्गिणीतीरतमालतरुनिकुञ्जानि** बन्धकीजनै-कुलटाजनै, अवन्ध्या-सहिता, ग्रामतरङ्गिणीना-ग्रामनदीनाम्, **तीरेषु** तीरवर्तिन, तमालतरूणा-तमालवृक्षाणां, निकुञ्जा-लतामण्डपा येषु तादृशानि, पुन **देशान्तरापतदनेकसांयात्रिकप्रवेशनिरवकाशपर्यन्तानि** देशान्तरेभ्य-अन्यदेशेभ्य, आपतताम्-आगच्छताम्, अनेकेषा, सायात्रिकाना-पोतवणिजां, प्रवेशेन, निरवकाशा-अवकाशशून्या, परिपूरिता इत्यर्थ, पर्यन्ता-प्रान्तभूमयो येषु तादृशानि, पुन **दुर्गतगृहेष्वपि** दरिद्रगृहेष्वपि, **प्राप्यनरपतिभूषणोचितानन्तरत्नानि** प्राप्याणि-लभ्यानि, नरपतिभूषणोचितानि-राजाभरणयोग्यानि, महार्हाणीत्यर्थः, अनन्तानि-असंख्येयानि रत्नानि येषु तादृशानि, पुन **रेणुगणनया**

कल्पनैरनल्पताडपत्रताडङ्कपूरितैकैककर्णच्छिद्रैरन्यायप्रियतया च शस्त्रिका अप्यङ्गीकृतातिविकटकलहाः कटीभागेनाकलयद्भिः [ औ ] काललोहकटकान्यपि नितान्तमुखरनिष्ठुराणि प्रकोष्ठगतानि धारयद्भिर्दग्धस्थाणुभिरिवोपलब्धचैतन्यैरञ्जनगिरिशिलास्तम्भैरिवोपजातहस्तपादैः पन्नगैरिव महारत्ननिधानानि निषादाधिपैः संरक्षितानि, प्रसाधयन् द्वीपान्तराणि [ अं ] दूरादेव दृश्यमानश्यामवनलेखमम्बरोल्लेखिना शिखरसंघातेन लङ्घिताखिलाशामुखमुदय स्तशैलमेखलामूलमिलितपूर्वपाश्चात्यभागमसकृद्दर्शितमुग्धमौक्तिकोल्लासह्रासया प्रारब्धपरिहासयेव लवणजलनिधिवेलया वीचिहस्तापवर्जितैः पयोभिरनवरतमाहन्यमानं सुवेलनामानमचलराजमव्रजम् [ अः ] ।

तस्य च शिखरिणः स्वभावरमणीयेषु, सर्वतः स्तवकिततिलकचम्पकाशोकबकुलेषु, कलहायमान-

---

**टिप्पनकम्—शब्दशास्त्रकारैरिव विहितह्रस्वदीर्घव्यञ्जनकल्पनैः** एकत्र कृतह्रस्वदीर्घव्यञ्जनसंज्ञाविधानैः, अन्यत्र कृतलघुदीर्घकूर्चकर्तनैः । **शस्त्रिका अप्यङ्गीकृतविकटकलहा** एकत्र कलहः—युद्धम्, [ अन्यत्र ] फलकम् [ औ ] । निषादाधिपा —शबरपतय [ अ ] ।

---

**संक्रान्तकायकालकान्तिभिः** संक्रान्ता —समापतिता', कायकालकान्तय —देहकृष्णद्युतयो येषु तादृशै , पुन **शब्दशास्त्रकारैरिव** व्याकरणकारैरिव, **विहितह्रस्वदीर्घव्यञ्जनकल्पनै** विहिता-कृता, ह्रस्वदीर्घाणां—लघुबृहद्रूपाणां, व्यञ्जनाना—विशिष्टाञ्जनलेखाना श्मश्रूणा वा, कल्पना—रचना कर्त्तनं वा यैस्तादृशै , पक्षे ह्रस्वानां—ह्रस्वसञ्ज्ञकानां, दीर्घाणां—दीर्घसंज्ञकानां स्वराणां, व्यञ्जनानां—हला च कल्पना सकेतो यैस्तादृशै., पुन **अनल्पताडपत्रताडङ्कपूरितैकैककर्णच्छिद्रैः** अनल्पं—दीर्घं, यत् ताडपत्र—तालपर्ण, तद्रूपै , ताडङ्के —तदाख्यकर्णाभरणै , पूरितम् —एकैकस्य कर्णस्य , छिद्रं—विवरं यैस्तादृशै , पुन **अन्यायप्रियतया** अन्यायरसिकतया, **शस्त्रिका अपि** छुरिका अपि, **अङ्गीकृतातिविकटकलहाः** अङ्गीकृता—स्वीकृता , अतिविकटा —अतिविकराला , पक्षे अतिविस्तृता , कलहा —युद्धानि, पक्षे फलका याभिस्ता., **कटीभागेन** कटीप्रदेशेन, **आकलयद्भिः** धारयद्भि , [ औ ], पुन **प्रकोष्ठकगतानि** मणिबन्धस्थितानि, **काललोहकटकान्यपि** कृष्णलोहमयानि वलयान्यपि, **नितान्तमुखरनिष्ठुराणि** अत्यन्तवाचालकठोराणि, धारयद्भि , पुन **उपलब्धचैतन्यैः** प्राप्तचैतन्यै , **दग्धस्थाणुभिरिव** दग्धनिष्फलशाखवृक्षैरिवेत्युत्प्रेक्षा, पुन **उपजातहस्तपादैः** उत्पन्नकरचरणै , **अञ्जनगिरिशिलास्तम्भैरिव** श्यामलाचलशिलारूपै स्तम्भैरिवेति चोत्प्रेक्षा [ अ ], कीदृशमचलराजम् ? **दूरादेव** दूरदेशादेव, **दृश्यमानश्यामवनलेखं** दृश्यमाना—उपलक्ष्यमाणा, श्यामवनलेखा—श्यामवनराजिर्यस्मिंस्तादृशम्, पुन **अम्बरोल्लेखिना** गगनचुम्बिना, **शिखरसंघातेन** शिखरसमूहेन, **लङ्घिताखिलाशामुखं** लङ्घिताखिलदिङ्मुखम्, पुन **उदयास्तशैलमेखलामूलमिलितपूर्वपाश्चात्यभागम्** उदया ऽस्तशैलयो —उदयाचला-ऽस्ताचलयो , मेखलामूलेन—नितम्बमूलेन, मिलितौ—सस्पृष्टौ, पूर्व-पाश्चात्यभागौ यस्य तादृशम्, पुन **असकृद्दर्शितमुग्धमौक्तिकोल्लासह्रासया** असकृत्–पुन पुन , दर्शितौ—प्रकटितौ , मुग्धमौक्तिकानां—मनोज्ञमुक्तामणीनाम् , उल्लासह्रासौ—वृद्धिहानी, यया तया, अत एव **प्रारब्धपरिहासयेव** प्रवर्तितपरिहासयेवेत्युत्प्रेक्षा, **लवणजलनिधिवेलया** लवणसमुद्रनीरविकाररूपया, **वीचिहस्तापवर्जितैः** तरङ्गरूपहस्त गृहीतै , **पयोभिः** जलै , **अनवरतं** निरन्तरम् , **आहन्यमानं** ताड्यमानम् [ अ. ] ।

**च** पुन , **तस्य** सुवेलसञ्ज्ञकस्य, **शिखरिणः** पर्वतस्य, **तटवनेषु** पर्यन्तवनेषु, **कण्टकितानेकसंगरव्यतिकरखिन्नवाहिनीकः** कण्टकिता —रोमाञ्चान्विता क्षुद्रारिसहिता वा, अनेके ये सगरा —सग्रामा , तेषा व्यतिकरेण—सम्पर्केण, खिन्ना—श्रान्ता, वाहिनी—सेना यस्य तादृश , **कुतूहलात्** कौतुकवशात्, **इतस्ततः** तत्रात्र, **विचरन्** परिभ्रमन्, कीदृशेषु तेषु ? **स्वभावरमणीयेषु** स्वभावत सुन्दरेषु, **सर्वतः** समन्तत , **स्तवकिततिलकचम्पकाशोकबकुलेषु** स्तवकिता —गुच्छान्विता , तिलक-चम्पका-ऽशोक बकुला —तत्तत्सञ्ज्ञककुसुमविशेषा येषु, यद्वा पुष्पगुच्छान्विता कलिकाकलापान्विता । तत्तत्पुष्पवृक्षा येषु तादृशेषु, पुन **कलहायमानमत्तपिककुलालापवाचालविकचचूतमालेषु** कलहायमानानां—

'इह निर्झरेषु दृष्टलङ्कानिर्णीतदशकण्ठकण्ठच्छेदनिर्वृतेन दशरथात्मजेन स्नात्वा जटायुषे निर्वर्तितः प्रथमो निवापाञ्जलिः [ घ ], इह प्रहर्षास्फोटनसंक्रान्तसरसगैरिकपङ्कपञ्चाङ्गुलैर्दृश्यमानमूर्तिमत्प्रतापानलशिखैरिव भुजशिखरैः खर्वयन्तस्त्रिकूटगिरिकूटानि घटितसमग्रसेतुबन्धा बन्धुर ववल्गुरङ्गदपुरोगाः प्लवगपतयः [ ङ ], इयमसमञ्जसक्षिप्तलङ्काप्राकारकाञ्चनशिलाशबला शिबिरसन्निवेशभूः सुग्रीवस्य, एषा परस्परविलक्षणलक्ष्यमाणराक्षसकपिकरङ्कावयवा रामरावणयोराजिभूमिः [ च ], इह सकलदिग्मुखान्तरालव्यापिघोषस्य त्रिष्वपि भुवनेषु सर्पतः पौलस्त्ययशसो रथस्येव प्रवर्तकः प्रयत्नवद्भिः क्षपाचरैरनेकधाकृतरक्षोऽपि प्रसह्य मारुतिना भुजबलेन भग्नोऽक्षः [ छ ], इह कन्दरायामरातिदारितप्रधानवीरविद्राणविजयाध्यवसायेन सायंचरचक्रवर्तिना तैस्तैरसुकुमारैरुपक्रमैरकाल एव त्याजितो निद्रां महानिद्रायै सहोदरः [ ज ], इह

---

**टिप्पनकम्**—अङ्गद –वालिपुत्र [ ङ ]। **सकलदिङ्मुखान्तरालव्यापिघोषस्य पौलस्त्ययशसो रथस्येव भग्नोऽक्षः** एकत्र घोष –घोषण प्रसरणम्, अन्यत्र चीत्कार, अक्ष –रावणसुतो धूश्च, मारुति–हनुमान् [ छ ]। महानिद्रा–मरणम् [ ज ]।

---

**क्षामदशकण्ठातिवाहितोत्कण्ठेषु** जानक्या –सीताया, वैमुख्येन–प्रतिकूलतया, यद्वु ख तेन क्षामेण–कृशेन, दशकण्ठेन–रावणेन, अतिवाहिता–व्यतिक्रान्ता, उत्कण्ठा–तदानुकूल्योत्सुकता येषु तादृशेषु [ ग ]। **इह** अस्मिन् स्थाने, **निर्झरेषु** प्रवाहेषु, **दृष्टलङ्कानिर्णीतदशकण्ठकण्ठच्छेदनिर्वृतेन** दृष्टाया लङ्काया निर्णीतेन, दशकण्ठकण्ठच्छेदेन–दशकण्ठस्य–रावणस्य, कण्ठच्छेदेन–कण्ठकर्तनेन, निर्वृतेन–सुखितेन, **दशरथात्मजेन** रामेण, **स्नात्वा** स्नान कृत्वा, **जटायुषे** तत्सज्ञकाय गृध्रप्रवराय, प्रथम **निवापाञ्जलिः** श्रद्धाञ्जलि, **निर्वर्तितः** निष्पादित [ घ ]। **इह** अस्मिन् स्थाने, **अङ्गदपुरोगाः** अङ्गदनामकवालिपुत्रादय, **प्लवगपतयः** कपिश्रेष्ठा, **घटितसमग्रसेतुबन्धाः** घटित –सम्पादित, समग्र, सेतो –पुलिनस्य, बन्ध –प्रबन्धो यैस्तादृशा, **बन्धुरम्** अत्युन्नतानतं यथा स्यात् तथा, **ववल्गुः** धारागत्या जग्मु, कीदृशा ? **भुजशिखरैः** उन्नतभुजाग्रै, **त्रिकूटगिरिकूटानि** त्रिकूटगिरे –त्रीणि कूटानि शृङ्गाणि यस्य इत्यन्वर्थसज्ञकपर्वतविशेषस्य, कूटानि–शिखराणि, **खर्वयन्तः** ह्रस्वयन्त, कीदृशै ? **प्रहर्षास्फोटनसंक्रान्तसरसगैरिकपङ्कपञ्चाङ्गुलैः** प्रहर्षेण–अतिहर्षेण, यत् आस्फोटनम्–आस्फालन, तेन सक्रान्त, सरसस्य–आर्द्रस्य, गैरिकस्य–रक्तधातुविशेषस्य, पङ्को यस्मिन् तादृशं, पञ्चाङ्गुल–पञ्चानामङ्गुलीनां समाहारो येषु तादृशै, अत एव **दृश्यमानमूर्तिमत्प्रतापानलशिखैरिव** दृश्यमाना–प्रतीयमाना, प्रतिभासमानेत्यर्थ, मूर्तिमत –आकृतिमत, प्रतापानलस्य–प्रतापाग्ने, शिखा–ज्वाला येषु तादृशैरिवेत्युत्प्रेक्षा [ ङ ]। **असमञ्जसक्षिप्तलङ्काप्राकारकाञ्चनशिलाशबला** असमञ्जस–क्रोधावेशवशेन असङ्गत यथा स्यात् तथा, क्षिप्ताभि, लङ्काप्राकारभूताभि, काञ्चनशिलाभि –सुवर्णशिलाभि, शबला–चित्रिता, **सुग्रीवस्य** तदाख्यकपिराजस्य, इय **शिबिरसन्निवेशभूः** सैन्यावाससन्निवेशस्थानम्। **परस्परविलक्षणलक्ष्यमाणराक्षसकपिकरङ्कावयवा** परस्परविलक्षणं–परस्परविरूप यथा स्यात् तथा, लक्ष्यमाणा –प्रतीयमाना, राक्षसाना कपीना वानराणा च, करङ्का –अस्थिमात्रावशिष्टशवा, तन्मस्तकानि वा, एवावयवा यस्यास्तादृशी, एषा रामरावणयो, **आजिभूमिः** रणक्षेत्रम् [ च ]। **सकलदिङ्मुखान्तरालव्यापिघोषस्य** सकलदिङ्मुखान्तरालव्यापी–समस्तदिगन्तमध्यव्यापक, घोष –संशब्दन प्रसरण च यस्य तादृशस्य, पुन **त्रिष्वपि** स्वर्ग-मर्त्य-पातालरूपेष्वपि, **भुवनेषु** लोकेषु, **सर्पतः** प्रसिध्यत, **पौलस्त्ययशसः** पौलस्त्य –रावण, तत्कीर्तेः, रथस्येव, **प्रवर्तकः** प्रचारक, **अक्ष**· तदाख्यो रावणकुमार, पक्षे रथाङ्गधू, **प्रयत्नवद्भिः** प्रयत्नशालिभि, **क्षपाचरैः** निशाचरै, **अनेकधाकृतरक्षोऽपि** अनेकवारं रक्षितोऽपि, **मारुतिना** हनुमता, **भुजबलेन** बाहुविक्रमेण, **प्रसह्य** बलात्कारेण, **इह** अस्मिन् स्थाने, **भग्नः** नाशित [ छ ]। **इह** अस्या, **कन्दरायां** गुहायाम्, **अरातिदारितप्रधानवीरविद्राणविजयाध्यवसायेन** अरातिभि –शत्रुभि, दारितै –खण्डितै, मारितैरिति यावत्, प्रधानवीरै –प्रधानभटै, विद्राण –भग्न, विजयाध्यवसाय –विजयोद्योगो यस्य तादृशेन, **सायञ्चरचक्रवर्तिना** राक्षससम्राजा, **सहोदरः** स्वानुज, कुम्भकर्ण इति यावत्, **असुकुमारैः** कठोरै, **तैस्तैः** अनेकविधै, **उपक्रमैः** उपद्रवै, **अकाल एव** असमय एव,

इतो निवर्तितानुव्रजत्सुरव्रजेन निजगोत्रराजधानीमयोध्यां प्रति यियासुना दशास्यदमनेन सविलासमध्यासितमहार्हमणिवातायनः कौतुकोत्ताननयनजानकीविलोकितगतिरनुकूलपवनप्रसारितैः पताकाबाहुभिः परिरब्धुमिव चिरोत्सृष्टदृष्टां कुबेरपुरमम्बरपथेन प्रधावितः पुष्पकनामा विमानराजः [ ढ ]; इत्यादिपिशुनितानेकरामायणमहापुरुषवृत्तान्तैरन्तिकस्थितैस्तत्रत्यनरपतिभिरुत्खातरोपितैरनुपद प्रदर्शितान् लङ्कापुरीपरिसरोद्देशान् सहर्षमीक्षमाणः कतिचिद्दिनान्यतिष्ठम् [ ण ] ।

एकदा तु तत्रस्थशिबिर एव प्रेपितागतैः प्रणिधिपुरुषैः प्रवर्तितः सज्जीकृत्य प्राज्यवस्त्राभरणदानावर्जितसकलनाविका नाव आत्तकतिपयदिवसपाथेयैः प्रधानपार्थिवसूनुभिरन्यैश्च जन्यशतनिर्व्यूढपौरुषैः पदातिपुरुषैरनुगम्यमानस्तत्क्षणमेवाविक्षेपेणोदचलम् [ त ] । अविलम्बितगतिश्च पश्चिमेन सेतोर्गत्वातिदूरमूरीकृतचौर्यवृत्तेरतिविषमदुर्गबलगर्वितस्य पर्वतकनाम्नः किरातराजस्य राजधान्यामवस्कन्दमप्रतर्कितमपातयम्, अदय-

---

**टिप्पनकम्—कुबेरपुरम्** अलकाम् [ ढ ] । जन्यं-संग्राम । विक्षेप -धाटक [ त ] । **अवस्कन्दं** धाटकम् [ थ ] ।

---

**इव** धूमरेखेवेत्युत्प्रेक्षा [ ड ] । **इतः** अस्मात् स्थानात्, **निवर्तितानुव्रजत्सुरव्रजेन** निवर्तित -परावर्तित , अनुव्रजन्-अनुगच्छन्, सुरव्रज -देवगणो येन तादृशेन, **निजगोत्रराजधानीं** स्ववंशराजधानीरूपाम्, अयोध्या, **प्रतियियासुना** प्रत्यावर्तितुकामेन, यद्वा **अयोध्यां प्रति** अयोध्याभिमुखं, **यियासुना** जिगमिषुणा, **दशास्यदमनेन** रावणगर्वहारिणा रामचन्द्रेण, **सविलासं** विलाससहितम्, **अध्यासितमहार्हमणिवातायनं** अध्यासितम्-अधिष्ठितं, महार्हमणीनाम्-अत्युत्तममणिमय, वातायन-गवाक्षो यस्य तादृश , **पुष्पकनामा** तन्नामक , **विमानराजः** उत्तममाकाशयानम्, **अम्बरपथेन** गगनमार्गेण, **प्रधावितः** शीघ्र यात , कीदृश ? **कौतुकोत्ताननयनजानकीविलोकितगतिः** कौतुकेन-दिदृक्षारसेन, उत्तानम्-उन्नतं, नयन यस्यास्तादृश्या जानक्या विलोकिता-दृष्टा, गति -गमन यस्य तादृश , कि कर्तुमिव ? **चिरोत्सृष्टदृष्टां** चिरात्-दीर्घकालात्, उत्सृष्टं-त्यक्तं, दृष्टं-दर्शनं यस्यास्तादृशीं, यद्वा चिरात् त्यक्ता विलोकिता च, **कुबेरपुरीं** कुबेरस्वामिकाम् अलकापुरीम्, **अनुकूलपवनप्रसारितैः** अभिमुखवाहिवायुविस्तारितै , **पताकाबाहुभिः** पताकात्मकभुजै , **परिरब्धुमिव** आलिङ्गितुमिव [ ढ ] । **इत्यादिपिशुनितानेकरामायणमहापुरुषवृत्तान्तैः** इत्यादय -एवंप्रभृतय , पिशुनिता -सूचिता , अनेके रामायणसम्बन्धिन , महापुरुषस्य-मर्यादापुरुषस्य भगवतो रामचन्द्रस्य, वृत्तान्ता -वार्ता यैस्तादृशै , **उत्खातरोपितैः** पूर्वम् उत्खातै -उत्पाटितै , स्वपदात् प्रच्यावितैरित्यर्थ , पश्चात् पुन रोपितै -स्वपदे प्रतिष्ठापितै , **अन्तिकस्थितैः** समीपस्थितै , नरपतिभि , **अनुपदं** प्रतिस्थान, प्रदर्शितान्, **लङ्कापरिसरोद्देशान्** लङ्कापर्यन्तस्थोर्ध्वदेशान्, **सहर्ष** सानन्दम्, **ईक्षमाणः** पश्यन्, **कतिचित्** कतिपयानि, दिनानि, **अतिष्ठं** स्थितवानहम् [ ण ] । **एकदा तु** एकस्मिन् दिने तु, **तत्रस्थशिबिर एव** तत्स्थानस्थसैनिकावास एव, **प्रेषितागतैः** पूर्वं प्रेषितै पश्चादागतै , **प्रणिधिपुरुषैः** गूढचरजनै , **प्रवर्तितः** कारितप्रवृत्तिक , अहमिति शेष , **प्राज्यवस्त्राभरणदानावर्जितसकलनाविका** प्राज्यवस्त्राभरणाना-प्रचुरवस्त्रालङ्करणाना, दानेन-वितरणेन, आवर्जिता -आनमिता , परितोषिता इति यावत्, सकला -समस्ता , नाविका -कर्णधारा यासां तादृशी , नाव , **सज्जीकृत्य** सनद्धा समृता निभृता वा कृत्वा, **आत्तकतिपयदिवसपाथेयैः** आत्त-गृहीत, कतिपयदिवसपाथेय-कतिपयदिनमार्गभोज्यवस्तु यैस्तादृशै , **प्रधानपार्थिवसूनुभिः** प्रधानराजकुमारै , **च** पुन , अन्यै , **जन्यशतनिर्व्यूढपौरुषैः** जन्यशते-सग्रामशते निर्व्यूढम्-अपरिसमाप्तं, पौरुष-पराक्रमो येषा तादृशै , **पदातिपुरुषैः** पादगामिजनै , **अनुगम्यमानः** अनुस्रियमाण , **तत्क्षणमेव** तत्कालमेव, **अविक्षेपेण** सङ्घीभावेन, घाटीरूपेणेत्यर्थ , **उदचलम्** उच्चलितवान्, उत्थाय चलितवानित्यर्थ [ त ] । **च** पुन , **अविलम्बितगतिः** अविलम्बिता-सत्वरा, गति -गमन यस्य तादृश सन्, सेतो **पश्चिमेन** पश्चाद्भागेन, **अतिदूर** बहुदूरं, गत्वा, **ऊरीकृतचौर्यवृत्तेः** ऊरीकृता-स्वीकृता, चौर्यरूपा वृत्ति -जीविका येन तादृशस्य, **अतिविषमदुर्गबलगर्वितस्य** अतिविषम-परमदुर्धर्षं, यद् दुर्ग-पर्वतादिक रिपुप्रवेशप्रतिरोधक दुर्गम स्थान, तदात्मक यद् बलं-सामर्थ्यम्, यद्वा बल-सैन्यं च, ताभ्या गर्वितस्य-मदान्वितस्य, **पर्वतकनाम्नः** तत्सञ्ज-

रमणीयतातिशयदर्शनप्रीतमनसा सुचिरमवलोक्य नायमुद्रागतुङ्गद्युतिपिशङ्गिताशामुखो वज्रमणिरिव कृत्रिमैर्मणिभिः पाषाणमृन्मयैरमीभिरचलैः सहैकत्र समवायमर्हतीति विमृश्य सेतोः पृथक् पाथोनिधौ निहितः, पयोधिनापि पुत्रबहुमानादात्मनः क्रीडागिरित्वेनोपकल्पितः [ फ ], तदत्र विपुलावकाशपरिसरे सुप्रापशीतलस्वादुनिर्झराम्भसि स्वच्छन्दलभ्यचन्दनादिपादपैधसि निरन्तरफलितनालिकेलकदलीपनसपिण्डखर्जूरप्रायतरुषण्डे तरङ्गिणीतीरसुलभदेवतार्चनोचितविशालमणिशिले युक्तमावासयितुम् [ ब ]; यतो दूरमायाता वरूथिनी, व्यथितो निशीथिनीजनितजाड्योद्रेकेण समुद्रमरुता सर्व एव सुखोचितो जनः, श्रमविकलबाहवो न वाहयन्ति सत्वरमरित्राणि यानपात्रेषु पौतिकाः, न शक्नुवन्ति निद्रावशीकृताः कर्तुमवष्टम्भं कूपस्तम्भकेषु कर्णधाराः, समीरोऽपि संप्रति प्रतीपगतिः प्रवाति, नाभिधावन्ति शिबिरगामिनं मार्गमर्गलितानीव प्रेर्यमाणान्यपि पुरो निर्यामकैः प्रवहणानि, नास्ति कश्चिन्नेदीयानितश्चलितानामाश्रयो-

---

**टिप्पनकम्**—उपनीतश्च ढौकितश्च, वानरैरिति शेष [ फ ]। एध –काष्ठम् [ ब ]। अरित्रं–यानपात्रवहित्रम्। **नेदीयान्** प्रत्यासन्नतर [ भ ]।

---

करतल येन तादृशस्य, सेनापते, **नलस्य** तत्सञ्ज्ञकमर्कटस्य, **उपनीतः** उप–समीप, नीत –उपस्थापित । **रमणीयतातिशयदर्शनप्रीतमनसा** रमणीयतातिशयस्य–तदीयसौन्दर्योत्कर्षस्य, दर्शनेन प्रीतं–प्रसन्न मनो यस्य तादृशेन, **तेनापि** नलेनापि, **सुचिरम्** अतिदीर्घकालम्, **अवलोक्य** दृष्ट्वा, **नायमुद्रागतुङ्गद्युतिपिशङ्गिताशामुखः** उद्रागाभि –उत्कटवर्णाभि, तुङ्गद्युतिभि –उच्चै प्रसृतकान्तिभि, पिशङ्गितानि–पीतिमानमापादितानि, आशामुखानि–दिङ्मुखानि येन तादृश, **अयं** सुमेरुसानु, **वज्रमणिः** हीरकमणि, **कृत्रिमैः** कल्पितै, मणिभि, **पाषाणमृन्मयैः** प्रस्तरमृत्तिकामयै, **अमीभिः** एभि, **अचलैः** पर्वतै सह, **एकत्र** एकस्मिन् स्थाने, **समवायं** सम्मेलन, न, **अर्हति** तद्योग्यो भवति, **इति** इत्थ, **विमृश्य** विचार्य, सेतो, **पृथक्** बहि, **पाथोनिधौ** समुद्रे, **निहितः** स्थापितः। **पयोधिनापि** समुद्रेणापि, **पुत्रबहुमानात्** पुत्रसदृशस्नेहातिशयात्, **आत्मन** स्वस्य, **क्रीडागिरित्वेन** क्रीडोपयोगिपर्वतत्वेन, **उपकल्पितः** स्वीकृत [ फ ]। **तत्** तस्माद्धेतो, **अत्र** अस्मिन्, **विपुलावकाशपरिसरे** विपुल –विस्तृत, अवकाश –स्थितियोग्यतासम्पादकप्रदेशो यत्र तादृशे, परिसरे–पर्वतसमीपप्रदेशे, **आवासयितुं** सैन्य निवासयितुं, **युक्तम्** उचितम्, कीदृशे? **सुप्रापशीतलस्वादुनिर्झराम्भसि** सुप्रापम्–अनायासलभ्य, शीतल स्वादु–मधुरं च, निर्झरस्य–पर्वतान्नि सृतजलप्रवाहस्य, अम्भ –जल यस्मिंस्तादृशे, पुन **स्वच्छन्दलभ्यचन्दनादिपादपैधसि** स्वच्छन्दं–स्वाधीन यथा स्यात् तथा, लभ्यानि–प्राप्याणि, चन्दनादिपादपाना–चन्दनादिवृक्षसम्बन्धीनि, एधांसि–काष्ठानि यस्मिंस्तादृशे, पुन **निरन्तरफलितनालिकेलकदली पनस-पिण्ड खर्जूरप्रायतरुषण्डे** निरन्तरफलितैः–अनवरतफलितै, नालिकेलादिभि, प्राया –प्रचुरा, तरुषण्डा –तरुवनानि यस्मिन् तादृशे, पुन **तरङ्गिणीतीरसुलभदेवतार्चनोचितविशालमणिशिले** तरङ्गिण्या –नद्या, तीरे सुलभा–सुकरा, देवतार्चनोचिता–देवपूजनयोग्या, विशाला, मणिशिला–मणिमयफलक यस्मिंस्तादृशे [ ब ]। **यतः** यस्माद्धेतो, दूरम्, **आयाता** आगता, **वरूथिनी** सेना, **सर्व एव** सकलोऽपि, **सुखोचितः** सुखकराहारविहाराभ्यस्त, **जन**, लोक, **निशीथिनीजनितजाड्योद्रेकेण** निशीथिन्या–रात्र्या, जनित –उत्पादित, जाड्योद्रेक –शैत्यातिशयो यस्मिंस्तादृशेन, **समुद्रमारुता** समुद्रवायुना, **व्यथितः** पीडित, अस्तीति शेष । **श्रमविकलबाहवः** श्रमेण विकला –विह्वला, बाहवो–भुजा येषां तादृशा, **पौतिका**, पोतवाहका, **यानपात्रेषु** पोतेषु, **अरित्राणि** जलविक्षेपककाष्ठानि, **सत्वरं** शीघ्र, न **वाहयन्ति** सञ्चारयन्ति। **निद्रावशीकृता**, निद्रया अधीनीकृता, **कर्णधारा**, नाविका, **कूपस्तम्भकेषु** गुणवृक्षदण्डेषु, **अवष्टम्भम्** अवरोध, कर्तुं न, **शक्नुवन्ति** पारयन्ति । **सम्प्रति** इदानीं, **समीरोऽपि** वायुरपि, **प्रतीपगति**, प्रतिकूलगति, **प्रवाति** वहति । **निर्यामकैः** वाहकै, **पुरः** अग्रे, **प्रेर्यमाणान्यपि** प्रचार्यमाणान्यपि, **प्रवहणानि**

रमणीयतातिशयदर्शनप्रीतमनसा सुचिरमवलोक्य नायमुद्रागतुङ्गद्युतिपिशङ्गिताशामुखो वज्रमणिरिव कृत्रिमैर्मणिभिः पाषाणमृन्मयैरमीभिरचलैः सहैकत्र समवायमर्हतीति विमृश्य सेतोः पृथक् पाथोनिधौ निहितः, पयोधिनापि पुत्रबहुमानादात्मनः क्रीडागिरित्वेनोपकल्पितः [ फ ], तदत्र विपुलावकाशपरिसरे सुप्रापशीतलस्वादुनिर्झराम्भसि स्वच्छन्दलभ्यचन्दनादिपादपैधसि निरन्तरफलितनालिकेलकदलीपनसपिण्डखर्जूरप्रायतरुषण्डे तरङ्गिणीतीरसुलभदेवतार्चनोचितविशालमणिशिले युक्तमावासयितुम् [ ब ]; यतो दूरमायाता वरूथिनी, व्यथितो निशीथिनीजनितजाड्योद्रेकेण समुद्रमरुता सर्व एव सुखोचितो जनः, श्रमविकलबाहवो न वाहयन्ति सत्वरमरित्राणि यानपात्रेषु पौतिकाः, न शक्नुवन्ति निद्रावशीकृताः कर्तुमवष्टम्भं कूपस्तम्भकेषु कर्णधाराः, समीरोऽपि संप्रति प्रतीपगतिः प्रवाति, नाभिधावन्ति शिबिरगामिनं मार्गमर्गलितानीव प्रेर्यमाणान्यपि पुरो निर्यामकैः प्रवहणानि, नास्ति कश्चिन्नेदीयानितश्चलितानामाश्रयो-

---

टिप्पनकम्—उपनीतश्च ढौकितश्च, वानैरेरिति शेष [ फ ]। एध –काष्ठम् [ व ]। अरित्रं–यानपात्रवहित्रम्। नेदीयान् प्रत्यासन्नतर [ भ ]।

---

करतलं येन तादृशस्य, सेनापते, **नलस्य** तत्सञ्ज्ञकमर्कटस्य, **उपनीतः** उप–समीप, नीत –उपस्थापित । **रमणीयतातिशयदर्शनप्रीतमनसा** रमणीयतातिशयस्य–तदीयसौन्दर्योत्कर्षस्य, दर्शनेन प्रीतं–प्रसन्न मनो यस्य तादृशेन, **तेनापि** नलेनापि, **सुचिरम्** अतिदीर्घकालम्, **अवलोक्य** दृष्ट्वा, **नायमुद्रागतुङ्गद्युतिपिशङ्गिताशामुखः** उद्रागाभि –उत्कटवर्णाभि, तुङ्गद्युतिभि –उच्चै प्रसृतकान्तिभि, पिशङ्गितानि–पीतिमानमापादितानि, आशामुखानि–दिङ्मुखानि येन तादृश, **अयं** सुमेरुसानु, **वज्रमणिः** हीरकमणि, **कृत्रिमैः** कल्पितै, मणिभि, **पाषाणमृन्मयैः** प्रस्तरमृत्तिकामयै, **अमीभिः** एभि, **अचलैः** पर्वतै सह, **एकत्र** एकस्मिन् स्थाने, **समवायं** सम्मेलन, न, **अर्हति** तद्योग्यो भवति, **इति** इत्थ, **विमृश्य** विचार्य, सेतो, **पृथक्** बहि, **पाथोनिधौ** समुद्रे, **निहितः** स्थापित. । **पयोधिनापि** समुद्रेणापि, **पुत्रबहुमानात्** पुत्रसदृशस्नेहातिशयात्, **आत्मन** स्वस्य, **क्रीडागिरित्वेन** क्रीडोपयोगिपर्वतत्वेन, **उपकल्पितः** स्वीकृत [ फ ]। **तत्** तस्माद्धेतो, **अत्र** अस्मिन्, **विपुलावकाशपरिसरे** विपुल –विस्तृत, अवकाश –स्थितियोग्यतासम्पादकप्रदेशो यत्र तादृशे, परिसरे–पर्वतसमीपप्रदेशे, **आवासयितुं** सैन्य निवासयितुं, **युक्तम्** उचितम्, कीदृशे? **सुप्रापशीतलस्वादुनिर्झराम्भसि** सुप्रापम्–अनायासलभ्य, शीतल स्वादु–मधुर च, निर्झरस्य–पर्वतान्नि सृतजलप्रवाहस्य, अम्भ –जल यस्मिंस्तादृशे, पुन **स्वच्छन्दलभ्यचन्दनादिपादपैधसि** स्वच्छन्द–स्वाधीन यथा स्यात् तथा, लभ्यानि–प्राप्याणि, चन्दनादिपादपाना–चन्दनादिवृक्षसम्बन्धीनि, एधांसि–काष्ठानि यस्मिंस्तादृशे, पुन **निरन्तरफलितनालिकेलकदली पनस-पिण्ड खर्जूरप्रायतरुषण्डे** निरन्तरफलितैः–अनवरतफलितै, नालिकेलादिभि, प्राया –प्रचुरा, तरुषण्डा –तरुवनानि यस्मिन् तादृशे, पुन **तरङ्गिणीतीरसुलभदेवतार्चनोचितविशालमणिशिले** तरङ्गिण्या –नद्या, तीरे सुलभा–सुकरा, देवतार्चनोचिता–देवपूजनयोग्या, विशाला, मणिशिला–मणिमयफलक यस्मिंस्तादृशे [ व ]। **यतः** यस्माद्धेतो, दूरम्, **आयाता** आगता, **वरूथिनी** सेना, **सर्व एव** सकलोऽपि, **सुखोचित**. सुखकराहारविहाराभ्यस्त, **जन**. लोक, **निशीथिनीजनितजाड्योद्रेकेण** निशीथिन्या–रात्र्या, जनित –उत्पादित, जाड्योद्रेक –शैत्यातिशयो यस्मिंस्तादृशेन, **समुद्रमारुता** समुद्रवायुना, **व्यथितः** पीडित, अस्तीति शेष । **श्रमविकलबाहवः** श्रमेण विकला –विह्वला, बाहवो–भुजा येषां तादृशा, **पौतिकाः** पोतवाहका, **यानपात्रेषु** पोतेषु, **अरित्राणि** जलविक्षेपककाष्ठानि, **सत्वर** शीघ्र, न **वाहयन्ति** सञ्चारयन्ति। **निद्रावशीकृता**. निद्रया अधीनीकृता, **कर्णधारा**. नाविका, **कूपस्तम्भकेषु** गुणवृक्षदण्डेषु, **अवष्टम्भम्** अवरोध, कर्तुं न, **शक्नुवन्ति** पारयन्ति । **सम्प्रति** इदानीं, **समीरोऽपि** वायुरपि, **प्रतीपगतिः** प्रतिकूलगति, **प्रवाति** वहति । **निर्यामकै**. वाहकै, **पुर**. अग्रे, **प्रेर्यमाणान्यपि** प्रचार्यमाणान्यपि, **प्रवहणानि**

कुलिशपातशङ्काविदीर्णहृदयनिर्गलत्प्राणैरिव निशम्यमानो मैनाकवर्ग्यैर्गिरिभिः समन्तात् तस्तार दिगन्तराणि तारगम्भीरः सैन्यावासभेरीध्वनिः [ र ], येन श्रुतिविषयमायातेन स्तम्भितेवाऽऽहूतेव दत्ताज्ञेव सा वरूथिनी क्षणमेकमखिलापि निश्चला बभूव, उच्चचाल च गतिरभसचलितध्वजावचूलचामरा प्रत्यचलम्, अन्योऽन्यसंघट्टविघटितानेकयानपात्रा च प्राप कष्टेन घट्टोद्देशम् [ ल ]। अथ दशाशामुखविसर्पी सर्पितस्तारतुमुलेन प्रतिवेलमास्फालितवेलातटानामुदधिवीचीनामुदञ्चता दूरमश्रान्तसंतानेन कलकलेन विघटितजलदेवतावृन्दनिद्रः [ व ]–

'भद्र! सर पुरः किञ्चित्, आर्य! देहि गमनमार्गम्, अङ्ग! मा पीडय ममाङ्गमङ्गेन, मङ्गलक! कोऽयं बलदर्पः? कूर्पराघातैः परानाहंसि, हंस! हस्यसे दूरमुत्क्षिप्तनिवसनाग्रपल्लवोऽनया, लावण्यवति! पृष्ठतो निबिडलग्ना पीडयसि मामन्तर्बहिश्चातिनिष्ठुरेण वलगता पुरस्तनपीठेन, तरङ्गिके! दूरमपसर, विघ्निता गतिस्तव

---

टिप्पनकम्—तालतुमुलेन उच्चाव्यक्तशब्देन [ व ]।

---

मानानि, दीर्घीभवन्तीत्यर्थः, पुन गुहामुखात्–कन्दराग्रात्, उत्पतन्ति–उच्छलन्ति, केसरिकुलानि–सिंहगणा येषु तादृशैः, **मैनाकवर्ग्यैः** मैनाकजातीयैः, **गिरिभिः** पर्वतैः, **कुलिशपातशङ्काविदीर्णहृदयनिर्गलत्प्राणैरिव** कुलिशपातशङ्कया–वज्रपातशङ्कया, विदीर्णात्–पाटितात्, हृदयात्, निर्गलन्त–निर्गच्छन्त प्राणा येषां तादृशैरिवेत्युत्प्रेक्षा, **निशम्यमानः** श्रूयमाण [ र ]। **श्रुतिविषयं** श्रवणगोचरताम्, **आयातेन** आगतेन, प्राप्तेनेत्यर्थः, **येन** भेरीध्वनिना, **स्तम्भितेव** निरुद्धेव, **आहूतेव** कृताह्वानेव, **दत्ताज्ञेव** कृतादेशेव, **अखिलापि** समस्तापि, **वरूथिनी** सेना, एकं क्षण **निश्चला** स्थिरा, **बभूव** अभूत्। **च** पुन, **गतिरभसचलितध्वजावचूलचामरा** गतिरभसेन–गमनवेगेन, चलितानि–उद्धूतानि, ध्वजावचूलचामराणि–ध्वजाधोमुखशिखचामराणि यस्या तादृशी सती, **च** पुन, **प्रत्यचलं** पर्वतं प्रति, **उच्चचाल** उत्कर्षेण चलितवती। **अन्योऽन्यसङ्घट्टविघटितानेकयानपात्रा** अन्योऽन्यसङ्घट्टेन–परस्परसङ्घर्षेण, विघटितानि–विश्लेषितानि, विदारितानीति यावत्, अनेकानि यानपात्राणि–पोता यस्यास्तादृशी सती, **कष्टेन** क्लेशेन, **घट्टोद्देशं** तीरोर्ध्वदेशं, **प्राप** प्राप्तवती [ ल ]। **अथ** अनन्तरं, **शिबिरलोकस्य** सैनिकजनस्य, **कलकलः** कोलाहल, **'उल्ललास** उदभूत्' इत्यग्रेणान्वेति, कीदृश? **दशाशामुखविसर्पी** दशदिगन्तप्रसरणशील, पुन **प्रतिवेलं** तस्या तस्या जलधिनीरविकाररूपाया वेलायाम्, **आस्फालितवेलातटानाम्** आहतनिरुक्तवेलाविषयतीराणाम्, **उदधिवीचीनां** समुद्रतरङ्गाणा, दूरम्, **उदञ्चता** उद्गच्छता, पुन **अश्रान्तसन्तानेन** अविच्छिन्नपरम्परेण, पुन **तारतुमुलेन** उच्चगम्भीरेण, **कलकलेन**–कोलाहलेन, **विसर्पितः** प्रसारित, वर्धित इति यावत्। **पुन** कीदृश कलकल? **विघटितजलदेवतावृन्दनिद्र**. विघटिता–विध्वसिता, जलदेवतावृन्दस्य-जलवासिदेवगणस्य, निद्रा येन तादृश, पुन **इत्यादिश्रूयमाणानेकसैनिकशतालापः** इत्यादय – एवंविधा, श्रूयमाणा अनेके सैनिकशतस्य–शतसङ्ख्यकसैनिकानाम्, आलापा –आभाषणानि यस्मिंस्तादृश इति दूरवर्तिविशेषणान्तरम् [ व ], तत्र किमादयस्तदालापा इत्याह—

**भद्र!** कल्याणिन्!, **पुरः** अग्रे, **किञ्चित्** ईषत्, **सर** गच्छ, **आर्य!** श्रेष्ठ!, **गमनमार्गं** गमनावकाशं, देहि, **अङ्ग!** भो!, मम **अङ्गं** शरीरावयवम्, **अङ्गेन** शरीरावयवेन, तत्सघट्टनेनेत्यर्थः, **मा** न, **पीडय** व्यथय, **मङ्गलक!** कल्याणिन्! यद्वा तत्सञ्ज्ञक! **अयम्** अनुभूयमान, **बलदर्पः** बलगर्व, क? येनेति शेष, **कूर्पराघातैः** भुजमध्यग्रन्थिकृताभिघातैः, **परान्** अन्यान्, **आहंसि** ताडयसि, **हंस!** तत्सञ्ज्ञक!, **दूरमुत्क्षिप्तनिवसनाग्रपल्लव.** दूरमुत्क्षिप्त –आर्द्रताभयादत्यन्तमुपरिगात्रे समानीत, निवसनापल्लव–वस्त्रप्रान्तभागरूप पल्लवो येन तादृश, **अनया** स्त्रिया, **हस्यसे** विडम्ब्यसे, **लावण्यवति!** सौन्दर्यवति!, **पृष्ठतः** पृष्ठभागे, **निबिडलग्ना** अतिसंसृष्टा, त्वमिति शेष, **अतिनिष्ठुरेण** अतिकठिनेन, पुन **पुर.** अग्रे, **वलता** गच्छता, **स्तनपीठेन** स्तनतलेन, **अन्तः** मनसि, **बहिश्च** बाह्यप्रदेशे च, **पीडयसि** क्लेशयसि, **तरङ्गिके!** तत्सञ्ज्ञे! दूरम्, **अपसर** अपगच्छ, तव **जघनभित्त्या** कटिपुरोभागरूपभित्त्या, **सर्वत.** सर्वभागेषु, **निरुद्धमार्गस्य**

नोद्विलिप्यत्यन्यथा चिरेणापि चरणम्, आसन्नमरणः कृष्यतामितो वेत्रगहनादेष मुण्डनिहिततण्डुलप्रसेवको वृद्धसेवकः, प्रविष्टः सङ्कटे, निरनुक्रोशं जनमाक्रोशसि, न तु क्रोशसि रुद्धमिदमग्रतो निजतुन्दम्, तीरमासाद्य श्रमविसंस्थुलः स्थूलपाषाणशङ्कया पृष्ठदेशे निपण्णस्त्रासदूरोत्लुतेन स्थलशायिना महाप्लवकेन पश्यत कथं पातितः पुनरगाधे पयोधिवारिणि वराको वरुणकः' [ प ]

इत्यादिश्रूयमाणानेकसैनिकशतालापः, क्वचित् पलायमानपुलिनशायिजलमानुषमिथुनचरणचालित-वालुकारणितरमणीयः, क्वचित् प्रधावितोद्वृत्तजननिर्दयाक्रान्तशुक्तिसंपुटस्फुटनरवविस्फारितः, क्वचिद् दलित-सरसविद्रुमाङ्कुरटसत्कारदन्तुरः, क्वचित् पिच्छिलशिलातलस्खलितनिपतत्पदातिदत्तहास्यसहवासिलोकताल-ध्वनितरङ्गितो विस्तारवत्यपि नितान्तमवतारमार्गे कृच्छ्रलब्धान्तरस्य सत्वरं तीरमवतरतः शिबिरलोकस्यो-ल्लास कलकलः [ स ]।

---

टिप्पनकम्—दन्तुर -कराल' [ स ]।

---

**अन्यथा** तत्पीडनाभावे, **चरणं** पाद, **चिरेणापि** दीर्घकालेनापि, न **उद्विलिप्यति** मुखादुन्मोक्ष्यति, पुन **मुण्ड-निहिततण्डुलप्रसेवकः** मस्तकधृततण्डुलपोट्टलिक, पुन **सङ्कटे** विपदि, **प्रविष्टः** मग्न, अत एव **आसन्नमरणः** निकट-मृत्यु, **एषः** अयं, **वृद्धसेवकः** जराजीर्णसेवक, **इतः** अस्मात्, **वेत्रगहनात्** वेत्रवनात्, **कृष्यताम्** अपसार्यताम्, **निरनुक्रोशं** निर्दयं यथा स्यात् तथा, **निरनुक्रोश** इति पाठे निर्दय इत्यर्थ। **जनं** लोकम्, **आक्रोशसि** तर्जयसि, **तु** किन्तु, **अग्रतः** अग्रे, **रुद्धं** कृतावरोधं, **निजतुन्दं** स्वकीयमांसलोदरं, न **क्रोशसि** शोचसि, **क्रोशनिरुद्धम्** इति पाठे तु क्रोशविस्तीर्णमित्यर्थ, **तीरं** तटम्, **आसाद्य** प्राप्य, **श्रमविसंस्थुलः** श्रमविह्वल, पुन **स्थूलपाषाणशङ्कया** स्थूल-प्रस्तरसन्देहेन, **पृष्ठदेशे** पश्चाद्भागे, **निपण्णः** उपविष्ट, **वराकः** शोचनीय, **वरुणकः** तदाख्यसैनिक, **त्रासदूरोत्लु-तेन** भयदूरोत्पतितेन, **स्थलशायिना** स्थलशयनशीलेन, **महाप्लवकेन** महामण्डूकेन, **पश्यत** अवलोकयत, **अगाधे** गम्भीरे, **पयोधिवारिणि** समुद्रजले, **कथं** केन प्रकारेण, **पुनरिति** वाक्यालङ्कारे निश्चये वा, **पातितः** मज्जित [ प ]।

पुन कीदृश कलकल? **क्वचित्** कस्मिंश्चित् प्रदेशे, **पलायमानपुलिनशायिजलमानुषमिथुनचरणचालित-वालुकारणितरमणीयः** पलायमानस्य-सेनाभयाद् विद्रुतस्य, पुलिनशायिन-सैकततटस्वापशीलस्य, जलमानुषमिथुनस्य-जलीयमनुष्यदम्पत्यो, चरणाभ्यां-पादाभ्यां, चालितानाम्-उत्क्षिप्तानाम्, वालुकानां-सिकताना, रणितै शब्दविशेषै, रमणीय मनोहर, पुन **क्वचित्** कस्मिंश्चित् प्रदेशे, **प्रधावितोद्वृत्तजननिर्दयाक्रान्तशुक्तिसम्पुटस्फुटनरवविस्फारितः** प्रधावितै-प्रकर्षेण कृतधावनै, उद्वृत्तजनै-उद्धतलोकै, निर्दयं-नितान्तम्, आक्रान्तस्य-आमर्दितस्य, शुक्तिसम्पुटस्य-सम्पु-टितशुक्ते, स्फुटनेन-विश्लेषेण, यो रव-शब्द, तेन विस्फारित-विस्तारित, पुन **क्वचित्** कुत्रचित् प्रदेशे, **दलितसरस-विद्रुमाङ्कुरटसत्कारदन्तुरः** दलिताना-खण्डिताना, सरसानाम्-आर्द्राणा, विद्रुमाङ्कुराणा-प्रवालाङ्कुराणां, टसत्कारेण-ध्वनिविशेषेण, दन्तुर-समृद्ध, पुन **क्वचित्** क्वापि स्थले, **पिच्छिलशिलातलस्खलितनिपतत्पदातिदत्त-हास्यसहवासिलोकतालध्वनितरङ्गितः** पिच्छिलात्-चिक्कणात्, शिलातलात्-प्रस्तरतलात्, स्खलितै-विचलितै, अत एव निपतद्भि, पदातिभि-पादगामिभि, दत्तै-कृतै, हास्यसहवासिभि-हास्यसहभाविभि, लोकानां तालध्वनिभि-करतलशब्दध्वनिभि, तरङ्गित-वर्धित। कीदृशस्य शिबिरलोकस्य? **नितान्तम्** अत्यन्तम्, **विस्तारवत्यपि** विस्तृतेऽपि, **अवतारमार्गे** समुद्रावतारस्थले, **कृच्छ्रलब्धान्तरस्य** कृच्छ्रेण-क्लेशेन, लब्ध-प्राप्तम्, अन्तरम्-अवकाशो येन तादृशस्य, पुन **सत्वरं** शीघ्रं, **तीरं** तटम्, **अवतरतः** आगच्छत [ स ]।

नोद्विलिष्यत्यन्यथा चिरेणापि चरणम्, आसन्नमरणः कृष्यतामितो वेत्रगहनादेष मुण्डनिहिततण्डुलप्रसेवको वृद्धसेवकः, प्रविष्टः सङ्कटे, निरनुक्रोशं जनमाक्रोशसि, न तु क्रोशसि रुद्धमिदमग्रतो निजतुन्दम्, तीरमासाद्य श्रमविसंस्थुलः स्थूलपाषाणशङ्कया पृष्ठदेशे निषण्णस्त्रासदूरोत्प्लुतेन स्थलशायिना महाप्लवकेन पश्यत कथं पातितः पुनरगाधे पयोधिवारिणि वराको वरुणकः' [ प ]

इत्यादिश्रूयमाणानेकसैनिकशतालापः, क्वचित् पलायमानपुलिनशायिजलमानुषमिथुनचरणचालितवालुकारणितरमणीयः, क्वचित् प्रधावितोद्धृत्तजननिर्दयाक्रान्तशुक्तिसंपुटस्फुटनरवविस्फारितः, क्वचिद् दलितसरसविद्रुमाङ्कुरटसत्कारदन्तुरः, क्वचित् पिच्छिलशिलातलस्खलितनिपतत्पदातिदत्तहास्यसहवासिलोकतालध्वनितरङ्गितो विस्तारवत्यपि नितान्तमवतारमार्गे कृच्छ्रलब्धान्तरस्य सत्वरं तीरमवतरतः शिविरलोकस्योल्लास कलकलः [ स ] ।

---

टिप्पनकम्—दन्तुर-कराल [ स ] ।

---

**अन्यथा** तत्पीडनाभावे, **चरणं** पाद, **चिरेणापि** दीर्घकालेनापि, न **उद्विलिष्यति** मुखादुन्मोक्ष्यति, पुन **मुण्डनिहिततण्डुलप्रसेवकः** मस्तकधृततण्डुलपोट्टलिक, पुन **सङ्कटे** विपदि, **प्रविष्टः** मग्न, अत एव **आसन्नमरणः** निकटमृत्यु, **एषः** अयं, **वृद्धसेवकः** जराजीर्णसेवक, **इतः** अस्मात्, **वेत्रगहनात्** वेत्रवनात्, **कृष्यताम्** अपसार्यताम्, **निरनुक्रोशं** निर्दयं यथा स्यात् तथा, **निरनुक्रोश** इति पाठे निर्दय इत्यर्थः । **जनं** लोकम्, **आक्रोशसि** तर्जयसि, **तु** किन्तु, **अग्रतः** अग्रे, **रुद्धं** कृतावरोधं, **निजतुन्दं** स्वकीयमासलोदरं, न **क्रोशसि** शोचसि, **क्रोशनिरुद्धम्** इति पाठे तु क्रोशविस्तीर्णमित्यर्थः, **तीरं** तटम्, **आसाद्य** प्राप्य, **श्रमविसंस्थुलः** श्रमविह्वल, पुन **स्थूलपाषाणशङ्कया** स्थूलप्रस्तरसन्देहेन, **पृष्ठदेशे** पश्चाद्भागे, **निषण्णः** उपविष्ट, **वराकः** शोचनीय, **वरुणकः** तदाख्यसैनिक, **त्रासदूरोत्प्लुतेन** भयदूरोत्पतितेन, **स्थलशायिना** स्थलशयनशीलेन, **महाप्लवकेन** महामण्डूकेन, **पश्यत** अवलोकयत, **अगाधे** गम्भीरे, **पयोधिवारिणि** समुद्रजले, **कथं** केन प्रकारेण, **पुनरिति** वाक्यालङ्कारे निश्चये वा, **पातितः** मज्जित [ प ] ।

पुन कीदृश कलकल ? **क्वचित्** कस्मिंश्चित् प्रदेशे, **पलायमानपुलिनशायिजलमानुषमिथुनचरणचालितवालुकारणितरमणीयः** पलायमानस्य-सेनाभयाद् विद्रुतस्य, पुलिनशायिन-सैकततटस्वापशीलस्य, जलमानुषमिथुनस्य-जलीयमनुष्यदम्पत्यो, चरणाभ्यां-पादाभ्यां, चालितानाम्-उत्क्षिप्तानाम्, वालुकानां-सिकतानां, रणितै शब्दविशेषै, रमणीय-मनोहर, पुन **क्वचित्** कस्मिंश्चित् प्रदेशे, **प्रधावितोद्वृत्तजननिर्दयाक्रान्तशुक्तिसम्पुटस्फुटनरवविस्फारितः** प्रधावितै-प्रकर्षेण कृतधावनै, उद्धृत्तजनै-उद्धतलोकै, निर्दयं-नितान्तम्, आक्रान्तस्य-आमर्दितस्य, शुक्तिसम्पुटस्य-सम्पुटितशुक्ते, स्फुटनेन-विश्लेषेण, यो रव-शब्द, तेन विस्फारित-विस्तारित, पुन **क्वचित्** कुत्रचित् प्रदेशे, **दलितसरसविद्रुमाङ्कुरटसत्कारदन्तुरः** दलितानां-खण्डितानां, सरसानाम्-आर्द्राणां, विद्रुमाङ्कुराणां-प्रवालाङ्कुराणां, टसत्कारेण-ध्वनिविशेषेण, दन्तुर-समृद्ध, पुन **क्वचित्** क्वापि स्थले, **पिच्छिलशिलातलस्खलितनिपतत्पदातिदत्तहास्यसहवासिलोकतालध्वनितरङ्गितः** पिच्छिलात्-चिक्कणात्, शिलातलात्-प्रस्तरतलात्, स्खलितै-विचलितै, अत एव निपतद्भि, पदातिभि-पादगामिभि, दत्तै-कृतै, हास्यसहवासिभि-हास्यसहभाविभि, लोकानां तालध्वनिभि-करतलशब्दध्वनिभि, तरङ्गित-वर्धित । कीदृशस्य शिविरलोकस्य ? **नितान्तम्** अत्यन्तम्, **विस्तारवत्यपि** विस्तृतेऽपि, **अवतारमार्गे** समुद्रावतारस्थले, **कृच्छ्रलब्धान्तरस्य** कृच्छ्रेण-क्लेशेन, लब्ध-प्राप्तम्, अन्तरम्-अवकाशो येन तादृशस्य, पुन **सत्वरं** शीघ्रं, **तीरं** तटम्, **अवतरतः** आगच्छत [ स ] ।

रुद्गमनशंसी सागरोद्देशः, तटमिव पुरस्तरङ्गैरुल्लङ्घद्भिरुद्भ्राव्यते कुरुत वंशक्षेपमन्तर्वारि, दुर्वात इव दृश्यते मुकुलयत सितपटरज्जुजालम्, अग्रतो विसारिमत्स्य इव वहति लम्बयत नागरानविलम्बितं [ अं ]; मित्राणि! मन्दोऽतिमात्रं मरुत्, प्रलम्बैर्बाहुभिर्वाहयत सत्वरमरित्राणि, मकरक! मनागुदञ्चय मार्गतटरुहश्चन्दनतरोरस्य तिरश्चीमुपरिशाखाम्, मूर्ख! किमधोमुखं स्थितोऽसि मुधा, बधान हस्ते एनं मण्डूकमस्तकमणिम्, अवश्यं न दश्यसे दन्दशूकैः, सकुलक! विधेहि वेदोद्धारिणः शकुलस्य केलिम्, उद्धर रक्ततैलपङ्कमग्नमूलामिमां नावम्, अधीर! माऽवधीरय मद्वचः, विचर निराकुलो, नक्रवसयाऽञ्जितलोचनस्य स्थलं ते सकलमम्बुधिजलं, शम्बूक! बाढं प्रचलायसे, न चेतयसि ग्राहेणापि गृह्यमाणचरणः, चेतसि कृतं वैलक्ष्येण, क्षालय क्षारेण सामुद्रेण वारिणा वारं वारमास्यं, यास्यति द्रागेव निद्रा सहेक्षणाभ्या क्षयं, राजिलक! तर्जितोऽपि नोपरमसि, प्रगुणयायिनीमपि नावमागस्तीं गतिं ग्राहयसि, अस्ति कश्चिन्न ते दिङ्मोहः? यद्युदाहृतामप्यहृदय! न जानास्युत्तराशावर्तनीम्, प्रवर्तस्व दृष्ट्वा दृष्ट्वा सप्तर्षिमण्डलम्' [अः]

---

टिप्पनकम्—क्षेपीयः क्षिप्रतरम् [ अ ]। ऊर्ध्वं च ऊर्ध्वं मुत्पाटयन् (? उदञ्चय ऊर्ध्वमुत्पाट्य) [ अः ]।

---

निपीत—तिरोभावित, कल्लोलस्य—महातरङ्गस्य, कालिमा—कृष्णता यस्मिंस्तादृश, अत एव **अनिलं** पवन, पातुम्, **उद्यतस्य** कृतोद्योगस्य, **कस्यचित्** अविज्ञातनामकस्य, **महाहेः** महासर्पस्य, **उद्गमनशंसी** उत्सर्पणावेदक, अय **सागरोद्देशः** सागरान्तर्गतोन्नतदेश, **क्षेपीयः** अतिशीघ्रम्, **लङ्घयताम्** अतिक्रम्यताम्, य सागरोद्देश, **पुरः** अग्रे, **उल्लङ्घद्भिः** उच्छलद्भि, तरङ्गै, **तटमिव** तीरमिव, **उद्भ्राव्यते** प्लाव्यते, अत एव **अन्तर्वारि** जलमध्ये, **वंशक्षेपं** मानकृते गतिरोधनादिकृते वा वशप्रक्षेपण, कुरुत, पुन **दुर्वात इव** उद्धतपवन इव, दृश्यते, अत एव **सितपटरज्जुजालं** सितपटाना—श्वेतवस्त्राणा, रज्जूना च, जाल—समूह, **मुकुलयत** सकोचयत, पुन अग्रे **विसारिमत्स्य इव** विसारिजातीयमत्स्यविशेष इव, **वहति** स्पन्दते, अत एव **नागरान्** लाङ्गराणि, **अविलम्बितं** सत्वरं, **लम्बयत** नमयत [ अ ]। पुनः **मित्राणि!** भो सखाय!, **मरुत्** पवन, **अतिमात्रम्** अत्यन्तं, **मन्दः** अनुद्धत, अस्तीति शेष, अत **प्रलम्बैः** दीर्घैः, **बाहुभिः** भुजै, **अरित्राणि** नौसञ्चारणकाष्ठानि, **वाहयत** चालयत। पुन **मकरक!** तत्सञ्ज्ञक!, **मार्गतटरुहः** मार्गप्रान्तप्ररूढस्य, यद्वा मार्गभूततटप्ररूढस्य, **अस्य** पुरोवर्तिन, **चन्दनतरोः** चन्दनवृक्षस्य, **तिरश्चीं** कुटिलाम्, **उपरिशाखाम्** ऊर्ध्वशाखां, **मनाक्** किञ्चित्, **उदञ्चय** उन्नय, **मूर्ख!** भो निष्प्रज्ञ!, **मुधा** व्यर्थम्, **अधोमुखम्** अवनतमुख यथा स्यात् तथा, **किम्?** किमर्थम्, **स्थितः** उपविष्ट, **असि** वर्तसे, **एनम्** इमं, **मण्डूकमस्तकमणिं** मण्डूकस्य—भेकस्य, मस्तके यो मणि—रत्न, त हस्ते **बधान** गृहाण, **दन्दशूकैः** सर्पै, **अवश्यं** निश्चित, **न दश्यसे** तन्महिम्ना न दङ्क्ष्यसे। **सकुलक!** तत्सञ्ज्ञक!, **रक्ततैलपङ्कमग्नमूलां** रक्त—रक्तवर्णे रुधिरस्वरूप वा, यत् तैल तन्मये, पङ्के—कर्दमे, मग्नं मूल यस्यास्तादृशीं, नावम्, **उद्धर** तत्पङ्कादुन्नय, **वेदोद्धारिणः** प्रलयपयोधे वेदान् उद्धृतवत, **शकुलस्य** मत्स्यविशेषस्य, **केलिं** लीलां, **विधेहि** कुरु, **अधीर!** धैर्यशून्य!, **मद्वचः** मद्वाक्यं, मा **अवधीरय** तिरस्कुरु, **निराकुलः** स्वस्थ सन्, **विचर** समुद्रमार्गे विहर, **नक्रवसया** नक्राख्यजलचरमज्जया, **अञ्जितलोचनस्य** आञ्जितनयनस्य, **ते** तव, **सकलं** समग्रम्, **अम्बुधिजलं** समुद्रजल, **स्थलं** स्थलतुल्यम्, अस्तीति शेष। पुन **शम्बूक!** तत्सञ्ज्ञक!, **बाढम्** अत्यन्त, **प्रचलायसे** घूर्णसे, **ग्राहेणापि** तदाख्यहिंस्रजलचरेणापि, **गृह्यमाणचरणः** आक्रम्यमाणपादोऽपि, **न चेतयसे** न अवधरसे, **चेतसि** मनसि, **वैलक्ष्येण**, विषादेन, **कृतं** व्यर्थ, **क्षारेण** क्षाररसान्वितेन, **सामुद्रेण** समुद्रसम्बन्धिना, **वारिणा** जलेन, **वारंवारम्** अनेकवारम्, **आस्यं** मुख, मुखमण्डलमिति यावत्, **क्षालय** सिञ्च, **द्रागेव** शीघ्रमेव, **ईक्षणाभ्यां** नेत्राभ्यां, सह, निद्रा, **क्षयं** विनाश, **यास्यति** प्राप्स्यति। पुन **राजिलक!** तत्सञ्ज्ञक!, **तर्जितोऽपि** भर्त्सितोऽपि, न **उपरमसि** निवर्तसे, **प्रगुणयायिनीमपि** ऋजुगामिनीमपि, नावम्, **आगस्तीम्** अगस्त्यसम्बन्धिनीं, दक्षिणामिति यावत्, **गतिं** मार्गं, **ग्राहयसि** गमयसि, **ते** तव, **कश्चित्** कोऽपि, **दिङ्मोहः** दिग्भ्रम, न? स्वाभिलषितज्ञापनाय कृते प्रश्ने 'कच्चित्' इत्यस्य वर्तमानत्वाद्

रुद्गमनशंसी सागरोद्देशः, तटमिव पुरस्तरङ्गैरुल्ललद्भिरुद्भ्राव्यते कुरुत वंशक्षेपमन्तर्वारि, दुर्वात इव दृश्यते मुकुलयत सितपटरज्जुजालम्, अग्रतो विसारिमत्स्य इव वहति लम्बयत नांगरानविलम्बितं [ अं ]; मित्राणि! मन्दोऽतिमात्रं मरुत्, प्रलम्बैर्बाहुभिर्वाहयत सत्वरमरित्राणि, मकरक! मनागुदञ्चय मार्गतटरुहश्चन्दनतरोरस्य तिरश्चीमुपरिशाखाम्, मूर्ख! किमधोमुखं स्थितोऽसि मुधा, बधान हस्त एनं मण्डूकमस्तकमणिम्, अवश्यं न दृश्यसे दन्दशूकैः, सकुलक! विधेहि वेदोद्धारिणः शकुलस्य केलिम्, उद्धर रक्ततैलपङ्कमग्नमूलामिमां नावम्, अधीर! माऽवधीरय मद्वचः, विचर निराकुलो, नक्रवसयाऽञ्जितलोचनस्य स्थलं ते सकलमम्बुधिजलं, शम्बूक! बाढं प्रचलायसे, न चेतयसि ग्राहेणापि गृह्यमाणचरणः, चेतसि कृतं वैलक्ष्येण, क्षालय क्षारेण सामुद्रेण वारिणा वारं वारमास्यं, यास्यति द्रागेव निद्रा सहेक्षणाभ्यां क्षयं, राजिलक! तर्जितोऽपि नोपरमसि, प्रगुणयायिनीमपि नावमागस्तीं गतिं ग्राहयसि, अस्ति कच्चिन्न ते दिङ्मोहः? यद्युदाहृतामप्यहृदय! न जानास्युत्तराशावर्तनीम्, प्रवर्तस्व दृष्ट्वा दृष्ट्वा सप्तर्षिमण्डलम्' [अः]

---

टिप्पनकम्—क्षेपीयः क्षिप्रतरम् [ अ ]। ऊर्ध्वं च ऊर्ध्वं नुत्पाटयन् (? उदञ्चय ऊर्ध्वमुत्पाटय) [ अः ]।

---

निपीत –तिरोभावित, कल्लोलस्य–महातरङ्गस्य, कालिमा–कृष्णता यस्मिंस्तादृश, अत एव **अनिलं** पवनं, पातुम्, **उद्यतस्य** कृतोद्योगस्य, **कस्यचित्** अविज्ञातनामकस्य, **महाहेः** महासर्पस्य, **उद्गमनशंसी** उत्सर्पणावेदक, अय **सागरोद्देशः** सागरान्तर्गतोन्नतदेश, **क्षेपीयः** अतिशीघ्रम्, **लङ्घ्यताम्** अतिक्रम्यताम्, य सागरोद्देश, **पुरः** अग्रे, **उल्ललद्भिः** उच्छलद्भि, तरङ्गै, **तटमिव** तीरमिव, **उद्भ्राव्यते** प्रत्याय्यते, अत एव **अन्तर्वारि** जलमध्ये, **वंशक्षेपं** मानकृते गतिरोधनादिकृते वा वंशप्रक्षेपण, कुरुत, पुन **दुर्वात इव** उद्धतपवन इव, दृश्यते, अत एव **सितपटरज्जुजालं** सितपटाना–श्वेतवस्त्राणा, रज्जूना च, जाल–समूह, **मुकुलयत** सकोचयत, पुन अग्रे **विसारिमत्स्य इव** विसारिजातीयमत्स्यविशेष इव, **वहति** स्पन्दते, अत एव **नांगरान्** लाङ्गराणि, **अविलम्बितं** सत्वरं, **लम्बयत** नमयत [ अं ]। पुनः **मित्राणि!** भो सखाय!, **मरुत्** पवन, **अतिमात्रम्** अत्यन्तं, **मन्दः** अनुद्धत, अस्तीति शेष, अत **प्रलम्बैः** दीर्घैः, **बाहुभिः** भुजै, **अरित्राणि** नौसञ्चारणकाष्ठानि, **वाहयत** चालयत। पुन **मकरक!** तत्सञ्ज्ञक!, **मार्गतटरुहः** मार्गप्रान्तप्ररूढस्य, यद्वा मार्गभूततटप्ररूढस्य, **अस्य** पुरोवर्तिन, **चन्दनतरोः** चन्दनवृक्षस्य, **तिरश्चीं** कुटिलाम्, **उपरिशाखाम्** ऊर्ध्वशाखां, **मनाक्** किञ्चित्, **उदञ्चय** उन्नय, **मूर्ख!** भो निष्प्रज्ञ!, **मुधा** व्यर्थम्, **अधोमुखम्** अवनतमुख यथा स्यात् तथा, **किम्?** किमर्थम्, **स्थितः** उपविष्ट, **असि** वर्तसे, **एनम्** इमं, **मण्डूकमस्तकमणिं** मण्डूकस्य–मेकस्य, मस्तके यो मणि –रत्नं, त हस्ते **बधान** गृहाण, **दन्दशूकैः** सर्पै, **अवश्यं** निश्चित, **न दृश्यसे** तन्महिम्ना न दृक्ष्यसे। **सकुलक!** तत्सञ्ज्ञक!, **रक्ततैलपङ्कमग्नमूलां** रक्त–रक्तवर्णं रुधिरस्वरूपं वा, यत् तैल तन्मये, पङ्के–कर्दमे, मग्नं मूल यस्यास्तादृशीं, नावम्, **उद्धर** तत्पङ्कादुन्नय, **वेदोद्धारिणः** प्रलयपयोधे वेदान् उद्धृतवत, **शकुलस्य** मत्स्यविशेषस्य, **केलिं** लीलां, **विधेहि** कुरु, **अधीर!** धैर्यशून्य!, **मद्वचः** मद्वाक्य, मा **अवधीरय** तिरस्कुरु, **निराकुलः** स्वस्थ सन्, **विचर** समुद्रमार्गे विहर, **नक्रवसया** नक्राख्यजलचरमज्जया, **अञ्जितलोचनस्य** आर्द्रितनयनस्य, **ते** तव, **सकलं** समग्रम्, **अम्बुधिजलं** समुद्रजल, **स्थलं** स्थलतुल्यम्, अस्तीति शेष। पुन **शम्बूक!** तत्सञ्ज्ञक!, **वाढम्** अत्यन्त, **प्रचलायसे** घूर्णसे, **ग्राहेणापि** तदाख्यहिंस्रजलचरेणापि, **गृह्यमाणचरणः** आक्रम्यमाणपादोऽपि, **न चेतयसे** न अवधत्से, **चेतसि** मनसि, **वैलक्ष्येण**, विषादेन, **कृतं** व्यर्थं, **क्षारेण** क्षाररसान्वितेन, **सामुद्रेण** समुद्रसम्बन्धिना, **वारिणा** जलेन, **वारवारम्** अनेकवारम्, **आस्यं** मुख, मुखमण्डलमिति यावत्, **क्षालय** सिञ्च, **द्रागेव** शीघ्रमेव, **ईक्षणाभ्यां** नेत्राभ्या, सह, निद्रा, **क्षयं** विनाश, **यास्यति** प्राप्स्यति। पुन **राजिलक!** तत्सञ्ज्ञक!, **तर्जितोऽपि** भर्त्सितोऽपि, न **उपरमसि** निवर्तसे, **प्रगुणयायिनीमपि** ऋजुगामिनीमपि, नावम्, **आगस्तीम्** अगस्त्यसम्बन्धिनीं, दक्षिणामिति यावत्, **गतिं** मार्गं, **ग्राहयसि** गमयसि, **ते** तव, **कच्चित्** कोऽपि, **दिङ्मोहः** दिग्भ्रम, न? स्वाभिलषितज्ञापनाय कृते प्रश्ने 'कच्चित्' इत्यस्य वर्तमानत्वाद्

उवाच च विगतहर्षः—'कुमार! विश्रान्त एष तावदत्रैव प्रदेशे मार्गदेशकोऽस्माकमातोद्यध्वनिः । आज्ञापय किमधुना कर्तव्यम्, किमेवमेव बद्धवेगा पुरस्तादवद्धलक्ष(क्ष्य)मेव प्रवर्त्यत इयं नौः, उत पश्चान्निवर्त्यते, यद्यवश्यमेव पुरः प्रयातव्यं द्रष्टव्यं च कौतुकमिति निश्चयः कुमारस्य, तन्न किञ्चिद् विलम्बेन विचारेण वा कृतेन प्रयोजनम्, अनेनैव पर्वतनितम्बावलम्बिना मार्गेण गम्यते यावत् किमपि दृष्टमथ न किञ्चिद् गतेन दृष्टेन वा कौतुकेन साध्यसिद्धिरिति बुद्धिस्तदलमात्मना वृथैव क्लेशितेन, प्रस्थीयते स्थानादित एव प्रतीपं, गम्यते शिबिरम्, आश्वास्यते सर्वतस्त्वदृदर्शनेन विक्लवीभूतो भृत्यबान्धवमित्रलोकः, क्रियन्ते प्रस्तुतानि राज्यकार्याणि, कौतुकानि त्वपर्यवसानायामत्र दण्डयात्रायामदृश्यपारे भगवत्यकूपारे विचरतो यदृच्छया कुमारस्य पदे पदे सुलभदर्शनानि, किं च तैः, अयमेव हि तावदवधिरद्भुतानां निदर्शनं दर्शनीयानां संकेतशाला कुतूहलकारिणां युज्यते रत्नकूटशैलः कथमपि प्रसङ्गदृष्टो द्रष्टुमनुग्रहीतुं च सपरिग्रहस्य विविधक्रीडाभिः [ ग ]। अत्र हि पदे पदे सुन्दरतया सुरलोकस्यापि जनितव्रीडानि क्रीडास्थानानि, स्थाने स्थाने सर्वर्तुकानि वनानि, वने वने विकचरत्नकुसुमस्तवकतारकितानि कल्पतरुखण्डानि, खण्डे खण्डे बहुप्रपञ्चाः काञ्चनलता-

---

**तथैव** पूर्ववदेव, **स्तोकम्** अल्पं, गत्वा, नाव, **सत्वरं** शीघ्रम्, **आचकर्ष** निवर्तयामास [ ख ] । **च** पुन , **विगतहर्षः** नष्टहर्ष सन्, **उवाच** उक्तवान्, किमित्याह–**कुमार!** युवराज!, अस्माकं, **मार्गदेशकः** मार्गवेदक , **एषः** अयम्, **आतोद्यध्वनिः** वाद्यविशेषध्वनि , **अत्रैव** अस्मिन्नेव, **प्रदेशे** स्थाने, **विश्रान्तः** निवृत्त , **अधुना** सम्प्रति, किं **कर्तव्यं** कर्तुमुचितम्, इति **आज्ञापय** आदिश । **एवमेव** इत्थमेव, **बद्धवेगा** जनितवेगा, इयं नौ किम्, **अवद्धलक्ष्यमेव** अनिश्चितगन्तव्यप्रदेशमेव यथा स्यात् तथा, **पुरस्तात्** अग्रे, **प्रवर्त्यते** प्रेरिष्यते, **उत** अथवा, पश्चात् **निवर्त्यते** निवर्तयिष्यते, मयेति शेष । यदि **कुमारस्य** भवत , **अवश्यमेव** नूनमेव, **पुरः** अग्रे, **प्रस्थातव्यं** प्रस्थातुमुचितम्, **च** पुन , **कौतुकम्** उत्सव , **द्रष्टव्यं** द्रष्टुमुचितम् इति , **निश्चयः** सकल्प , वर्तत इति शेष , **तत्** तर्हि, कृतेन, **विलम्बेन** कालात्ययेन, **वा** अथवा, **विचारेण** विवेचनेन, न **किञ्चिद्** अल्पमपि, **प्रयोजनं** फलम्, किं तु **पर्वतनितम्बावलम्बिना** पर्वतकटिभागावलम्बिना, मार्गेण, **यावत्** यावन्त कालं, **किमपि** कौतुकमिति शेष , **दृष्टं** दृष्टिगोचर, स्यादिति शेष , तावत् **गम्यते** प्रस्थीयते, **अथ** यदि, **गतेन** गमनेन, **वा** अथवा, **दृष्टेन** दृग्गोचरीकृतेन, **कौतुकेन** उत्सवेन, न **साध्यसिद्धिः** प्रयोजननिष्पत्ति , इति **बुद्धिः** निश्चय , स्यादिति शेष , **तत्** तर्हि, **वृथैव** व्यर्थमेव, **क्लेशितेन** आयासितेन, **आत्मना** स्वेन, **अलं** व्यर्थम्, **इत एव** अस्मादेव स्थानात्, **प्रतीपं** पश्चात्, **प्रस्थीयते** प्रयाण क्रियते, **शिबिरं** सैन्यावास , **गम्यते** प्राप्यते, **त्वदर्शनेन** त्वद्दर्शनाभावेन, **विक्लवीभूतः** व्याकुलीभूत , **भृत्य-बान्धव-मित्रलोकः** सेवकबन्धुसुहृज्जन , **सर्वतः** समन्तत , **आश्वास्यते** सान्त्व्यते, पुन **प्रस्तुतानि** प्रकृतानि, राज्यकार्याणि क्रियन्ते । **अपर्यवसानायां** निरवधिकायाम्, **अत्र** अस्या, **दण्डयात्रायां** दीर्घयात्रायाम्, **अदृश्यपारे** अलक्ष्योत्तरावधिके, **भगवति** ऐश्वर्यवति, **अकूपारे** सागरे, **यदृच्छया** स्वेच्छया, **विचरतः** विहरत , **कुमारस्य** भवत , **पदे पदे** स्थाने स्थाने, **कौतुकानि तु** उत्सवास्तु, **सुलभदर्शनानि** अनायासदर्शनानि, स्युरिति शेष । **च** पुन , **तैः** अनन्तरोपवर्णितकौतुकै , **किम्** न किमपि प्रयोजनमित्यर्थ । **अद्भुतानाम्** आश्चर्याणाम्, **अवधिः** चरमसीमा, प्रधानकेन्द्रमिति यावत्, पुन **दर्शनीयानां** द्रष्टुं योग्याना, वस्तूना, **निदर्शनम्** आदर्शभूत , पुन **कुतूहलकारिणाम्** उत्सवकारिणां, **संकेतशाला** सकेतगृहम्, **कथमपि** कथञ्चित्, **प्रसङ्गदृष्टः** प्रसङ्गवशादवलोकितपूर्व , अयमेव **रत्नकूटशैलः** रत्नकूटपर्वत , **हि** निश्चयेन, **तावदिति** वाक्यालङ्कारे, **द्रष्टुं** दृष्टिगोचरीकर्तुं, **सपरिग्रहस्य** सपरिवारस्य, **विविधक्रीडाभिः** अनेकक्रीडाभि , **अनुग्रहीतुम्** अनुकम्पयितु च, **युज्यते** योग्यो वर्तते [ ग ]। हि यत , **अत्र** अस्मिन् पर्वते, **पदे पदे** स्थाने स्थाने, **सुन्दरतया** मनोहारितया, **सुरलोकस्यापि** स्वर्गलोकस्यापि, **जनितव्रीडानि** उत्पादितलज्जानि, **क्रीडास्थानानि** क्रीडाक्षेत्राणि, पुन **स्थाने स्थाने** प्रतिस्थानम्, **सर्वर्तुकानि** युगपत्सर्वऋतुसुखावहानि, वनानि, इद 'दृश्यन्ते' इति वक्ष्यमाणक्रिययाऽन्वेति, पुन **वने वने** प्रतिवनम्, **विकचरत्नकुसुमस्तवकतारकितानि** विकचाना–विकसिताना, रत्नानां–स्वजातिश्रेष्ठाना रत्नरूपाणां वा, कुसुमाना–पुष्पाणा, य स्तवक –गुच्छ , तेन तारकितानि–सजाततारकाणीव, **कल्पतरुखण्डानि** कल्पवृक्षपङ्क्तय , पुन **खण्डे खण्डे** प्रतिखण्डम्,

मुखोऽभवम् । अदत्तोत्तरश्च तस्मै तदाकस्मिकमालोच्यालोच्य चापलमात्मनो मनसि जातहासो विस्मय-त्रपाविषादानां युगपदास्पदतामगच्छम् । अकरवं च जातपरमानुतापश्चेतसि—'हन्त, कस्मान्मया मिथ्या-कुतूहलतरलितेन सहसैव तूर्यरवमुपश्रुत्य धावता शिशुनेव लघुतां परामात्माऽऽनीतः, किमित्यचिन्तितात्मविनि-पातदुःखेन शिखरिणेव कुलिशपातभीरुणा संचरदनेकदुष्टग्राहदुरवगाहो महासमुद्रकुक्षिरवगाढः, किमनिवारिते-न्द्रियवृत्तिना बालतपस्विनेव निष्फलोऽनुभूतः शीतवातादिजनितः कायक्लेशः, कुतो ममेदमनुपदिष्टमशिक्षित-मनभ्यस्तमचिन्तितमेवाद्य चापलमाविर्भूतम् [ च ], अहो चञ्चलस्वभावता चित्तपरिणतेः, अहो विकारबहुलता तारुण्यगतेः, अहो दुःखदायकत्वं सुखाभिलाषाणाम्, अहो व्यसनदानवैदग्ध्यमनधीनतायाः, अहो कार्यपरि-णतिविचारविद्वेषो दर्पोद्रेकविलसितानाम्, अहो मतिविपर्ययप्रदानतात्पर्यं दैवप्रातिकूल्यस्य, तस्य तादृशस्य तातप्रयत्नस्य, तस्य विद्याभ्यासस्य, तस्य नीतिशास्त्रश्रवणस्य, तस्य हेयोपादेयतत्त्वपरिज्ञानस्य, तेषां वृद्धोपदे-शानाम्, तस्या विदग्धजनसंगतेः, तस्य च निसर्गसिद्धस्येन्द्रियवर्गसंयमस्य कीदृशो विपाकः संवृत्तः [ छ ],

---

**टिप्पनकम्—बालतपस्विना** अज्ञानतपोधनेन [ च ] ।

---

तस्मिन् क्षणे, **अधोमुखः** अवनतवदन , **अभवं** जात । **च** पुन , **तस्मै** तारकाय, **अदत्तोत्तरः** अदत्तप्रतिवचन सन्, **तदा** तस्मिन् काले, **आत्मनः** स्वस्य, **आकस्मिकम्** अकारणक, **चापलं** चाञ्चल्यम्, **आलोच्य आलोच्य** विचार्य विचार्य, **मनसि** चेतसि, **जातहासः** उत्पन्नस्वावज्ञोचितपरिहास सन्, **युगपत्** एककाल, **विस्मय-त्रपा-विषादानां** आश्चर्यलज्जादु खानाम्, **आस्पदतां** स्थानताम्, **अगच्छं** प्रापम् । **च** पुन , **जातपरमानुतापः** उत्पन्नात्यन्तपश्चात्ताप सन्, **चेतसि** चित्ते, **अकरवम्** अचिन्तयम् , किमित्याह–**हन्त** खेद , **शिशुनेव** बालेनेव, **मिथ्याकुतूहलतरलितेन** मिथ्याभूतोत्सवचञ्चलितेन, पुन **तूर्यरवं** वाद्यविशेषध्वनिम् , **उपसृत्य** अनुसृत्य, **सहसैव** शीघ्रमेव, **धावता** वेगेन गच्छता, मया, **अकस्मात्** अकारणमेव, **आत्मा** स्व , **पराम्** अत्यन्ता, **लघुतां** क्षुद्रताम् , आनीत । पुन **किमिति** कस्मात्, **कुलिश-पातभीरुणा** वज्राघातभीतेन, **शिखरिणा** पर्वतेन, इव, **अचिन्तितात्मविनिपातदुःखेन** अचिन्तित –अनालोचित , आत्मन –स्वस्य, विनिपातेन–अनर्थापातेन, पक्षे समुद्रान्त पतनेन, दु खं येन तादृशेन, मयेति शेष , **सञ्चरदनेकदुष्टग्राह-दुरवगाहः** सञ्चरद्भि –उच्छलद्भि , अनेकै –बहुभि , दुष्टग्राहैः–हिंसकजलचरविशेषै , दुरवगाह –दुष्प्रवेश , **महासमुद्र-कुक्षिः** अतिविस्तृतसमुद्रोदरम् , **अवगाढः** प्रवेशकर्मतामापादित । पुन **किं** किमर्थं, **बालतपस्विनेव** अज्ञानतपोधनेन, **अनि-वारितेन्द्रियवृत्तिना** अनियन्त्रितेन्द्रियव्यापारेण, मयेति शेष , **निष्फल**• व्यर्थ , **शीतवातादिजनितः** शीतवाय्वातपाद्युप-द्रवोत्पादित , **कायक्लेशः** शरीरदु खम् , **अनुभूतः** भुक्त । पुन **अनुपदिष्टं** न केनापि धर्माचार्येणोपदिष्टम् , **अशिक्षितं** नापि कस्माच्चिद् विद्यागुरोरधीतम् , **अनभ्यस्तम्** नापि स्वयमनुशीलित मम, **इदं** प्रकृत, चापलम् , **अचिन्तितमेव** अतर्कितमेव **कुतः** कस्माद्धेतोः, **आविर्भूतं** प्रकटितम् [ च ] । **अहो** विषादविषयोऽयं, यदुत–**चित्तपरिणतेः** चित्तवृत्ते , **चञ्चलस्वभावता** प्राकृतिकचञ्चलता, पुन **अहो** प्राग्वदर्थ , एवमुत्तरत्र, **तारुण्यगते**• यौवनावस्थाया , **विकारबहुलता** विकृतिविपुलता, पुन , अहो **सुखाभिलाषाणां** सुखेच्छानां, **दुःखदायकत्वं** दु खजनकत्वम् , पुन **अहो अनधीन-तायाः** स्वतन्त्रताया , **व्यसनदानवैदग्ध्यं** सकटोत्पादनपाटवम् , पुन , अहो **दर्पोद्रेकविलसितानां** गर्वातिशयविला-साना, **कार्यपरिणतिविचारविद्वेषः** क्रियाफलविवेकवैरम् , पुन , अहो **दैवप्रातिकूल्यस्य** भाग्यप्रतिकूलताया , **मति-विपर्ययप्रदानतात्पर्यं** बुद्धिवैपरीत्यापादनतत्परत्वम् । **तादृशस्य** मत्कल्याणपरिणामिन , **तस्य** अनुभूतस्य, **तातप्रयत्नस्य** मत्पितु प्रयासस्य, पुन **तस्य** स्वकृतस्य, **विद्याभ्यासस्य** शास्त्रानुशीलनस्य, पुन **तस्य** स्वकृतस्य, **नीतिशास्त्रश्रवणस्य** नीतिशास्त्राध्ययनस्य, पुन **तस्य** स्वकृतस्य, **हेयोपादेयतत्त्वपरिज्ञानस्य** हेयं–त्याज्यम् , अनिष्टसाधनमिति यावत् , उपादेय-ग्राह्यमिष्टसाधनमिति यावत्, तयोर्यत् तत्त्वं–याथार्थ्यं, तत्परिज्ञानस्य तन्निर्णयस्य, पुन **तेषां** गृहीताना, **वृद्धोपदेशाना** गुरुजनानुशासनानाम् , पुन **तस्या**• उपासिताया **विदग्धजनसंगते**• विद्वज्जनसगस्य, पुन **तस्य** स्वसाक्षिकस्य, **निसर्ग-**

पुरुषाः । कथं च हृदयदाहलङ्घितानुवृत्तीनामनुल्लङ्घनीयवचसां वृद्धबन्धूनामधोमुखेन सदसि सोढव्याः श्रवणपरुषा रोषतिरस्काराः, सर्वथा धिग् मां चापलोपहतमनात्मज्ञमुत्सृष्टाभिमानमसमीहितकारिणम्, अनेनाप्यदृष्टशिष्टव्यवहारेण सर्वदा प्राकृतलोकसहवासिना तारकेण तरल इति कुतूहलीति क्रीडनशील इति संभावितम्' [झ] । इत्याद्यनल्पमनेकसंकल्पकवलितचित्तवृत्तेश्चिन्तयत एव मे जगाम परिणाममप्रतर्कितैव रजनिः । ऊर्ध्वकिरणरज्जुस्तम्बलम्बमानशशिबिम्बनाङ्गरादपरदिग्भागयानपात्रादवततार सांयात्रिक इव कृताम्बरजलधियात्रः शनैः शनैरन्धकारः । किं वृथा नदसि, मथने यदि मया रत्नानि ते कक्षीकृतानि तदुत्क्षिपैतदित्यवतार्य शिरसः पुरो मन्दरक्षितिभृता क्षिप्तमुत्तरीयक्षौममिव पिण्डीकृतमिन्दुमण्डलमाकुलाकुलप्रसारितोर्मिहस्तो जग्राह जलधिः । प्रमुख एव प्रवृत्तमेषस्य ततश्चलितसरोहिणीकवृषस्य क्वापि क्वापि विभाव्यमानतुलाधनुषः

---

टिप्पनकम्—[ प्रवृत्तमेषस्य मेष –अज', ] मेषराशिश्च, चलितसरोहिणीकवृषस्य एकत्र रोहिणी–नक्षत्रम्, वृष'-राशि, अन्यत्र रोहिणी-सुरभि, वृष –गौ । विभाव्यमानतुलाधनुषः एकत्र तुला-धनुषी राशी, अन्यत्र तुला-प्रसिद्धैव, धनुश्च–कार्मुकम् [ ञ ] ।

---

मयेति शेष, राज्यचिन्तकाः राज्यसचालका, प्रधानपुरुषाः मन्त्रिजना, कथं केन प्रकारेण, प्रसादनीयाः अनुनेतव्या । कीदृशा ? दुर्विनयजनितोद्वेगाः मदीयदुर्विनीततोत्पादितान्त क्षोभा, पुन स्वतन्त्र• स्वेच्छाचारी, इति कृत्वा मत्वा, तूष्णीमेव किमप्यकथयित्वैव, समर्पितस्वाधिकारमुद्राः प्रत्यर्पितस्वस्वाधिकारज्ञापकचिह्नविशेषा । च पुन, वृद्धबन्धूनां वयसा श्रेष्ठबन्धुजनाना, श्रवणपरुषाः कर्णकठोरा, रोषतिरस्काराः क्रोधप्रयुक्तानादरवाक्यानि, सदसि सभायाम्, अधोमुखेन अवनतवदनेन सता, मयेति शेष, कथं केन प्रकारेण, सोढव्याः सहनीया, कीदृशाम् ? हृदयदाहलङ्घितानुवृत्तीनां हृदयदाहेन–अन्तस्तापेन, लङ्घिता–त्यक्ता, अनुवृत्ति –अनुसरणं यैस्तादृशानाम्, पुन अनुल्लङ्घनीयवचसाम् अतिरस्करणीयवाक्यानाम् । चापलोपहतं चाञ्चल्यदूषितम्, पुन अनात्मज्ञम् आत्मपरिचयरहितम्, पुन उत्सृष्टाभिमान त्यक्तस्वाभिमानम्, पुन असमीहितकारिणं स्वानभिमतकारिण, मा, सर्वथा सर्वप्रकारेण, धिक् निन्दा, अदृष्टशिष्टव्यवहारेण अपरिचितशिष्टाचारेण, सर्वदा सर्वकाले, प्राकृतलोकसहवासिना नीचजनससर्गिणा, अनेन प्रत्यक्षवर्तिना, तारकेणापि, तरलः अय चपल इति, पुन कुतूहली अय फलनिरपेक्षलोलुप इति, क्रीडनशीलः अयं क्रीडाप्रकृतिक इति, सम्भावितम् उत्कटोक्तकोट्या शङ्कितम् [ झ ] । अनेकसंकल्पकवलितचित्तवृत्तेः भूरिभावनाक्रान्तमनोवृत्ते, मे मम, इत्यादि अनुपदोक्तप्रभृतिकम्, अनल्पं प्रचुरं च, चिन्तयतः आलोचयत सत एव, अप्रतर्कितैव अवितर्कितैव, रजनि• रात्रि, परिणामं समाप्तिं, जगाम प्राप । ऊर्ध्वकिरणरज्जुस्तम्बलम्बमानशशिबिम्बनाङ्गरात् ऊर्ध्वात्–उपरितनात्, किरणरूपरज्जुमयस्तम्बात्, लम्बमान–नमत्, शशिबिम्बरूपं–चन्द्रमण्डलात्मकं, नाङ्गरं यानपात्रावष्टम्भकशिला यस्य तादृशात्, अपरदिग्भागयानपात्रात् पश्चिमदिग्भागरूपपोतात्, सांयात्रिक इव पोतवणिगिव, कृताम्बरजलधियात्रः कृताकाशरूपसमुद्रयात्र, अन्धकार, शनैः शनैः मन्दं मन्दम्, अवततार अधस्तादाजगाम । आकुलाकुलप्रसारितोर्मिहस्तः आकुलाकुल–विशेषेण व्यग्रं यथा स्यात् तथा, प्रसारित –विस्तारित, ऊर्मिरूप –तरङ्गात्मक, हस्तो येन तादृश, जलधिः समुद्र, इन्दुमण्डलं चन्द्रबिम्बं, जग्राह गृहीतवान्, कीदृशमिव ? 'किं किमर्थं, वृथा मुधा, नदसि जल्पसि, मथने विलोडनावसरे, ते तव सागरस्य, रत्नानि, यदि, मया मेरुणा, कक्षीकृतानि गृहीत्वा वस्त्राञ्चले गोपितानि, तत् तर्हि, एतद् प्रत्यक्षं दीयमान पिण्डीकृतोत्तरीयक्षौममित्यर्थ, उत्क्षिप ऊर्ध्वीभावेन विस्तारय' इति एवधिया, शिरसः मस्तकाधोभागात्, अवतार्य अध कृत्वा, मन्दरक्षितिभृता मेरुगिरिणा, क्षिप्तं प्रक्षिप्तम्, पिण्डीकृतं पिण्डाकारतां नीत, उत्तरीयक्षौममिव उत्तरीयकौशेयवस्त्रमिव । प्रमुख एव आदावेव, प्रवृत्तमेषस्य प्रवृत्त –गन्तुमुद्यत, मेष –मेषराशिर्यस्मिंस्तादृशस्य, पक्षे प्रवृत्ता –गन्तुमुद्यता, मेषा –अजा प्रस्थानक्रियाविशिष्टे यस्मिन् सति तादृशस्य, ततः तदनन्तरं, चलितसरोहिणीकवृषस्य चलित –प्रस्थित, सरोहिणीक –रोहिणीनक्षत्रेण सहित, वृष –वृषराशि-

भ्रममभ्रमुकुलप्रभवाभिः करेणुभिरुपनीतसरसलवङ्गपल्लवकवलेषु सुवेलमेखलासु खेलत्सु वामनदिङ्नागवंशजेषु गजेषु [ ट ], सर्वतः प्रसृततापसाग्निहोत्रधूमान्धकारे कलशयोनिप्रसादनायायातविन्ध्यशिलालिङ्गित इवोपलक्ष्यमाणे रोहणगिरौ, प्रविष्टारुणालोकस्तोकतरलितद्वारपालवेतालेष्वसुरदेवतार्चनारम्भपिशुनमपूर्वसौरभं दिव्यकुसुमधूपामोदमुद्गिरत्सु विवरेषु, पातालचन्दनद्रुमोपवनक्रीडारागिणीभिः पन्नगाङ्गनाभिरापतन्तीभिरलभ्यान्तरेषु रसातलमलयान्तरालमार्गेषु, प्रभातमारुतापूरितरणन्मुखरपुलिनशङ्खमाले दलितशुक्तिमुक्तास्तबकिततीरभुवि जडितजलमानुषाध्यासितसबालातपतटे द्रवीभूतशार्वरतिमिरविभ्रममूर्मिविस्तारमुपसंहरति मत्सुखप्रचारार्थमिव चन्द्रास्तसमयविद्राणतेजसि तरङ्गिणीनाथे, दिवसकृतयुगावतारे तिमिरसागरादुन्मग्नां मेदिनीमिव द्रष्टुमुदयाद्रिशिखरमधिरूढे सहस्रदीधितौ, शनैः शनैश्च संधुक्षितसूर्यकान्ताश्महुतभुजि, मन्दितेन्दुमणि-

---

तीव्र –अत्यन्त , सन्तापो यस्य तथाभूत इवेत्युत्प्रेक्षा, **मन्दं मन्दं** शनै शनै , **सञ्चरति** प्रवहति सति । पुन **मुक्तमसृणमणितटीशय्येषु** मुक्ता–त्यक्ता, मसृणा–चिक्कणा, मणिनिर्मिता, तटीरूपा–स्थलीरूपा शय्या यैस्तादृशेषु, पुन **अभ्रमुकुलप्रसूताभिः** अभ्रमुसञ्ज्ञकहस्तिनीवंशजाभि , **करेणुभिः** हस्तिनीभि , **सविभ्रमं** सविलासम्, **उपनीतसरसलवङ्गपल्लवकवलेषु** उपनीत –उपस्थापित , सरसलवङ्गपल्लवरूप –स्निग्धलवङ्गलतानूतनदलरूप , कवल –ग्रासो येभ्यस्तादृशेषु, **वामनदिङ्नागवंशजेषु** वामनाख्यदिग्गजकुलप्रसूतेषु, **गजेषु** हस्तिषु **सुवेलमेखलासु** सुवेलपर्वतनितम्बेषु, **खेलत्सु** क्रीडत्सु सत्सु [ ट ] । पुन **सर्वतः** परित , **प्रसृततापसाग्निहोत्रधूमान्धकारे** प्रसृत –विस्तृत , तापसाना–तपस्विनाम् , अग्निहोत्रसम्बन्धिधूमरूपोऽन्धकारो यस्मिंस्तादृशे, **रोहणगिरौ** रोहणाचले, **कलशयोनिप्रसादनाय** अगस्त्यमुनेरनुरञ्जनाय, **आयातविन्ध्यशिलालिङ्गित इव** आयातस्य–आगतस्य, विन्ध्यस्य–विन्ध्याचलस्य, शिलाभि –प्रस्तरै , आलिङ्गित इव सश्लिष्ट इव, **उपलक्ष्यमाणे** प्रतीयमाने सति । पुन **प्रविष्टारुणालोकस्तोकतरलितद्वारपालवेतालेषु** प्रविष्टा कृतप्रवेशा , अरुणालोकेन–सूर्यतेजसा, स्तोकम्–ईषत् , तरलिता –चञ्चलिता , द्वारपाला –प्रतीहाररूपा , वेताला –पिशाचविशेषा येषु तादृशेषु, **विवरेषु** गुहासु, **असुरदेवतार्चनारम्भपिशुनम्** असुराणा–देवजातिद्विषा राक्षसाना, देवतार्चनस्य–स्वेष्टदेवत्वेन कल्पितदेवपूजाया , आरम्भस्य, पिशुनं–सूचकम् , पुन **अपूर्वसौरभम्** असाधारणसौगन्ध्यम्, **दिव्यकुसुमधूपामोदं** दिव्यानां–सुन्दराणां, कुसुमाना–पुष्पाणां, धूपानाम् अभितप्तसुगन्धिद्रव्याणा च, आमोदं–परिमलम् , **उद्गिरत्सु** उद्वमत्सु सत्सु । पुन **रसातलमलयान्तरालमार्गेषु** पातालमलयगिरिमध्यवर्तिमार्गेषु, **पातालचन्दनद्रुमोपवनक्रीडारागिणीभिः** पाताले यत् चन्दनद्रुमाणां–चन्दनवृक्षाणाम् उपवन, तस्मिन्, क्रीडानुरागवतीभि , **आपतन्तीभिः** आगच्छन्तीभि , **पन्नगाङ्गनाभिः** सर्पस्त्रीभि , **अलभ्यान्तरेषु** अप्राप्यावकाशेषु सत्सु । पुन **प्रभातमारुतापूरितरणन्मुखरपुलिनशङ्खमाले** प्रभातमारुतेन–प्रात कालिकपवनेन, आपूरिता–परिपूर्णविवरा, अत एव रणन्ती–ध्वनन्ती पुलिनशङ्खमाला–सैकतस्थलस्थितशङ्खसमूहो यस्मिंस्तादृशे, पुन **दलितशुक्तिमुक्तास्तबकिततीरभुवि** दलिताना–स्फुटिताना, शुक्तीना–तादृशशुक्तिसम्बन्धिनीभि , मुक्ताभि –मुक्तामणिभि , स्तबकिता –सजातस्तबका , तीरभू –तीरभूमिर्यस्य तादृशे, पुन **जडितजलमानुषाध्यासितसबालातपतटे** जडितै –जाड्यमापादितै , जलमानुषै –जलीयमनुष्यै , अध्यासितम्–अधिष्ठितं, सबालातपं–बालातपेन–अपरिपक्वातपेन रक्तातपेनेति यावत् सहितं, तटं–तीरं यस्य तादृशे, पुन **चन्द्रास्तसमयविद्राणतेजसि** चन्द्रास्तसमये चन्द्रतिरोभावकाले, विद्राण–विलीन, तेज –प्रभाव समृद्धिरिति यावत्, यस्य तादृशे, **तरङ्गिणीनाथे** समुद्रे, **मत्सुखप्रचारार्थमिव** सुखेन–अक्लेशेन, मत्सञ्चारार्थमिवेत्युत्प्रेक्षा, **द्रवीभूतशार्वरतिमिरविभ्रमं** द्रवीभूतस्य–स्यन्दितस्य, शार्वरतिमिरस्य–रात्रिसम्बन्ध्यन्धकारस्य, विभ्रम- विलासभूतम्, **ऊर्मिविस्तार** तरङ्गसन्तानम् , **उपसंहरति** सक्षिपति सति, पुन **दिवसकृतयुगावतारे** दिवसे–दिने, कृत , युगावतार –युगारम्भो येन तादृशे, यद्वा दिवसरूपस्य कृतयुगस्य–सत्यनामकप्रथमयुगस्यावतारे समागते सति, **सहस्रदीधितौ** सहस्रकिरणे, सूर्ये इति यावत्, **तिमिरसागरात्** अन्धकारसमुद्रात्, **उन्मग्नाम्** ऊर्ध्वमागता, **मेदिनीं** पृथ्वीं, **द्रष्टुमिव** अवलोकितुमिव, **उदयाद्रिशिखरम्** उदयाचलशिखरम्, **अधिरूढे** आरूढे सति । च पुन , **सन्धुक्षितसूर्यकान्ताश्महुतभुजि** सन्धुक्षित –उद्दीपित , सूर्यकान्ताश्महुतभुक्–सूर्यकान्तमणि-

रोद्देशम्, अतिभास्वरतया दुरालोकम्, आकुलाकुलेक्षणैरुत्थाय सर्वैः समकालमौर्वानलार्चिःशङ्कया निभालितं भालतटविनिहिताग्रहस्तच्छत्रकैः कैवर्तैः संवर्तकालसंध्यासदृशमत्यद्भुतं प्रभाराशिमपश्यम् [ ड ]।

दृष्ट्वा चोपजातकौतुकः किमेतदिति वितर्कयन्नेव तस्मादर्कमण्डलादिव मयूखनिवहमेकहेलया विनिर्गतम्, आगच्छदभिमुखमाकाशमार्गेण, संतानकनमेरुमन्दारकुसुमप्रायशेखरं, हरिचन्दनरसप्रायाङ्गरागं, कल्पद्रुमांशुकप्रायनिवसनम्, अनेकदिव्याभरणभूषितम्, आभरणमणिकिरणप्रभासंतर्पितेन प्रसर्पता सर्वतस्तप्ततपनीयद्रवाकारेण देहद्युतिप्राग्भारेण पिङ्गलीकृताखिलदिगन्तरालं सदावानलमिवान्तरिक्षमादधानम्, उज्ज्वालदावानलानुलग्नदग्धस्थलाभेन जलनिधिवेलावनान्यपहाय युगपत्प्रधावितेन पृष्ठतो वहता विलेपनामोदाकृष्टेन मधुलिहां पटलेन पश्चात्प्रयायिभिरुन्नीयमानगतिमार्गम् [ ढ ], आदराकृष्टवल्गैर्वारंवारमुच्छलज्जलच्छटास्पर्शपरिहाराय तरुणवारिदानामन्तरालेन नीयमानैरनुद्धूतधूलीपटलमश्रूयमाणमुखरखुरपुटारवमतिवल्गु वल्गद्भिः

---

ऊर्ध्वदेशो यस्य तादृशम्। पुन **अतिभास्वरतया** अतिदीप्रतया, **दुरालोकं** दुर्दर्शम्। पुन **और्वानलार्चिःशङ्कया** वाडवाग्निज्वालाशङ्कया, **आकुलाकुलेक्षणैः** अत्यन्तचकितनयनै, पुन **भालतटविनिहिताग्रहस्तच्छत्रकैः** भालतटे-ललाटतटे, विनिहित-स्थापितम्, अग्रहस्तच्छत्र-हस्ताग्रभागरूप छत्रं यैस्तादृशै, सर्वै, **कैवर्तैः** धीवरै, उत्थाय, **समकालमेव** युगपदेव, **निभालितं** विलोकितम्, पुन **संवर्तकालसंध्यासदृशं** प्रलयकालिकसन्ध्यातुल्यम् [ ड ]।

**च** पुन, **दृष्ट्वा** निरुक्तप्रभाराशिं दृष्टिगोचरीकृत्य, **उपजातकौतुकः** उत्पन्नौत्सुक्य सन्, **एतत्** तेज, **किम्** कीदृशम्, इति **वितर्कयन्नेव** विचिन्तयन्नेव, **खेचरनरेन्द्रवृन्दं** विद्याधरेन्द्रगणम्, **अद्राक्षं** दृष्टवानहम्, कीदृशम्? **अर्कमण्डलात्** सूर्यमण्डलात्, **मयूखनिवहमिव** किरणकलापमिव, **तस्मात्** प्रभामण्डलात्, **एकहेलया** युगपत्, **विनिर्गतं** विनि सृतम्। पुन आकाशमार्गेण, **अभिमुखं** सम्मुखम्, **आगच्छत्** अवतरत्। पुन **सन्तानक-नमेरु-मन्दारकुसुमप्रायशेखरं** सतानक नमेरु-मन्दारा -देववृक्षविशेषा, तेषा यानि कुसुमानि-पुष्पाणि, तत्प्राय-तत्प्रचुरं, शेखर-शिरोमाल्य यस्य तादृशम्। पुन **हरिचन्दनरसप्रायाङ्गरागम्** हरिचन्दनरसप्राय -चन्दनविशेषरसप्रचुर, अङ्गराग -अङ्गलेपो यस्य तादृशम्। पुन **कल्पद्रुमांशुकप्रायनिवसनम्** कल्पद्रुमाशुकप्राय-कल्पद्रुमसम्बन्धिसूक्ष्मश्लक्ष्णवस्त्रप्रचुरं, निवसनं-वस्त्र यस्य तादृशम्। पुन **अनेकदिव्याभरणभूषितं** विविधोत्कृष्टालङ्कारालङ्कृतम्। पुन **देहद्युतिप्राग्भारेण** शरीरकान्तिकलापेन, **पिङ्गलीकृताखिलदिगन्तरालं** पिङ्गलीकृतं-पिशङ्गीकृतम्, अखिलाना-समस्ताना, दिशाम्, अन्तरालं-मध्यं येन तादृशम्, कीदृशेन? **आभरणमणिकिरणप्रभासन्तर्पितेन** आभरणमणीनाम्-अलङ्करणमणीना, ये किरणा -रश्मय, तत्प्रभाभि, सन्तर्पितेन-सवर्धितेन, पुन **सर्वतः** परित, **प्रसर्पता** प्रसरता, **तप्ततपनीयद्रवाकारेण** तप्त यत् तपनीयं-सुवर्णं, तस्य यो द्रव -पङ्क, तदाकारेण, अत एव **अन्तरिक्षं**-गगनमण्डल, **सदावानलमिव** दावाग्निसहितमिव, **आदधानं** कुर्वाणम्। पुन **पश्चात्प्रयायिभिः** पश्चात्प्रगामिजनै, **उन्नीयमानगतिमार्गम्** उन्नीयमान -अनुमीयमान, गतिमार्ग -गमनमार्गो यस्य तादृशम्, केन? **मधुलिहां** भ्रमराणां, पटलेन-समूहेन, कीदृशेन? **उज्ज्वालदावानलानुलग्नदग्धस्थलाभेन** उत्-ऊर्ध्वं, ज्वाला यस्य तादृशेन, दावानलेन-दावाग्निना, अनुलग्नं-सबद्धं, दग्ध च यत् स्थल-स्थान, तस्येव आभा-कान्तिर्यस्य तादृशेन, पुन **जलनिधिवेलावनानि** समुद्रतटवर्तिवनानि, **अपहाय** त्यक्त्वा, **युगपत्** एककालं, **प्रधावितेन** कृतसत्वरगतिकेन, पुन **पृष्ठतः** पृष्ठभागे, **वहता** गच्छता, पुन **विलेपनामोदाकृष्टेन** विलेपनस्य-अङ्गोपलेपनद्रव्यस्य, आमोदेन-अतिसौरभेण, आकृष्टेन-वशीकृतेन [ ढ ]। पुन **प्रधानवाजिभिः** मुख्यभूताश्वै, **उह्यमाननायकम्** उह्यमान -देशान्तरं नीयमान, नायको यस्य तादृशम्, कीदृशै? **आदराकृष्टवल्गैः** आदरेण आकृष्टा वल्गा-मुखरज्जुर्यषा तादृशै, पुन **वारंवारम्** अनेकवारम्, **उच्छलज्जलच्छटास्पर्शपरिहाराय** उच्छलन्त्या -उद्वेलन्त्या, जलच्छटाया -जलधाराया, स्पर्शपरिहाराय-स्पर्शवर्जनाय, **तरुणवारिदाना** परिणतमेघानाम्, **अन्तरालेन** मध्येन, **नीयमानैः** गम्यमानै, पुन **अनुद्धूतधूलीपटलम्** अनुद्धूतम्-अनुत्क्षिप्त, धूलीपटल-धूलीसमूहो यस्मिंस्तादृश यथा स्यात् तथा, पुन **अश्रूयमाणमुखरखुरपुटारवम्** अश्रूयमाण, मुखरयो -शब्दायमानयो, खुरपुटयो -सम्पुटितखुरयो, आरव -ध्वनिर्यस्मिंस्तादृश

समूहेन सर्वतः परिवृताभिरालोहितापाङ्गतरङ्गैर्मन्दतारकापरिस्पन्दैर्लोचनारविन्दैरनुभूतदीर्घरजनिजागराभिरिव विभाव्यमानाभिरलम्बितालकश्रेणिभिरलुप्तललाटतिलकैरग्लपितौष्ठमुद्रालक्तकैराननेन्दुभिरसंपादितमनोभवाज्ञाभिरिव ज्ञायमानाभिः प्रधानावरोधसुन्दरीभिरनुगम्यमानम्, अनतिभूरिपरिवारपरिच्छदम्, उच्चलितमध्वना सुवेलाद्रेः खेचरनरेन्द्रवृन्दमद्राक्षम् [ त ] ।

दृष्ट्वा चाग्रतस्तं प्रभाराशिमत्यन्तदुरालोकं तं चापतन्तमभिमुखं खेचरलोकमुल्लसच्चित्तवृत्तिः प्रवर्तय पुरस्तान्नावमिति नियुज्य तारकं तत्क्षणमेव चलितस्तेन विस्मयस्तिमितचक्षुषा समस्तेनापि गगनचारिणां गणेन 'कोऽयं? कुतोऽयं? किमर्थमायातः? कथमिहातिदुर्गमायां नगोपकण्ठभूमावेकाकी प्रविष्टः? क्व यास्यति?' इति जल्पता परस्परमवलोक्यमानो गत्वा स्तोकमन्तरमधस्तात् तस्य भूधरस्य झटिति दृष्टवानष्टापदाद्रिशिखरभास्वराकारम्, उत्पातपवनधूननोपजातखेदानां गर्भपातमिव संवर्तकाभ्रविद्युताम्, अनवरतवारिधिसलिलशोषणोत्पन्नजाड्यस्य दाहशक्तिभ्रंशमिव वाडवाग्नेः, अमृतमथनोत्फालमन्दरास्फालितस्य रुधिरच्छटोद्गार-

---

**परिवृताभिः** परिवेष्टिताभि, कीदृशेन? **आप्रपदीनचीनकञ्चुकावच्छन्नवपुषा** आप्रपदीन –पादाग्रान्त यावत् लम्बमानो य, चीनकञ्चुक –चीनदेशीयवस्त्रनिर्मित कञ्चुक, तेन अवच्छन्नम्–आच्छादितम्, वपु –शरीरं यस्य तादृशेन, पुन **निजनिजवाहनाधिरूढेन** स्वस्ववाहने कृताधिरोहणेन, पुन **आलोहितापाङ्गतरङ्गैः** आलोहित –आरक्त, अपाङ्गतरङ्ग –नेत्रप्रान्तभागकान्तिप्रवाहो येषा तादृशै, पुन **मन्दतारकापरिस्पन्दैः** मन्द, तारकापरिस्पन्द –कनीनिकासञ्चारो येषु तादृशै, **लोचनारविन्दैः** नयनकमलै, **अनुभूतदीर्घरजनिजागराभिरिव** अनुभूता–प्राप्ता, दीर्घायाम्–आयतायां, रजन्या–रात्रौ, जागरा–जागरणं याभिस्तादृशीभिरिव, **विभाव्यमानाभिः** प्रतीयमानाभि, पुन **अलम्बितालकश्रेणीभिः** बद्धकुटिलकेशपङ्क्तिभि; पुन **अलुप्तललाटतिलकैः** अध्वस्तभालस्थालक्तकबिन्दुभि, पुन **अग्लपितौष्ठमुद्रालक्तकैः** अग्लपितम्–अप्रच्यावितम्, ओष्ठे, मुद्रालक्तकं–मुद्रात्मकम्, आलक्तकम्–रक्तद्रवो येषु तादृशै, **आननेन्दुभिः** मुखचन्द्रै, **असम्पादितमनोभवाज्ञाभिरिव** न सम्पादिता–अपरिपालिता, मनोभवस्य–कामदेवस्य, आज्ञा–अनुशासन याभिस्तादृशीभिरिव, **ज्ञायमानाभिः** उत्प्रेक्ष्यमाणाभि । पुन कीदृशम्? **अतिभूरिपरिवारपरिच्छदम्** अतिभूरि–अत्यधिक, परिवार –अमात्यादिपरिजन, परिच्छद –उपकरणं च यस्य तादृशम् । पुन **सुवेलाद्रेः** सुवेलसञ्ज्ञकपर्वतस्य, **अध्वना** मार्गेण, **उच्चलितम्** ऊर्ध्वं चलितम् [ त ] ।

**च** पुन, **अग्रतः** अग्रे, **अत्यन्तदुरालोकम्** अतिदुर्दर्शं, **तं** प्रकृतं, **प्रभाराशिं** तेज पुञ्जं, **च** पुन, **अभिमुखं** सम्मुखम्, **आपतन्तम्** आगच्छन्तं, **खेचरलोकं** विद्याधरजन, **दृष्ट्वा** दृष्टिगोचरीकृत्य, **उल्लसच्चित्तवृत्तिः** प्रमोदमानमनोवृत्ति सन्, **पुरस्तात्** अग्रे, नावं, **प्रवर्तय** प्रेरय, **इति** इत्थ, **तारकं** तत्सञ्ज्ञकं नाविक, **नियुज्य** आज्ञाप्य, **तत्क्षणमेव** तत्कालमेव, **चलितः** प्रस्थित, **विस्मयस्तिमितचक्षुषा** विस्मयेन–आश्चर्येण, स्तिमित–निश्चल, चक्षु –नेत्रं यस्य तादृशेन, **समस्तेनापि** समग्रेणापि, **तेन** प्रकृतेन, **गगनचारिणां** खेचराणां, **गणेन** समूहेन, **अयं** प्रत्यक्षवर्ती, क?, अयं **कुतः** कस्मात् स्थानात्, **किमर्थं** किमुद्देश्यकम्, **आयातः** आगत? **कथं** केन प्रकारेण, **अतिदुर्गमायाम्** अति दु खेन गम्यायाम्, **इह** अस्या, **नगोपकण्ठभूमौ** पर्वतप्रान्तभूमौ, **एकाकी** अद्वितीय, **प्रविष्टः** कृतप्रवेश सन्, **क्व** कुत्र, **यास्यति** गमिष्यति? इति **परस्परम्** अन्योऽन्यम्, **जल्पता** ब्रुवता, **अवलोक्यमानः** निरीक्ष्यमाण, **स्तोकं** किञ्चित्, **अन्तरं** दूरं, **तस्य** प्रकृतस्य, **भूधरस्य** पर्वतस्य, **अधस्तात्** अधोदेशं, **झटिति** शीघ्र, गत्वा, एकं **दिव्यं** मनोहरम्, **आयतनं** गृह, देवमन्दिरमित्यर्थ, दृष्टवान्, कीदृशम्? **अष्टापदाद्रिशिखरभास्वराकारम्** अष्टापदनामकपर्वतस्य शिखरवत्, भास्वर –दीप्र, आकारो यस्य तादृशम् । पुन **उत्पातपवनधूननोपजातखेदानाम्** उत्पातपवनेन–शुभाशुभावेदकाकस्मिकभूकम्पादिकालिकवायुना, यत् धूननं–कम्पन, तेन उपजात –उत्पन्न, खेद –वेदना यासां तादृशीना, **संवर्तकाभ्रविद्युतां** संवर्तकनामकमेघसम्बन्धितडिता, **गर्भपातमिव** गर्भस्रावमिवेत्युत्प्रेक्षा । पुन **अनवरतवारिधिसलिलशोषणोत्पन्नजाड्यस्य** अनवरत–निरन्तरं, वारिधे समुद्रस्य, सलिलशोषणेन–जलशोषणेन उत्पन्न, जाड्यं–शैत्य यस्य तादृशस्य, **वाडवाग्नेः** समुद्रस्थिताग्ने, **दाहशक्तिभ्रंशमिव** दाहशक्तिध्वंसमिवेति चोत्प्रेक्षा । पुन **अमृतमथनोत्फालमन्दरा-**

समूहेन सर्वतः परिवृताभिरालोहितापाङ्गतर
विभाव्यमानाभिरलम्बितालकश्रेणिभिरल्प्रल
ञ्जाभिरिव ज्ञायमानाभिः प्रधानावरोधसुन्
मध्वना सुवेलाद्रेः खेचरनरेन्द्रवृन्दमद्राक्षम् ।
दृष्ट्वा चाग्रतस्तं प्रभाराशिमत्यन्तट
पुरस्तान्नावमिति नियुज्य तारकं तत्क्षणमे
गणेन 'कोऽयं? कुतोऽयं? किमर्थमाया
यास्यति ?' इति जल्पता परस्परमवलोक्यमा
द्रिशिखरभास्वराकारम्, उत्पातपवनधूनने
सलिलशोषणोत्पन्नजाड्यस्य दाहशक्तिभ्रंश

परिवृताभिः परिवेष्टिताभि, कीदृशेन ?
लम्बमानो य, चीनकञ्चुक -चीनदेशीयवस्त्रनि
निजनिजवाहनाधिरूढेन स्वस्ववाहने कृता
नेत्रप्रान्तभागकान्तिप्रवाहो येषा तादृशै, पु
तादृशै, लोचनारविन्दैः नयनकमलै,
रजन्या-रात्रौ, जागरा-जागरणं याभिस्तादृशी
बद्धकुटिलकेशपङ्क्तिभि, पुन अलुलितलला
अगलपितम्-अप्रच्यावितम्, ओष्ठे, मुद्राल
असम्पादितमनोभवाज्ञाभिरिव न सम
भिरिव, ज्ञायमानाभिः उत्प्रेक्ष्यमाणाभि
परिवार -अमात्यादिपरिजन, परिच्छद -र
उच्चलितम् ऊर्ध्वं चलितम् [ त ]।
च पुन, अग्रतः अग्रे, अत्यन्त
सम्मुखम्, आपतन्तम् आगच्छन्तं, से
मनोवृत्ति सन्, पुरस्तात् अग्रे, नावं,
मेव तत्कालमेव, चलितः प्रस्थित,
तादृशेन, समस्तेनापि समग्रेणापि, तेन
अयं कुतः कस्मात् स्थानात्, किमर्थं
दु खेन गम्यायाम्, इह अस्या, नगोपप
यास्यति गमिष्यति ? इति परस्परम्
अन्तर दूरं, तस्य प्रकृतस्य, भूधरस्य
आयतनं गृह, देवमन्दिरमित्यथ, दृष्टवान
वत्, भास्वर -दीप्र, आकारो यस्य तादृश
कस्मिकभूकम्पादिकालिकवायुना, यत्
विद्युता सवर्तकनामकमेघसम्बन्धितद्दि
णोत्पन्नजाड्यस्य अनवरत-निरन्तरं,
चाडवाग्नेः समुद्रस्थिताग्ने, तादृशा



ते । वन्द्यवैभवः स कोऽपि भगवान् देवो वा दानवो वा येन
ासमये प्रवर्तितः प्रथममादरात् तेन संख्यातीतानां विश्वकर्मणां
वाऽलकापुरीमाबद्धवर्मणा रणपराजितस्य मनुष्यधर्मणः कृतं
ञशत्रिदशकोटिना समूल एवोत्पाटितः सुरशैल इति निश्चयो
ार्जितधनेन स्थानादन्यतः समाहृतमणिशिलादारुणा कारयितु-
शङ्के चात्र निष्पाद्यमाने त्रिदिवशिल्पिनामभीक्ष्णमतितीक्ष्ण-
शिलाभ्यः समन्ततः समुच्छलितानि यानि स्थूलशकलानि तैरेष
]। इति चिन्तयत्येव मयि तत्कालसत्वरकैवर्तरभसप्रेरिता
नौः । आक्रम्य च क्रमेणातिरमणीयमस्याः पर्वतनितम्बसङ्गिनं
ाध्वखेदो दिव्यदेवतायतनदर्शनप्रीतमनसमदृश्यमानुषप्रचारेषु
त्रेकचदेवद्रुमवनामोदवासितदिक्षु रत्नकूटाद्रिकटकदेशेष्वनुक्षण-

---

ापि, अङ्गीकृत्य स्वीकृत्य, पुन 'पक्षिजातियोगमपि पक्षिजातीयै
तैभिः कृतनिवासै, काल, प्रेर्यते व्यतीयते । वन्द्यवैभवः स्तुत्यैश्वर्य.,
स देवो वा, दानवो वा राक्षसो वा, अस्तीति शेष, सुकृतकर्मणा
तम् । हि यत, अस्य आयतनस्य, प्रारम्भसमये प्रारम्भावसरे, तेन
ाम् असख्यानां, विश्वकर्मणां शिल्पकुशलदेवानां, सर्गनिर्माणाय
ः ब्रह्मा, प्रवर्तितः प्रेरित, तदनु तत पश्चात्, अलकापुरीं कुबेर-
ा धृतकवचेन सता तेन, रणपराजितस्य रणे-युद्धे, पराजय प्रापितस्य,
कोशापहरणं कोशलुण्ठन कृतम्, अथ अनन्तरं, कदर्थितत्रयस्त्रि-
ाना-देवाना, त्रयस्त्रिंशत्-त्र्यधिका त्रिंशत्, कोटयो येन तादृशेन सता,
उत्पाटितः उत्खात, इति अयं, मे मम, निश्चयः विश्वास, वर्तत
ध्वकर्मणा एकेन, विश्वकर्मणा-शिल्पिदेवविशेषेण, समारब्ध-प्रवर्तितं,
तरोपार्जितधनेन प्रकारान्तरेण-उक्तादन्येन साधारणप्रकारेण, उपार्जितं
नात्, स्थानात्, समाहृतमणिशिलादारुणा समाहृता -सञ्चिता,
, येन तादृशेन, पुरुषेण, अतिभूयसापि अत्यधिकेनापि, कालेन, ईदृशम्
, न शक्य शक्तिसाध्यम् । च पुन, शङ्के सम्भावयामि, अत्र अस्मिन्
ल्पिनां स्वर्लोकशिल्पिनां, विश्वकर्मणामिति यावत्, अतितीक्ष्णकोटिभिः
ुणलौहशलाकाभि, तक्ष्यमाणाभ्यः तनूक्रियमाणाभ्य, शिखरमणि-
च्छलितानि समुत्पतितानि, यानि स्थूलशकलानि स्थूलखण्डानि, तै,
धान रत्नाकरेति सार्थकसञ्ज्ञा, लम्भितः प्रापित" [ प ]। मयि, इति
ालसत्वरकैवर्तरभसप्रेरिता तत्काल-तत्क्षण, सत्वरेण-त्वरान्वितेन,
ता, नौ, दक्षिणाम्, आयतनप्राकारभित्तिं प्रकृतप्रासादप्राकारकुड्यम्,
नप्राकारभित्ते, अतिरमणीयम् अत्यन्तसुन्दरम्, पर्वतनितम्बसङ्गिनं
अधिष्ठाय, अवस्थितायाः, तत्र नावि, [illegible] म्, अतिवाहिताध्वखेद.
अवोचम् [illegible] तमनसं निरुक्त-

नेतुमुत्थितेन चुम्बिताम्बरशिखमतिप्रांशुना शिखरेण, विततशिखरश्रेणिना सागरवीचिमालास्फालवाचालतलशिलासोपानमालेन मूलदेशासीननानारूपजलचरजातिना स्वच्छतातिरेकादात्मकरतलस्थितवदवलोक्यमानापरभागावस्थितपदार्थजातेन शुद्धजातिस्फाटिकनिर्मितेन स्फुटस्फातिना प्राकारमण्डलेन कुण्डलितम्, अमलप्राकारभित्तिलग्नैः प्रतिबिम्बकैरिव निजैरनिलवेल्लितपताकापल्लवतया प्राप्तुमुन्नतिप्रकर्षमारब्धसेवासमुचितोत्तरीयाञ्चलवीजनैरमरगिरिशृङ्गैरिव सर्वतः परिवृतं हिरण्मयैः सुरप्रासादैः [ द ], छन्दोविचितिशास्त्रमिव बृहत्या जगत्या भ्राजितं, युगान्तदिवसमिव विलसदनेकरूपकालिकान्तं, हेमन्तमिव समासन्नशिशिरवातायनालंकृतं,

---

**टिप्पनकम्**—**छन्दोविचितिशास्त्रमिव बृहत्या जगत्या** छन्दोजात्या, अन्यत्र महत्या देवकुलिकाधरया। **युगान्तदिवसमिव विलसदनेकरूपकालिकान्तम्** एकत्र विलासवन्नानारूपशङ्करम्, अन्यत्र देदीप्यमाननानारूपैकपङ्क्तिकमनीयम्। **हेमन्तमिव समासन्नशिशिरवातायनालङ्कृतम्** एकत्र निकटशीतलगवाक्षभूषितम्, . । **प्रौढवादिनमिवातिविषमपत्रभङ्गविस्मायितप्रेक्षकजनम्** एकत्र दुर्विजेयपत्रकभञ्जनाश्चर्यितावलोककलोकम्, अन्यत्र दुर्लेखनीयपत्रवल्लीरचनाभेदाश्चर्यितप्रेक्षकजनम् [ ध ]।

---

**त्सारितदिशा** आभोगेन–विस्तारेण, दूरम्, उत्सारिता–उत्क्षिप्ता, दिक् येन तादृशेन, अत **तपनमण्डलं** सूर्यबिम्बम्, **आत्मनः** स्वस्य, **कलशतां** कुम्भता, **नेतुं** प्रापयितुम्, **उत्थितेनेव** उद्गतेनेव, **अतिप्रांशुना** अत्युन्नतेन, **शिखरेण** शृङ्गेण, **चुम्बिताम्बरशिखं** चुम्बिता–स्पृष्टा, अम्बरशिखा–आकाशोपरिभागो येन तादृशम्। पुन **प्राकारमण्डलेन** प्राकारसमूहेन मण्डलाकारप्राकारेण वा, **कुण्डलितं** परिवेष्टितम्, कीदृशेन ? **विततशिखरश्रेणिना** विस्तृतशिखरसमूहकेन, पुन **सागरवीचिमालास्फालवाचालतलशिलासोपानमालेन** सागरवीचिमालाया –समुद्रतरङ्गश्रेण्या, य आस्फाल –आस्फालनं, तेन वाचालतला–शब्दायमानाध स्थला, शिलासोपानमाला–प्रस्तरमयी रोहिणीश्रेणी यस्य तादृशेन, पुन **मूलदेशासीननानारूपजलचरजातिना** मूलदेशे–अधोदेशे, आसीना –उपविशन्त्य, नानारूपा –अनेकरूपा, जलचरजातय –जलजन्तुजातीया जीवा यस्मिंस्तादृशेन, पुन **स्वच्छतातिरेकात्** उज्ज्वलतोत्कर्षात्, **आत्मकरतलस्थितवत्** स्वकरतलवर्तिवस्तुवत्, **अवलोक्यमानापरभागावस्थितपदार्थजातेन** अवलोक्यमान–दृश्यमानम्, अपरभागावस्थितम्–उत्तरभागावस्थित, पदार्थजातं–वस्तुसमूहो यस्मिंस्तादृशेन, पुन **शुद्धजातिस्फाटिकनिर्मितेन** शुद्धजाति–स्वच्छजातीयं, यत् स्फाटिक–स्फटिकमणिगण, तद्रचितेन, पुन **स्फुटस्फातिना** स्फुटा स्फाति –विस्तारो यस्य तादृशेन। पुन **हिरण्मयैः** सुवर्णमयै, **सुरप्रासादैः** देवमन्दिरै, **सर्वतः** सर्वभागेषु, **परिवृतं** परिवेष्टितम्, कैरिव ? **अमलप्राकारभित्तिलग्नै** उज्ज्वलप्राकारकुड्यसङ्क्रान्तै, **निजैः** स्वकीयै, **प्रतिबिम्बकैरिव** प्रतिच्छायाभिरिव, पुन **अनिलवेल्लितपताकापल्लवतया** पवनोद्धूतपताकारूपपल्लवतया हेतुना, **उन्नतिप्रकर्षम्** उच्छ्रायोत्कर्षं, **प्राप्तुमिव** लब्धुमिव, **आरब्धसेवासमुचितोत्तरीयाञ्चलवीजनैः** आरब्ध–प्रवर्तित, सेवासमुचित–सेवायोग्यम्, उत्तरीयाञ्चलवीजनम्–उत्तरीयवस्त्राग्रभागेन वीजनं–पवनान्दोलन यैस्तादृशै, **अमरगिरिशृङ्गैरिव** सुमेरुशिखरैरिव [ द ]। पुन कीदृशम् ? **छन्दोविचितिशास्त्रमिव** छन्दोविचिति –छन्द सन्दोह, तत्सम्बन्धिशास्त्रमिव, यद्वा छन्दसा या विचिति –अन्वेषणं, तत्सम्बन्धिशास्त्रमिव, **बृहत्या** विस्तृतया, **जगत्या** आयतनाधारभूम्या, पक्षे बृहती-जगतीसञ्ज्ञकच्छन्दोभ्यां, **भ्राजितं** शोभितम्, पुन **युगान्तदिवसमिव** प्रलयदिनमिव, **विलसदनेकरूपकालिकान्तं** विलसन्तीभि –विराजमानाभि, अनेकरूपाभि –नानाकाराभि, आलिभि –पङ्क्तिभि, कान्त–सुन्दरम्, पक्षे विलसन्–विराजन्, नानारूपाभि –नानाकाराभि, कालिकाभि –चण्डिकाभि, अन्त –क्षयो यत्र, यद्वा विलसद्भि, नानारूपकै, अलिभि –भ्रमरै, [मार्कण्डेयपुराणान्तर्गतदुर्गासप्तशतीस्तुत्यन्त एकादशाध्याये] "तदाऽहं भ्रामरं रूपं कृत्वाऽसंख्येयषट्पदम्" इत्यन्यत्रोक्तदिशा भ्रमराकारधारणीभिश्चण्डीभिरिति यावत्, कान्तं–मनोहरम्, यद्वा विलसन् क्रीडन् नानारूप काल्या कान्त –शिवो यत्र तादृशम्। पुन **हेमन्तमिव** हेमन्तऋतुमिव, **समासन्नशिशिरवातायनालङ्कृतं** समासन्नै –अतिसमीपवर्तिभि, शिशिरै –शीतलै, वातायनै –गवाक्षै, पक्षे

मिव पारावारस्य, प्रलयपर्जन्यगर्जितोपजनितमौलभेदायाः कम्बुलोद्दरमिव पातालसर्गवैडूर्यभूमेः, अतुलगारुत्मत-प्रायघटितोद्भ्रमविकटपीठम्, अध्यासितपीठबन्धमध्यया रसातलत्रिपथगातरङ्गमालयेव गगनमवलोकयितु-मुत्सर्पिण्या चन्द्रकान्तमणिशिलासोपानमालया विराजितोदारमण्डपद्वारावतारमार्गम्, अनेकमाणिक्यमय-वारणकभूषितम् [प], अनिमेषलोचनाभिरतिशायितविश्वकर्मकौशलं शिल्पनिर्माणमवलोकयितुममरलोका-दुपागताभिः स्वर्गरमणीभिरिव मणिशिलाशालभञ्जिकाभिरध्यासिताभङ्गपुष्परागपाषाणस्तम्भशिखरम्, उपरि घूर्णन्तीभिरर्णवोदकपानकालीभिरुज्ज्वलमरकतमालाभिरापादितावसनवर्तिकृत्यैर्मङ्गलरुचिरकलशैः पद्मरागकलशैः प्रकाशिताजस्रदीपोत्सवविलासम्, अविरलोद्गीर्णसुरचापचक्रकृतकलापापलापेषु वज्रमणिशलाकाजालकेषु कूजितानुमितनिलीननीलकण्ठम्, आशामुखव्यापिनि महानीलाश्मयोनेरामलसारकस्य घनदुर्दिनश्यामले प्रभाचक्रवाले बलाकायमानपवनलोलसितपताकम्, आभोगदूरोत्सारिततिमिरा तपनमण्डलमिवास्तमनः कलशं

---

स्फालितस्य मथनसमये–समुद्रमथनावसरे उत्कट–उद्भटः यो मन्दरः–मन्दराचलः तेन आस्फालितस्य–संक्षोभितस्य, पारावारस्य समुद्रस्य रुधिरकल्लोलोद्गारमिव रुधिरधारोद्वमनमिवेति चोत्प्रेक्षा । पुनः प्रलयपर्जन्यगर्जितोपजनित-मौलभेदायाः प्रलयपर्जन्यस्य–प्रलयकालिकमेघस्य गर्जितेन–गर्जनेन उपजनिता–उत्पादिता भेदः–विदारणं यस्यास्तस्याः पातालसर्गवैडूर्यभूमेः पातालसम्बन्धिमणिविशेषस्योत्पत्तिभूमेः कम्बुलोद्दरमिव नवाङ्कुरोद्गममिवेति चोत्प्रेक्षा । पुनः अतुलगारुत्मतप्रायघटितोद्भ्रमविकटपीठम् अतुलेन–अनुपमेन महा अपरिमितेन गारुत्मतप्रायेण–मरकतप्रायेण, घटित–रचितम् उद्भ्रमम्–उन्नतं विकटं–विशालं च पीठम् ऊर्ध्वभूमिर्यस्य तादृशम् । पुनः अध्यासितपीठबन्धमध्यया ऊर्ध्वभूमिं यावदारूढया गगनम् आकाशम्, अवलोकितुं द्रष्टुम् उत्पतितया उत्सर्पिण्या रसातल-त्रिपथगातरङ्गमालयेव पातालगङ्गातरङ्गमालयेवेत्युत्प्रेक्षा । चन्द्रकान्तमणिशिलासोपानमालया चन्द्रकान्तमणिनिर्मित-प्रस्तरसोपानपङ्क्त्या विराजितोदारमण्डपद्वारावतारमार्गे विराजितः–उद्भासितः उदारस्य–महतः मण्डपस्य द्वारविशेषस्य द्वारे अवतारमार्गः–प्रवेशमार्गो यस्य तादृशम् । पुनः अनेकमाणिक्यमयवारणकभूषितम् अनेकैः–बहुभिः माणिक्यमयैः मणिनिर्मितैः मत्तवारणकैः–वरण्डकैः वरण्डि इति ख्यातैर्वा भूषितं–शोभितम् [प] । पुनः अनिमेषलोचनाभिः अनिमेषलोचनाभिः अत एव अतिशायितविश्वकर्मकौशलम् अतिशयितं–तिरस्कृतं विश्वकर्मणः–त्वष्टुः देवशिल्पिनो वा कौशलं–नैपुण्यं येन तादृशं शिल्पनिर्माणं शिल्परचनाम् अवलोकयितुं द्रष्टुम्, अमरलोकात् देवलोकात् उपागताभिः समीपमागताभिः स्वर्गरमणीभिरिव स्वर्गसम्बन्धिसुन्दरीभिरिवेत्युत्प्रेक्षा मणिशिलाशालभञ्जिकाभिः मणिप्रस्तरनिर्मितपुत्रिकाभिः अध्यासिताभङ्गपुष्परागपाषाणस्तम्भ-शिखरम् अध्यासितम्–अधिष्ठितम् अभङ्गम्–अखण्डितं पुष्परागपाषाणस्तम्भस्य–पद्मरागमणिनिर्मितस्तम्भस्य शिखरम्–उपरिभागो यस्य तादृशम् । पुनः उपरि ऊर्ध्वं घूर्णन्तीभिः भ्रमन्तीभिः अर्णवोदकपानकालीभिः समुद्र-जलपानकृष्णवर्णाभिः पाचकमरकतमालाभिः नवीनमेघपङ्क्तिभिः आपादितावसनवर्तिकृत्यैः सम्पादितचञ्चलस्येव वर्धमाने स्वसङ्गिः दीप्यमाने अविच्छिन्नैः रूपैरिव पद्मरागकलशैः पद्मरागमणिमयकुम्भैः प्रकाशिता-जस्रदीपोत्सवविलासं प्रकाशित–प्रकटित अजस्रः–सन्ततः सततमपि दीपानां–दीपावल्याः उत्सवविलासः–उत्सवशोभा यस्मिंस्तादृशम् । पुनः अविरलोद्गीर्णसुरचापचक्रकृतकलापापलापेषु अविरलोद्गीर्णेन–निरन्तरमुद्गी-र्णेन सुरचापचक्रेण इन्द्रधनुर्गणेन कृतः कलापस्य–मयूरपिच्छस्य अपलापः–अपह्नवो येषु तादृशेषु वज्रमणिशलाका-जालकेषु हीरकमणिमयगवाक्षेषु कूजितानुमितनिलीननीलकण्ठं कूजितेन शब्दविशेषेण अनुमितः निलीनः–प्रच्छन्नः नीलकण्ठः मयूरो यस्मिंस्तादृशम् । पुनः आशामुखव्यापिनि दिङ्मुखव्यापके घनदुर्दिनश्यामले मेघाच्छन्नदिनवत् श्यामले महानीलाश्मयोनेः महानीलमणेः महानीलमणिः योनिः–उत्पत्तिस्थानं यस्य तादृशस्य आमलसारकस्य शिखरावयवविशेषस्य प्रभाचक्रवाले प्रभामण्डले बलाकायमानपवनलोलसितपताकं बला-कायमाना–बकपङ्क्तिवदाचरन्ती पवनेन–वायुना लोला–चञ्चला सिता–श्वेता पताका यस्मिंस्तादृशम् । पुनः आभोगदूरो

नेतुमुत्थितेन चुम्बिताम्बरशिखमतिप्रांशुना शिखरेण, विततशिखरश्रेणिना सागरवीचिमालास्फालवाचालतल-शिलासोपानमालेन मूलदेशासीननानारूपजलचरजातिना स्वच्छतातिरेकादात्मकरतलस्थितवदवलोक्यमानापर-भागावस्थितपदार्थजातेन शुद्धजातिस्फाटिकनिर्मितेन स्फुटस्फातिना प्राकारमण्डलेन कुण्डलितम्, अमल-प्राकारभित्तिलग्नैः प्रतिबिम्बकैरिव निजैरनिलवेल्लितपताकापल्लवतया प्राप्तुमुन्नतिप्रकर्षमारब्धसेवासमुचितोत्त-रीयाञ्चलवीजनैरमरगिरिशृङ्गैरिव सर्वतः परिवृतं हिरण्मयैः सुरप्रासादैः [द], छन्दोविचितिशास्त्रमिव बृहत्या जगत्या भ्राजितं, युगान्तदिवसमिव विलसदनेकरूपकालिकान्तं, हेमन्तमिव समासन्नशिशिरवातायनालंकृतं,

---

टिप्पनकम्—**छन्दोविचितिशास्त्रमिव बृहत्या जगत्या** छन्दोजात्या, अन्यत्र महत्या देवकुलिकाधरया । **युगान्तदिवसमिव विलसदनेकरूपकालिकान्तम्** एकत्र विलासवन्नानारूपशङ्करम्, अन्यत्र देदीप्यमाननानारूपैक-पङ्क्तिकमनीयम् । **हेमन्तमिव समासन्नशिशिरवातायनालङ्कृतम्** एकत्र निकटशीतलगवाक्षभूषितम्, ... । **प्रौढवादिनमिवातिविषमपत्रभङ्गविस्मायितप्रेक्षकजनम्** एकत्र दुर्विजेयपत्रकभञ्जनाश्चर्यितावलोककलोकम्, अन्यत्र दुर्लेखनीयपत्रवल्लीरचनाभेदाश्चर्यितप्रेक्षकजनम् [ध] ।

---

**त्सारितदिशा** आभोगेन–विस्तारेण, दूरम्, उत्सारिता–उत्क्षिप्ता, दिक् येन तादृशेन, अतः **तपनमण्डलं** सूर्यबिम्बम्, **आत्मनः** स्वस्य, **कलशतां** कुम्भता, **नेतुं** प्रापयितुम्, **उत्थितेनेव** उद्गतेनेव, **अतिप्रांशुना** अत्युन्नतेन, **शिखरेण** शृङ्गेण, **चुम्बिताम्बरशिखं** चुम्बिता–स्पृष्टा, अम्बरशिखा–आकाशोपरिभागो येन तादृशम् । पुन **प्राकारमण्डलेन** प्राकारसमूहेन मण्डलाकारप्राकारेण वा, **कुण्डलितं** परिवेष्टितम्, कीदृशेन ? **विततशिखरश्रेणिना** विस्तृतशिखर-समूहकेन, पुन **सागरवीचिमालास्फालवाचालतलशिलासोपानमालेन** सागरवीचिमालाया.–समुद्रतरङ्गश्रेण्या, य आस्फाल –आस्फालनं, तेन वाचालतला–शब्दायमानाध स्थला, शिलासोपानमाला–प्रस्तरमयी रोहिणीश्रेणी यस्य तादृशेन, पुन **मूलदेशासीननानारूपजलचरजातिना** मूलदेशे–अधोदेशे, आसीना –उपविशन्त्य , नानारूपा –अनेकरूपा , जलचरजातय –जलजन्तुजातीया जीवा यस्मिंस्तादृशेन, पुन **स्वच्छतातिरेकात्** उज्ज्वलतोत्कर्षात्, **आत्मकरतल-स्थितवत्** स्वकरतलवर्तिवस्तुवत्, **अवलोक्यमानापरभागावस्थितपदार्थजातेन** अवलोक्यमान–दृश्यमानम्, अपरभागावस्थितम्–उत्तरभागावस्थित, पदार्थजात–वस्तुसमूहो यस्मिंस्तादृशेन, पुन **शुद्धजातिस्फाटिकनिर्मितेन** शुद्धजाति–स्वच्छजातीय, यत् स्फाटिक–स्फटिकमणिगण , तद्रचितेन, पुन **स्फुटस्फातिना** स्फुटा स्फाति –विस्तारो यस्य तादृशेन । पुन **हिरण्मयैः** सुवर्णमयै , **सुरप्रासादैः** देवमन्दिरै , **सर्वतः** सर्वभागेषु, **परिवृतं** परिवेष्टितम्, कैरिव ? **अमलप्राकारभित्तिलग्नै** उज्ज्वलप्राकारकुड्यसंक्रान्तै , **निजैः** स्वकीयै , **प्रतिबिम्बकैरिव** प्रतिच्छायाभिरिव, पुन **अनिलवेल्लितपताकापल्लवतया** पवनोद्धूतपताकारूपपल्लवतया हेतुना, **उन्नतिप्रकर्षम्** उच्छ्रायोत्कर्ष, **प्राप्तुमिव** लब्धुमिव, **आरब्धसेवासमुचितोत्तरीयाञ्चलवीजनैः** आरब्ध–प्रवर्तित, सेवासमुचितं–सेवायोग्यम्, उत्तरीयाञ्चल-वीजनम्–उत्तरीयवस्त्राग्रभागेन वीजन–पवनान्दोलन यैस्तादृशै , **अमरगिरिशृङ्गैरिव** सुमेरुशिखरैरिव [द] । पुन कीदृशम् ? **छन्दोविचितिशास्त्रमिव** छन्दोविचिति –छन्द सन्दोह , तत्सम्बन्धिशास्त्रमिव, यद्वा छन्दसा या विचिति.–अन्वेषणं, तत्सम्बन्धिशास्त्रमिव, **बृहत्या** विस्तृतया, **जगत्या** आयतनाधारभूम्या, पक्षे बृहती-जगतीसञ्ज्ञकछन्दोभ्यां, **भ्राजितं** शोभितम्, पुन **युगान्तदिवसमिव** प्रलयदिनमिव, **विलसदनेकरूपकालिकान्तं** विलसन्तीभि –विराजमानाभि , अनेकरूपाभि –नानाकाराभि , आलिभि –पङ्क्तिभि , कान्त–सुन्दरम्, पक्षे विलसन्–विराजन्, नानारूपाभि –नानाकाराभि , कालिकाभि –चण्डिकाभि , अन्त –क्षयो यत्र, यद्वा विलसद्भि , नानारूपकै , अलिभि –भ्रमरै , [मार्कण्डेयपुराणान्तर्गतदुर्गासप्तशतीस्तुत्यन्त एकादशाध्याये] "तदाऽहं भ्रामरं रूपं कृत्वाऽसङ्ख्येयषट्पदम्" इत्यन्यत्रोक्तदिशा भ्रमराकारधारणीभिश्चण्डीभिरिति यावत्, कान्त–मनोहरम्, यद्वा विलसन् क्रीडन् नानारूप काल्या कान्त –शिवो यत्र तादृशम् । पुन **हेमन्तमिव** हेमन्त-ऋतुमिव, **समासन्नशिशिरवातायनालङ्कृतं** समासन्नै –अतिसमीपवर्तिभि , शिशिरै –शीतलै , वातायनै –गवाक्षै , पक्षे

नेतुमुत्थितेन चुम्बिताम्बरशिखमतिप्रांशुना शिखरेण, विततशिखरश्रेणिना सागरवीचिमालास्फालवाचालतलशिलासोपानमालेन मूलदेशासीननानारूपजलचरजातिना स्वच्छतातिरेकादात्मकरतलस्थितवदवलोक्यमानापरभागावस्थितपदार्थजातेन शुद्धजातिस्फाटिकनिर्मितेन स्फुटस्फातिना प्राकारमण्डलेन कुण्डलितम्, अमलप्राकारभित्तिलग्नैः प्रतिविम्बकैरिव निजैरनिलवेल्लितपताकापल्लवतया प्राप्तुमुन्नतिप्रकर्षमारब्धसेवासमुचितोत्तरीयाञ्चलवीजनैरमरगिरिशृङ्गैरिव सर्वतः परिवृतं हिरण्मयैः सुरप्रासादैः [ द ], छन्दोविचितिशास्त्रमिव बृहत्या जगत्या भ्राजितं, युगान्तदिवसमिव विलसदनेकरूपकालिकान्तं, हेमन्तमिव समासन्नशिशिरवातायनालंकृतं,

---

**टिप्पनकम्**—**छन्दोविचितिशास्त्रमिव बृहत्या जगत्या** छन्दोजात्या, अन्यत्र महत्या देवकुलिकाधरया । **युगान्तदिवसमिव विलसदनेकरूपकालिकान्तम्** एकत्र विलासवन्नानारूपशङ्करम्, अन्यत्र देदीप्यमाननानारूपैकपङ्क्तिकमनीयम् । **हेमन्तमिव समासन्नशिशिरवातायनालङ्कृतम्** एकत्र निकटशीतलगवाक्षभूषितम्, . । **प्रौढवादिनमिवातिविषमपत्रभङ्गविस्मायितप्रेक्षकजनम्** एकत्र दुर्विजेयपत्रकभञ्जनाश्चर्यितावलोककलोकम्, अन्यत्र दुर्लेखनीयपत्रवल्लीरचनाभेदाश्चर्यितप्रेक्षकजनम् [ ध ] ।

---

त्सारितदिशा आभोगेन–विस्तारेण, दूरम्, उत्सारिता–उत्क्षिप्ता, दिक् येन तादृशेन, अत **तपनमण्डलं** सूर्यबिम्बम्, **आत्मनः** स्वस्य, **कलशतां** कुम्भता, **नेतुं** प्रापयितुम्, **उत्थितेनेव** उद्गतेनेव, **अतिप्रांशुना** अत्युन्नतेन, **शिखरेण** शृङ्गेण, **चुम्बिताम्बरशिखं** चुम्बिता–स्पृष्टा, अम्बरशिखा–आकाशोपरिभागो येन तादृशम् । पुन **प्राकारमण्डलेन** प्राकारसमूहेन मण्डलाकारप्राकारेण वा, **कुण्डलितं** परिवेष्टितम्, कीदृशेन ? **विततशिखरश्रेणिना** विस्तृतशिखरसमूहकेन, पुन **सागरवीचिमालास्फालवाचालतलशिलासोपानमालेन** सागरवीचिमालाया –समुद्रतरङ्गश्रेण्या, य आस्फाल –आस्फालनं, तेन वाचालतला–शब्दायमानाध स्थला, शिलासोपानमाला–प्रस्तरमयी रोहिणीश्रेणी यस्य तादृशेन, पुन **मूलदेशासीननानारूपजलचरजातिना** मूलदेशे–अधोदेशे, आसीना –उपविशन्त्य , नानारूपा –अनेकरूपा , जलचरजातय –जलजन्तुजातीया जीवा यस्मिंस्तादृशेन, पुन **स्वच्छतातिरेकात्** उज्ज्वलतोत्कर्षात्, **आत्मकरतलस्थितवत्** स्वकरतलवर्तिवस्तुवत्, **अवलोक्यमानापरभागावस्थितपदार्थजातेन** अवलोक्यमान–दृश्यमानम्, अपरभागावस्थितम्–उत्तरभागावस्थितं, पदार्थजातं–वस्तुसमूहो यस्मिंस्तादृशेन, पुन **शुद्धजातिस्फाटिकनिर्मितेन** शुद्धजाति–स्वच्छजातीयं, यत् स्फाटिक–स्फटिकमणिगण , तद्रचितेन, पुन **स्फुटस्फातिना** स्फुटा स्फाति –विस्तारो यस्य तादृशेन । पुन **हिरण्मयैः** सुवर्णमयै , **सुरप्रासादैः** देवमन्दिरै , **सर्वतः** सर्वभागेषु, **परिवृतं** परिवेष्टितम्, कैरिव ? **अमलप्राकारभित्तिलग्नै** उज्ज्वलप्राकारकुड्यसङ्क्रान्तै , **निजैः** स्वकीयै , **प्रतिविम्बकैरिव** प्रतिच्छायाभिरिव, पुन **अनिलवेल्लितपताकापल्लवतया** पवनोद्धूतपताकारूपपल्लवतया हेतुना, **उन्नतिप्रकर्षम्** उच्छ्रायोत्कर्षं, **प्राप्तुमिव** लब्धुमिव, **आरब्धसेवासमुचितोत्तरीयाञ्चलवीजनैः** आरब्धं–प्रवर्तित, सेवासमुचितं–सेवायोग्यम्, उत्तरीयाञ्चलवीजनम्–उत्तरीयवस्त्राग्रभागेन वीजनं–पवनान्दोलन यैस्तादृशै , **अमरगिरिशृङ्गैरिव** सुमेरुशिखरैरिव [ द ] । पुन कीदृशम् ? **छन्दोविचितिशास्त्रमिव** छन्दोविचिति –छन्द सन्दोह , तत्सम्बन्धिशास्त्रमिव, यद्वा छन्दसां या विचिति –अन्वेषण, तत्सम्बन्धिशास्त्रमिव, **बृहत्या** विस्तृतया, **जगत्या** आयतनाधारभूम्या, पक्षे बृहती-जगतीसज्ञकछन्दोभ्यां, **भ्राजितं** शोभितम्, पुन **युगान्तदिवसमिव** प्रलयदिनमिव, **विलसदनेकरूपकालिकान्तं** विलसन्तीभि –विराजमानाभि , अनेकरूपाभि –नानाकाराभि , आलिभि –पङ्क्तिभि , कान्त–सुन्दरम्, पक्षे विलसन्–विराजन्, नानारूपाभि –नानाकाराभि , कालिकाभि –चण्डिकाभि , अन्त –क्षयो यत्र, यद्वा विलसद्भि , नानारूपकै , अलिभि –भ्रमरै , [मार्कण्डेयपुराणान्तर्गतदुर्गासप्तशतीस्तुत्यन्त एकादशाध्याये] "तदाऽहं भ्रामरं रूप कृत्वाऽसख्येयषट्पदम्" इत्यन्यत्रोक्तदिशा भ्रमराकारधारणीभिश्चण्डीभिरिति यावत्, कान्तं–मनोहरम्, यद्वा विलसन् क्रीडन् नानारूप काल्या कान्त –शिवो यत्र तादृशम् । पुन **हेमन्तमिव** हेमन्तऋतुमिव, **समासन्नशिशिरवातायनालङ्कृतं** समासन्नै –अतिसमीपवर्तिभि , शिशिरै –शीतलै , वातायनै –गवाक्षै , पक्षे

पक्षिजातियोगमपि, कृतस्थितिभिरत्र कालः प्रेर्यते । वन्द्यवैभवः स कोऽपि भगवान् देवो वा दानवो वा येन सुकृतकर्मणा निर्मापितमिदम् । अस्य हि प्रारम्भसमये प्रवर्तितः प्रथममादरात् तेन संख्यातीतानां विश्वकर्मणां सर्गनिर्माणाय भगवान् प्रजापतिः, तदनु गत्वाऽलकापुरीमावद्धवर्मणा रणपराजितस्य मनुष्यधर्मणः कृतं कार्त्स्न्येन कोशापहरणम्, अथ कदर्थितत्रयस्त्रिंशत्त्रिदशकोटिना समूल एवोत्पाटितः सुरशैल इति निश्चयो मे, नह्येकविश्वकर्मसमारब्धकर्मणा प्रकारान्तरोपार्जितधनेन स्थानादन्यतः समाहृतमणिशिलादारुणा कारयितुमतिभूयसापि कालेन कीर्तनमीदृशं शक्यम् । शङ्के चात्र निष्पाद्यमाने त्रिदिवशिल्पिनामभीक्ष्णमतितीक्ष्णकोटिभिष्टङ्किकाभिस्तक्ष्यमाणाभ्यः शिखरमणिशिलाभ्यः समन्ततः समुच्छलितानि यानि स्थूलशकलानि तैरेष लम्भितो रत्नाकराभिधानं लवणसिन्धुः [ प ]। इति चिन्तयत्येव मयि तत्कालसत्वरकैवर्तरभसप्रेरिता क्षणेनैव दक्षिणामायतनप्राकारभित्तिमाससाद नौः । आक्रम्य च क्रमेणातिरमणीयमस्याः पर्वतनितम्बसङ्गिनं पूर्वभागमवस्थितायां तत्र क्षणमात्रमतिवाहिताध्वखेदो दिव्यदेवतायतनदर्शनप्रीतमनसमदृश्यमानुषप्रचारेषु मदमत्तविविधपक्षिकुलबद्धकोलाहलेषु नित्यविकचदेवद्रुमवनामोदवासितदिक्षु रत्नकूटाद्रिकटकदेशेष्वनुक्षण-

---

पुनः **बान्धवसुहृद्वियोगमपि** बन्धुमित्रविरहमपि, **अङ्गीकृत्य** स्वीकृत्य, पुन '**पक्षिजातियोगमपि** पक्षिजातीयै सम्पर्कमपि, प्राप्य, **अत्र** अस्मिन् स्थाने, **कृतस्थितिभिः** कृतनिवासै , काल , **प्रेर्यते** व्यतीयते । **वन्द्यवैभवः** स्तुत्यैश्वर्य., **कोऽपि** अविज्ञातनामा, **भगवान्** ऐश्वर्यशाली, स देवो वा, **दानवो वा** राक्षसो वा, अस्तीति शेष , **सुकृतकर्मणा** पुण्यकर्मणा, येन, **इदम्** आयतनं, **निर्मापितं** कारितम् । हि यत , **अस्य** आयतनस्य, **प्रारम्भसमये** प्रारम्भावसरे, **तेन** निर्मापकेण भगवता, **प्रथमं** पूर्वं, **संख्यातीतानाम्** असख्याना, **विश्वकर्मणां** शिल्पकुशलदेवाना, **सर्गनिर्माणाय** सृष्टिरचनार्थं, **भगवान्** सर्गैश्वर्यवान्, **प्रजापतिः** ब्रह्मा, **प्रवर्तितः** प्रेरित , **तदनु** तत पश्चात्, **अलकापुरीं** कुबेरसम्बन्धिनीमलकानाम्नीं पुरीं, गत्वा, **आबद्धवर्मणा** धृतकवचेन सता तेन, **रणपराजितस्य** रणे–युद्धे, पराजयं प्रापितस्य, **मनुष्यधर्मणः** कुबेरस्य, **कार्त्स्न्येन** साकल्येन, **कोशापहरणं** कोशलुण्टन कृतम्, **अथ** अनन्तरं, **कदर्थितत्रयस्त्रिंशत्त्रिदशकोटिना** कदर्थिता –पराजिता , त्रिदशाना–देवाना, त्रयस्त्रिंशत्–त्र्यधिका त्रिंशत्, कोटयो येन तादृशेन सता, **समूल एव** मूलसहित एव, **सुरशैलः** सुमेरु , **उत्पाटितः** उत्खात , **इति** अयं, **मे** मम, **निश्चयः** विश्वास , वर्तत इति शेष । हि यत , **एकविश्वकर्मसमारब्धकर्मणा** एकेन, विश्वकर्मणा–शिल्पिदेवविशेषेण, समारब्ध–प्रवर्तित, कर्म–निर्माणव्यापारो येन तादृशेन, पुन **प्रकारान्तरोपार्जितधनेन** प्रकारान्तरेण–उक्तादन्येन साधारणप्रकारेण, उपार्जितं धन येन तादृशेन, पुन **अन्यतः** उक्तादन्यस्मात्, स्थानात्, **समाहृतमणिशिलादारुणा** समाहृता –सञ्चिता , मणिशिला –मणिरूपा शिला , दारूणि–काष्ठानि च, येन तादृशेन, पुरुषेण, **अतिभूयसापि** अत्यधिकेनापि, कालेन, **ईदृशम्** एवंविधं, **कीर्तनं** मन्दिरं, **कारयितुं** निर्मापयितुं, न **शक्यं** शक्तिसाध्यम् । **च** पुन , **शङ्के** सम्भावयामि, **अत्र** अस्मिन् आयतने, **निष्पाद्यमाने** निर्मीयमाणे, **त्रिदिवशिल्पिनां** स्वर्लोकशिल्पिना, विश्वकर्मणामिति यावत्, **अतितीक्ष्णकोटिभिः** अत्यन्ततीक्ष्णाग्रभागाभि , **टङ्किकाभिः** शिलातक्षणलौहशलाकाभि , **तक्ष्यमाणाभ्यः** तनूक्रियमाणाभ्य , **शिखरमणिशिलाभ्यः** शिखरवर्तिमणिरूपप्रस्तरेभ्य , **समुच्छलितानि** समुत्पतितानि, यानि **स्थूलशकलानि** स्थूलखण्डानि, तै , एष **लवणसिन्धुः** लवणसमुद्र , **रत्नाकराभिधान** रत्नाकरेति सार्थकसञ्ज्ञा, **लम्भितः** प्रापित " [ प ] । मयि, **इति** इत्थ, **चिन्तयत्येव** आलोचयति सत्येव, **तत्कालसत्वरकैवर्तरभसप्रेरिता** तत्काले–तत्क्षण, सत्वरेण–त्वरान्वितेन, कैवर्तेन–कर्णधारेण, रभसेन–वेगेन, प्रेरिता–प्रचारिता, नौ , दक्षिणाम्, **आयतनप्राकारभित्तिं** प्रकृतप्रासादप्राकारकुड्यम्, **आससाद** आजगाम । **च** पुन , **अस्याः** दक्षिणप्राकारभित्ते , **अतिरमणीयम्** अत्यन्तसुन्दरम्, **पर्वतनितम्बसङ्गिनं** पर्वतमध्यभागसपृक्त, पूर्वभाग, क्रमेण, **आक्रम्य** अधिष्ठाय, अवस्थिताया, **तत्र** नावि, क्षणमात्रम्, **अतिवाहिताध्वखेदः**

शम्[2] **आयतनदर्शनप्रीतमनसं** निरुक्त-

स दूरमुभयतः प्रसृतेन टङ्कच्छिन्नपर्वतकटकसङ्गिना प्राकारेणैव वारितः, यानि त्वस्य पार्श्वतः संभवन्ति प्रतोलिकासु क्षुद्रद्वारकाणि तान्यपि नभस्तलनिर्विशेषभित्तेरस्यैव प्राकारस्य प्रकर्षप्राप्तेन स्वच्छतागुणेन दुरुपलक्ष्यतां नीतानि, तदेतदधुना प्राप्तकालम्—अत्रैव स्थिताः प्रतिपालयामः क्षणमात्रं, यावदस्माद् देवतायतनात् कोऽपि भूगोचरः खेचरो वा निर्याति, योऽस्मभ्यमस्मिन्नवतरणमार्गमुपदिशति, अस्य चावश्यमभ्यन्तरे केनापि भवितव्यम् अचिरनिर्वृत्तयात्रोत्सवं हीदमुद्भाव्यते लिङ्गैः, तथाहि—अत्र तुङ्गत्वादधिकसंसृज्यमानसमीरणेष्वपि द्वारतोरणेषु सान्द्ररुचयश्चन्दनप्रवालवन्दनमालाः, प्रत्यग्ररचिताभिश्चीनांशुकपताकाभिः पल्लवितशिखराणि चामीकरचक्रदोलायन्त्राणि [ व ], गुणनिकाप्रासादस्य च पृष्ठवेदिकायामिन्द्रनीलमय्यामासादितप्रकटपरभागानि पिशुनयन्ति वारसुन्दरीवृन्दस्य रासविभ्रमभ्रमणमभिनवमम्लानयावकपङ्काङ्कानि पदमुद्रापरिपाटिमण्डलानि, सततमास्फालितानां च वादित्राणामारवेण विद्रावितानि त्रासात् समासन्नतरुशाखाशिखासु कृतस्थितीनि नाद्यापि निकटीभवन्ति शिखराग्रकोटरकुलायशायीनि पारापतपतत्रिकुलानि,

---

**टिप्पनकम्—प्रकटपरभागानि** प्रकाशितशोभानि। **प्रततं** विस्तीर्णं सन्ततं वा। **कुलायः**-पक्षिगृहम्। **चञ्चूर्यमाणानि** भृशार्थं गच्छन्ति, **व्यात्युक्षी** परस्परसेचनम् [ भ ]।

---

गगनमण्डलावरोधिना, **मणिस्तम्भतोरणेन** मणिमयस्तम्भावलम्बिबहिर्द्वारेण, **तिरस्कृततरणिरथसञ्चारं** तिरस्कृत—निवारित, तरणिरथसञ्चार—सूर्यरथप्रचारो येन तादृशम्, **यत्** यत, **तावद्** वाक्यालङ्कारे, इदं, **द्वारं** निरुक्तायतनप्रवेशनिर्गमस्थानम्, **अवलोक्यते** दृश्यते। **अनेन** द्वारेण, य, **अवतारः** प्रवेश, स **दूरं** दूरपर्यन्तम्, **उभयतः** भागद्वये, **प्रसृतेन** विस्तृतेन, **टङ्कच्छिन्नपर्वतकटकसङ्गिना** टङ्केन—तक्षणशलाकया, छिन्नं—नष्टं, यत् पर्वतकटक—पर्वतनितम्ब, तत्सङ्गिना-तत्सङ्गतेन, प्राकारेणैव, **वारितः** अवरुद्ध। **अस्य** द्वारस्य, **पार्श्वतः** पार्श्वे, **प्रतोलिकासु** रथ्यासु, यानि तु **क्षुद्रद्वारकाणि** लघुद्वाराणि, **सम्भवन्ति** सम्भावनागोचरीभवन्ति, तान्यपि, **नभस्तलनिर्विशेषभित्तेः** गगनतलाविशेषकुड्यस्य, अस्यैव प्राकारस्य, **प्रकर्षप्राप्तेन** उत्कर्षमापन्नेन, **स्वच्छतागुणेन** उज्ज्वलतागुणेन, **दुरुपलक्ष्यतां** दुःखेनोपलक्षणीयतां, **नीतानि** प्रापितानि। **तत्** तस्माद्धेतो, अधुना, **एतत्** इदमेव कार्यं, **प्राप्तकालं** प्राप्तावसर, वर्तत इति शेष, यत्, **अत्रैव** अस्मिन्नेव स्थाने, स्थिता सन्त, क्षणमात्रं, **प्रतिपालयामः** प्रतीक्षामहे, यावत् **अस्मात्** प्रत्यक्षभूतात्, **देवतायतनाद्** देवमन्दिरात्, कोऽपि, **भूगोचरः** भूमिवास्तव्य, मानव इत्यर्थ, **खेचरो वा** देवो वा, **निर्याति** निर्गच्छति, य, अस्मभ्यम्, **अस्मिन्** आयतने, **अवतरणमार्ग** प्रवेशमार्गम्, **उपदिशति** उपदेक्ष्यति, **च** पुन, **अस्य** आयतनस्य, **अभ्यन्तरे** मध्ये, केनापि, **अवश्यं** निश्चित, **भवितव्यं** भवितु स्थातुमुचितम्। **हि** यत, **लिङ्गैः** वक्ष्यमाणलक्षणै, **इदम्** आयतनम्, **अचिरनिर्वृत्तयात्रोत्सवम्** अचिरं—शीघ्रमेव, निर्वृत्त—सम्पन्न, यात्रोत्सव—लोकयात्राप्रयुक्त उत्सवो यस्मिंस्तादृशम्, **उद्भाव्यते** प्रत्याय्यते। तथाहि—**अत्र** अस्मिन् आयतने, **तुङ्गत्वात्** उच्चत्वात्, **अधिकसंसृज्यमानसमीरणेष्वपि** अधिक यथा स्यात् तथा, संसृज्यमान—सश्लिष्यमाण, समीरण—पवनो येषु तादृशेष्वपि, **द्वारतोरणेषु** द्वारप्रदेशवर्तिबहिर्द्वारेषु, **सान्द्ररुचयः** अमन्दद्युतय, **चन्दनप्रवालवन्दनमालाः** चन्दनपल्लवमयद्वारपूजाङ्गमाला, पुन **प्रत्यग्ररचिताभि** अभिनवनिर्मिताभि, **चीनांशुकपताकाभि** चीनदेशीयसूक्ष्मवस्त्रपताकाभि, **पल्लवितशिखराणि** व्याप्तोर्ध्वदेशानि, **चामीकरचक्रदोलायन्त्राणि** सुवर्णसमूहमयान्दोलनयन्त्राणि [ व ]। च पुन, **गुणनिकाप्रासादस्य** नृत्यगृहस्य, **इन्द्रनीलमय्यां** मरकतमणिमय्या, **पृष्ठवेदिकाया** पृष्ठवर्तिवेद्याम्, **आसादितप्रकटपरभागानि** प्राप्तस्फुटोत्कर्षाणि, **अम्लानयावकपङ्काङ्कानि** उज्ज्वलालक्तकद्रवचिह्नितानि, **पदमुद्रापरिपाटिमण्डलानि** चरणप्रतिकृतिपरम्परापटलानि, **वारसुन्दरीवृन्दस्य** वेश्यागणस्य, **अभिनवं** नवीनं, **रासविभ्रमभ्रमण** रासविभ्रमेण—नृत्यलीलया, भ्रमण, **पिशुनयन्ति** सूचयन्ति। **च** पुन, **सततं** विस्तीर्णं सतत वा, **आस्फालितानाम्** आहताना, **वादित्राणा** वाद्यानाम्, **आरवेण** ध्वनिना, **विद्रावितानि** अपसारितानि, पुन **त्रासात्** भयाद्धेतो,

स्मितविस्मयस्मेरलोचनं तारकमवोचम्—'सखे ! तारक ! लङ्घितो निर्विघ्नमेवास्माभिरेष जलनिधिः, शैलान्तरालवर्ती सर्वद्वीपसांयात्रिकाणाममार्गो मार्गः, समाक्रान्ता सुखेन दिव्यजनसंचारपूतेयं भूमिगोचराणामभूमिर्भूमिः, आसादितमिदं सर्वसुन्दरपदार्थानामधिष्ठानं स्थानम्, अवलोकितं लोकत्रयतिलकमेतत् सकलकौतुकजननमायतनम्, सर्वथा पुण्यभाजो वयम्, जातं जन्म सफलम्, उत्तिष्ठ तूर्णम्, अनुतिष्ठ सांप्रतं कालोचितं कृत्यम्, उपसृत्य पर्वतनितम्बादितः समाहर प्रत्यग्रविकसितानि सन्तानकप्रभृतीनां पुण्यपादपानां कुसुमानि, पानीयं च निर्झरादानय स्वादु, येन समाचरितपाणिपादशौचाः प्रविश्य पश्यामः पूजयामश्च भगवन्तमन्तः प्रतिष्ठितमस्य देवतायतनस्य देवम् । अत्र हि विलोकिते साक्षादभ्यर्चिते सादरेण स्तुते च परमया भक्त्या महार्घाभिः स्तुतिभिरेषा विशेषतो नः फलवती भविष्यति यात्रा' इति [ फ ] । स एवमुक्तो विहस्य मां प्रत्यभाषत—'कुमार ! सर्वं सम्पाद्यते, किं [तु] पुनरिदं विज्ञापयामि, कथमिह प्रवेष्टव्यम्, यतः पश्यदिदमवलोक्यते पुरस्तादस्य गोपुरप्रतिबद्धमम्बरोत्तम्भिना मणिस्तम्भतोरणेन विरलकनकरणिरयसंचारं द्वारम्, अनेन योऽन्तराः

---

प्रासादवर्धनमङ्गलहरणम्, पुनः रत्नकूटाग्रिमकूटकपोतेषु रत्नकूटाग्रस्पर्शोच्छलितस्तम्भप्रदेशेषु अनुसमयमिलितविस्मयस्मेरलोचनम् अनुक्षणं—प्रतिक्षणं क्षिप्ते—प्रेरिते विस्मयकारे—आश्चर्यकारके लोचने येन तादृशम्। अभितो वेतु ! अङ्कस्य मानुषप्रचारेषु मनस्समहल्लग्नमनायमनेषु, पुनः प्रवृत्तविविधपक्षिकुलकलकोलाहलेषु प्रवृत्तैः—प्रारब्धैः विविधपक्षिकुलैः—नानाविधपक्षिगणैः कलाः—निरन्तरं कृताः कोलाहला येषु तादृशेषु पुनः नित्यविकसद्देवद्रुमवनामोदवासितदिक्षु नित्यम्—अनवरतं विकसाः—पुष्पिताः ये देवद्रुमाः—देवतरवः तद्वनसम्बन्धिना आमोदेन—प्रसृतसौरभेण वासिताः—सुरभिताः दिशो येषु तादृशेषु। स्मितविस्मितः—सखे ! मित्र ! तारक ! जलनिधिशैलान्तरालवर्ती समुद्रपर्वतमध्यवर्ती सर्वद्वीपसांयात्रिकाणां सर्वेषां द्वीपमार्गेण पोतवणिजाम्, अमार्गः अगम्यः एष मार्गः निर्विघ्नमेव लङ्घितः अतिक्रान्तः । पुनः दिव्यजनसञ्चारपूता दिव्यजनाः—दिवि—स्वर्गे भवाः तेषां सञ्चारेण—प्रचारेण पूता—पवित्रिता भूमिगोचराणां मर्त्यवासिनाम्, अभूमिः अगोचरविषयभूता इयं भूमिः पृथ्वी सुखेन आनन्देन समाक्रान्ता समधिष्ठिता । पुनः सर्वसुन्दरपदार्थानाम् अशेषमनोहरवस्तूनाम्, अधिष्ठानं आश्रयभूतम् इदं स्थानं समासादितं प्राप्तम् पुनः लोकत्रयतिलकं त्रिभुवनश्रेष्ठं सकलकौतुकानाम् अशेषोत्सवानाम् अशेषाश्चर्याणां च आयतनम् आस्पदम् एतत् आयतनं प्रासादः अवलोकितं दृष्टम् । वयं सर्वथा सर्वप्रकारेण पुण्यभाजः पुण्यवन्तः स्म इति शेषः । जन्म अस्माकम् उत्पत्तिः सफलं सार्थकं जातम् अभूत् । तूर्णं शीघ्रम् उत्तिष्ठ जागृहि स्व । सांप्रतम् अधुना कालोचितम् एतत्कालयोग्यं कृत्यं कार्यम्, अनुतिष्ठ कुरु । इतः अस्मात् पर्वतनितम्बात् पर्वतमध्यभागात्, उपसृत्य गत्वा प्रत्यग्रविकसितानि नवविकसितानि सन्तानकप्रभृतीनां सन्तानकादीनां पुण्यपादपानां पुण्यरूपाणां वृक्षाणामिति यावत् कुसुमानि पुष्पाणि समाहर संचिनु । च पुनः निर्झरात् प्रवाहात् स्वादु मिष्टं पानीयं जलम् आनय येन पानीयेन समाचरितपाणिपादशौचाः प्रक्षालितपाणिपादाः सन्तः प्रविश्य अस्यायतनस्याभ्यन्तरं गत्वा भगवन्तम् ऐश्वर्यशालिनम् अस्य देवतायतनस्य देवमन्दिरस्य अन्तः प्रतिष्ठितं मध्ये प्रतिष्ठितं देवं पश्यामः दृष्टिगोचरीकुर्मः च पुनः पूजयामः आराधयाम हि यतः अत्र अस्मिन् देवे साक्षात् प्रत्यक्षरूपेण विलोकिते दृष्टे सति पुनः सादरेण विनयपूर्वेण अभ्यर्चिते सम्यक् पूजिते सति च पुनः परमया उत्कृष्टया भक्त्या प्रीत्या महार्घाभिः बहुमूल्याभिः स्तुतिभिः स्तोत्रैः स्तुते सति एषा इयं नः अस्माकं यात्रा विशेषतः अवश्यं फलवती सफला भविष्यति इति [ फ ] । एवम् अनेन प्रकारेण उक्तः कथितः सः तारकः विहस्य विशेषेण हसित्वा मां प्रत्यभाषत प्रत्युवाच, किमित्याह—कुमार ! सर्वं भवदुपदिष्टं समस्तं कार्यं सम्पाद्यते अनुष्ठीयते किं किन्तु, इदं पुनः विज्ञापयामि आवेदयामि इह अस्मिन् आयतने कथं केन प्रकारेण प्रवेष्टव्यं प्रवेष्टुं शक्यम्, अस्य आयतनस्य पुरस्तात् अग्रे गोपुरप्रतिबद्धं पुरद्वारबद्धम्, अम्बरोत्तम्भिना

सोपानमणिफलकमावद्धफालानां सीमन्तकालंकारमाणिक्यानां जवावतरणजन्मना स्वादूकृतः स्वनसंतानेन, तलिनताडिततन्त्रीध्वनिकलेन च वहलितः विलोलकुसुमापीडहेलोत्पतितानां गुञ्जतां वियति वद्धमण्डलानामलिगणानां गुङ्कृतेन, प्रत्यासन्न एव प्राकारान्तरितदर्शनस्य प्रतिक्षणमधिगताधिकाधिकव्यक्तीनां मधुरगम्भीरेण चरणपातधमधमारवेण संवर्धितः सविधमागच्छतः सोपानसंक्रमेण स्त्रैणस्य मसृणतारो नूपुराणामुच्चचार झात्कारः [ म ] ।

तदनुसारप्रहितलोचनश्च पुरः प्राकारशिखरे पुञ्जीभूताः, नातिदूरवर्तिनीः, अतिभास्वरतया कार्तस्वरपताका इव पातालादुद्यतो रविरथस्योल्लसिताः, विद्युत इवोदधिजलमवगाहमानैर्घनैरपघनेभ्यो विश्लेपिताः, दिव्यौषधीरिव मथनोत्थितस्य धन्वन्तरेर्विस्मृताः, कल्पलता इव पारिजातजन्मभूमिमवलोकयितुममरकाननादागताः, दीधितीरिवास्तसमये गभस्तिमालिनो विगलिताः, कुलिशार्चिष इव सपक्षपर्वतान्वेषणाय समुद्रमायाताः, कनककमलिनीमृणालिका इवानिर्वाणसुरवारणकवलदानार्थमिन्द्राधोरणैरुपसंगृहीताः, समुद्रजलदेवता इव प्रभातमारुतोद्वेगादातपं सेवितुमुत्थिताः, हस्तदीपिका इव धनदाधिराजस्य, अवचूलरत्नमालिका इव नभस्तल-

---

**टिप्पनकम्**—अपघन.-अङ्गम् । अनिर्वाण-मत्तः [ य ] ।

---

**स्वादूकृतः** श्रोत्रास्वाद्यतामापादित । **च** पुन , **तलिनताडिततन्त्रीध्वनिकलेन** तलिनं-स्तोकं यथा स्यात् तथा, ताडिता या तन्त्री -वीणागुण , तस्या यो ध्वनिस्तेन, कलेन-मधुरेण, **विलोलकुसुमापीडहेलोत्पतितानां** विशेषेण लोल-चञ्चलं यत्, कुसुमापीडं-पुष्पशिरोमाल्य, तस्मात् हेलया-लीलया, उत्पतितानाम्-उड्डीनाना, **गुञ्जतां** शब्दायमानाना, **वियति** आकाशे, **वद्धमण्डलानां** वद्धश्रेणीनाम्, **अलिगणानां** भ्रमरवृन्दाना, **गुङ्कृतेन** ध्वनिविशेषेण, **वहलितः** वर्धित । पुन **प्रत्यासन्न एव** निकटस्थ एव, **प्राकारान्तरितदर्शनस्य** प्राकारावरुद्धदर्शनस्य, **सोपानसंक्रमेण** सोपानमार्गेण, **सविधं** निकटम्, आगच्छत , **स्त्रैणस्य** स्त्रीसमूहस्य, **मधुरगम्भीरेण** मधुरसान्द्रेण, **चरणपातधमधमारवेण** पादप्रक्षेपणजनितध्वनिविशेषेण, **संवर्धितः** सम्यग्वर्धित [ म ] ।

**च** पुन , **तदनुसारप्रहितलोचनः** तदनुसारेण-तदनुसन्धानेन, व्यापारितनयन , **पुरः** अग्रे, **झटिति** शीघ्रं, **कन्यकाः** कुमारिका , **अद्राक्षं** दृष्टवानहम्, कीदृशी ? **प्राकारशिखरे** प्राकारोपरि, **पुञ्जीभूताः** सहृता । पुन **नातिदूरवर्तिनीः** किञ्चिन्निकटवर्तिनी । पुन **अतिभास्वरतया** अत्युज्ज्वलतया, पातालाद्, **उद्यतः** उद्गच्छत , **रविरथस्य** सूर्यरथसम्बन्धिनी , **उल्लसिता** उच्छ्रिता , **कार्तस्वरपताका इव** सुवर्णपताका इव । पुन **उदधिजलं** समुद्रजलम्, **अवगाहमानैः** प्रविशद्भि , **घनैः** मेघै , **अपघनेभ्यः** स्वशरीरावयवेभ्य , **विश्लेपिताः** विमुक्ता , **विद्युत इव** तडिल्लता इव । पुन **मथनोत्थितस्य** सागराऽऽलोडनोद्भूतस्य, **धन्वन्तरेः** स्वर्वैद्यस्य, **विस्मृताः** स्मृतिपथच्युता , **दिव्यौषधीरिव** [illegible]—मनोहरा स्वर्गीया , ओपधीरिव । पुन [illegible]रिजातजन्मभूमिं पारिजातस्य-तदाख्यदिव्यवृक्षस्य, जन्मभूमिं-समुद्ररूप[illegible]म्, **अवलोकयितुं** द्रष्टुम्, **अम**[illegible]**नात्** नन्दनवनात्, आगता , कल्पलता इव । पुन **अस्तसमये** अस्तकाले, [illegible]: सूर्यात्, **विगलिताः** [illegible]**धितीरिव** कान्तीरिव । पुन **सपक्षपर्वतान्वेषणाय** पक्षविशिष्टा[illegible], समुद्रम्, **आयाता** [illegible] **कुलिशार्चिष इव** वज्राग्निज्वाला इव । पुन **अनिर्वाणसुर**-[illegible] अनिर्वाणस्य-मज्जन[illegible]त्तस्य वा, सुरवारणस्य-इन्द्रगजस्य, ऐरावतस्येति यावत्, कवल-[illegible] **उपसंगृहीताः** सञ्चिता , **कनककमलिनीमृणालिका इव** [illegible] प्रात कालिकपवनोपद्रवाद्धेतो , **आतपं** सूर्यमरीचिं, **सेवितुम्**, [illegible]लाधिष्ठानदेवता इव । पुनः **धनदाधिराजस्य** कुबेरनृपते , [illegible]**स्तलवितानकस्य** गगनतलरूपस्योल्लोचस्य, **अवचूलरत्न**-[illegible]**सवर्णाः** सुवर्णमय यच्चम्पकं-पुष्पविशेष , तत्कलिकाया –

सोपानमणिफलकमाबद्धफालानां सीमन्तकालंकारमाणिक्यानां जवावतरणजन्मना स्वादूकृतः स्वनसंतानेन, तलिनताडिततन्त्रीध्वनिकलेन च बहलितः विलोलकुसुमापीडहेलोत्पतितानां गुञ्जतां वियति बद्धमण्डलानामलिगणानां गुङ्कृतेन, प्रत्यासन्न एव प्राकारान्तरितदर्शनस्य प्रतिक्षणमधिगताधिकाधिकव्यक्तीनां मधुरगम्भीरेण चरणपातधमधमारवेण संवर्धितः सविधमागच्छतः सोपानसंक्रमेण स्त्रैणस्य मसृणतारो नूपुराणामुच्चचार झात्कारः [ म ]।

तदनुसारप्रहितलोचनश्च पुरः प्राकरशिखरे पुञ्जीभूताः, नातिदूरवर्तिनीः, अतिभास्वरतया कार्तस्वरपताका इव पातालादुद्यतो रविरथस्योल्लसिताः, विद्युत इवोदधिजलमवगाहमानैर्घनैरपघनेभ्यो विश्लेषिताः, दिव्यौषधीरिव मथनोत्थितस्य धन्वन्तरेर्विस्मृताः, कल्पलता इव पारिजातजन्मभूमिमवलोकयितुममरकाननादागताः, दीधितीरिवास्तसमये गभस्तिमालिनो विगलिताः, कुलिशार्चिष इव सपक्षपर्वतान्वेषणाय समुद्रमायाताः, कनककमलिनीमृणालिका इवानिर्वाणसुरवारणकवलदानार्थमिन्द्राधोरणैरुपसंगृहीताः, समुद्रजलदेवता इव प्रभातमारुतोद्वेगादातपं सेवितुमुत्थिताः, हस्तदीपिका इव धनदाधिराजस्य, अवचूलरत्नमालिका इव नभस्तल-

---

टिप्पनकम्—अपघनः-अङ्गम् । अनिर्वाणः-मत्तः [ य ]।

---

**स्वादूकृतः** श्रोत्रास्वाद्यतामापादित । **च** पुन , **तलिनताडिततन्त्रीध्वनिकलेन** तलिन–स्तोकं यथा स्यात् तथा, ताडिता या तन्त्री –वीणागुण , तस्या यो ध्वनिस्तेन, कलेन–मधुरेण, **विलोलकुसुमापीडहेलोत्पतितानां** विशेषेण लोल–चञ्चलं यत्, कुसुमापीडं–पुष्पशिरोमाल्य, तस्मात् हेलया–लीलया, उत्पतितानाम्–उड्डीनाना, **गुञ्जतां** शब्दायमानाना, **वियति** आकाशे, **बद्धमण्डलानां** बद्धश्रेणीनाम्, **अलिगणानां** भ्रमरवृन्दाना, **गुङ्कृतेन** ध्वनिविशेषेण, **बहलितः** वर्धित । पुन **प्रत्यासन्न एव** निकटस्थ एव, **प्राकारान्तरितदर्शनस्य** प्राकारावरुद्धदर्शनस्य, **सोपानसंक्रमेण** सोपानमार्गेण, **सविधं** निकटम्, आगच्छत , **स्त्रैणस्य** स्त्रीसमूहस्य, **मधुरगम्भीरेण** मधुरसान्द्रेण, **चरणपातधमधमारवेण** पादप्रक्षेपणजनितध्वनिविशेषेण, **संवर्धितः** सम्यग्वर्धित [ म ]।

**च** पुन , **तदनुसारप्रहितलोचनः** तदनुसारेण–तदनुसन्धानेन, व्यापारितनयन , **पुरः** अग्रे, **झटिति** शीघ्र, **कन्यकाः** कुमारिका , **अद्राक्षं** दृष्टवानहम्, कीदृशी ? **प्राकारशिखरे** प्राकारोपरि, **पुञ्जीभूताः** संहता । पुन **नातिदूरवर्तिनीः** किञ्चिन्निकटवर्तिनी । पुन **अतिभास्वरतया** अत्युज्ज्वलतया, पातालाद्, **उद्यतः** उद्गच्छत , **रविरथस्य** सूर्यरथसम्बन्धिनी , **उल्लसिताः** उच्छ्रिता , **कार्तस्वरपताका इव** सुवर्णपताका इव । पुन **उदधिजलं** समुद्रजलम्, **अवगाहमानैः** प्रविशद्भि , **घनैः** मेघै , **अपघनेभ्यः** स्वशरीरावयवेभ्य , **विश्लेषिता.** विमुक्ता , **विद्युत इव** तडिल्लता इव । पुन **मथनोत्थितस्य** सागराऽऽलोडनोद्भूतस्य, **धन्वन्तरेः** स्वर्वैद्यस्य, **विस्मृताः** स्मृतिपथच्युता , **दिव्यौषधीरिव** दिव्या –मनोहरा स्वर्गीया , औषधीरिव । पुन **पारिजातजन्मभूमिं** पारिजातस्य–तदाख्यदिव्यवृक्षस्य, जन्मभूमिं–समुद्ररूपमुत्पत्तिक्षेत्रम्, **अवलोकयितुं** द्रष्टुम्, **अमरकाननात्** नन्दनवनात्, आगता , कल्पलता इव । पुन **अस्तसमये** अस्तकाले, **गभस्तिमालिनः** सूर्यात्, **विगलिताः** भ्रष्टा , **दीधितीरिव** कान्तीरिव । पुन **सपक्षपर्वतान्वेषणाय** पक्षविशिष्टावशिष्टपर्वतान्वेषणोद्देशेन, समुद्रम्, **आयाताः** आगता , **कुलिशार्चिष इव** वज्राग्निज्वाला इव । पुन **अनिर्वाणसुरवारणकवलदानार्थम्** अनिर्वाणस्य–मज्जनरहितस्य मत्तस्य वा, सुरवारणस्य–इन्द्रगजस्य, ऐरावतस्येति यावत्, कवलदानार्थं–ग्राससमर्पणार्थम्, **इन्द्राधोरणैः** इन्द्रहस्तिपकै , **उपसंगृहीताः** सञ्चिता , **कनककमलिनीमृणालिका इव** सुवर्णकमलिनीविसलता इव । पुन **प्रभातमारुतोद्वेगात्** प्रात कालिकपवनोपद्रवाद्धेतो , **आतपं** सूर्यमरीचिं, सेवितुम्, **उत्थिता** ऊर्ध्वमागता , **समुद्रजलदेवता इव** समुद्रजलाधिष्ठानदेवता इव । पुनः **धनदाधिराजस्य** कुबेरनृपते , **हस्तदीपिका इव** हस्ततलावलम्बितदीपिका इव । पुन **नभस्तलवितानकस्य** गगनतलरूपस्योल्लोचस्य, **अवचूलरत्नमालिका इव** अधोमुखरत्नमाला इव । **सुवर्णचम्पककलिकासवर्णाः** सुवर्णमयं यच्चम्पक–पुष्पविशेष , तत्कलिकाया –

विलासचलनेषु सर्वतः प्रसरतातिसंनिहितमुखरमणिनूपुरस्वनेन प्रभासंतानेन श्रूयमाणराजहंसरवमाकाशकमलिनीवनमिवोद्विकासमुपदर्शयन्तीम् [ल], अङ्गुलिप्रणयिपद्मरागोर्मिकारागसंवर्धितप्रभासमृद्धिभिः समन्ततः प्रसरन्तीभिरभिनवातपताम्राभिरङ्घ्रिनखमयूखलेखासंततिभिर्दाशरथिशरकृशानुकर्शितत्विषामुदधिविद्रुमलतावनानामुज्जीवनाय कुङ्कुमरसवारिकुल्यासहस्राणीव प्रवर्तयन्तीम्, अच्छकुङ्कुमरसपिञ्जरेण मसृणमाणिक्यवलयश्रेणिना जङ्घाकाण्डयुगलेन गिरितटाघातकुण्ठितमणिप्रतिममनङ्गकरिकलभदन्तद्वितयमाक्षिपन्तीम्, उभयथापि परिमण्डलोरुणा द्विधापि निविडकक्षावन्धवन्धुरेण नितम्बिना जघनविम्वेन प्रयत्ननिवसितमप्यदृश्यत्वादविद्यमानकल्पं कल्पपादपांशुकं कलयन्तीम् [व], आच्छादितोदरवलित्रयस्य हसितहारीतपक्षहरितिम्नः कञ्चुका-

---

टिप्पनकम्—ऊर्मिका-मुद्रिका । कुल्या-सारणि । **उभयथापि परिमण्डलोरुणा** द्वाभ्यां प्रकाराभ्याम्, परिमण्डलोरुणा-वृत्तबृहज्जङ्घेन वृत्तविस्तीर्णेन च । **द्विधापि निचितकक्षावन्धवन्धुरेण** घनकाञ्चीवन्धचारुणा निबिडपुरुषकक्षावन्धमनोज्ञेन च । **नितम्बिना** प्रशस्तपश्चात्कटीभागेन [ व ] ।

---

अवरुद्ध, आतपो यस्यास्तादृशीम्, कीदृशेन ? **अवलम्बमानस्थूलमुक्ताफलावचूलेन** अवलम्बमान—अवनमन्, स्थूलमुक्ताफलाना-स्थूलमुक्तामणीनाम्, अवचूल—प्रान्तविलम्बिजालको यस्मिंस्तेन, केनेव ? **परस्परानुलग्नविगलज्जलविन्दुना** परस्परानुलग्ना—परस्परसश्लिष्टा, विगलन्त—क्षरन्त, जलविन्दव—पानीयकणा यत्र तादृशेन, **गगनम्** आकाशम्, **उत्पतितेन** उड्डीनेन, **जलधिफेनपटलेनेव** समुद्रफेनपुञ्जेनेवेत्युत्प्रेक्षा । पुन **अशोकतरुपल्लवाताम्रतलस्य** अशोकवृक्षपल्लववत्, आताम्रम्—आरक्त, तलम् अध प्रदेशो यस्य तादृशस्य, **चरणपङ्कजयुगलस्य** पादपद्मद्वयस्य, **विलासचलनेषु** सविलासविक्षेपेषु, **सर्वत** परित, **प्रसरता** व्याप्नुवता, पुन **अतिसन्निहितमणिनूपुरस्वनेन** अतिसन्निहित—अतिनिकट, मणिनूपुरस्वन—मणिमयनूपुरध्वनिर्यस्य तादृशेन, **प्रभासन्तानेन** द्युतिराशिना, **श्रूयमाणराजहंसरवं** श्रूयमाण, राजहसरव—राजहसशब्दो यस्मिंस्तादृशम्, **आकाशकमलिनीवनम्** आकाशस्थकमलिनीकाननम्, **उद्विकासमिव** उत्—उत्कृष्टो विकासो यस्य तादृशमिव, **उपदर्शयन्तीं** दृष्टिगोचरता नयन्तीम् [ ल ]। पुन **अङ्घ्रिनखमयूखलेखासन्ततिभिः** पादसम्बन्धिनखकिरणपङ्क्तिसमूहै, **कुङ्कुमरसवारिकुल्यासहस्राणीव** कुङ्कुमरसरूप यद्वारि—जल, तत्कुल्यानां—तत्प्रणालिकानां, सहस्राणीव **प्रवर्तयन्तीं** प्रवाहयन्तीम्, कीदृशीभिस्तत्सन्ततिभि ? **अङ्गुलिप्रणयिपद्मरागोर्मिकारागसंवर्धितप्रभासमृद्धिभिः** अङ्गुलिप्रणयिन्या—अङ्गुलिस्निग्ध्या, पद्मरागोर्मिकाया—पद्मरागमणिमयाङ्गुलीयकस्य, रागेण—रक्ततया, सवर्धिता—सम्यग्वर्धिता, प्रभासमृद्धि—द्युतिसम्पत्तिर्यासां तादृशीभि, पुन **समन्ततः** परित, **प्रसरन्तीभि** स्फुरन्तीभि, पुन **अभिनवातपताम्राभि** बालातपवद् रक्ताभि, कस्मै फलाय ? **दाशरथिशरकृशानुकर्शितत्विषां** दाशरथे—रामस्य, शरकृशानुना—बाणाग्निना, कर्शिता—कृशतामापादिता, त्विद्—कान्तिर्येषां तादृशानाम्, **उदधिविद्रुमलतावनानां** समुद्रसम्बन्धिप्रबाललतावनानाम्, उज्जीवनाय । पुन **अच्छकुङ्कुमरसपिञ्जरेण** उज्ज्वलकुङ्कुमद्रववत् पीतवर्णेन, **मसृणमाणिक्यवलयश्रेणिना** मसृणा—स्निग्धा, माणिक्यवलयश्रेणि—रत्नमयकङ्कणपङ्क्तिर्यस्मिन् तादृशेन, **जङ्घाकाण्डयुगलेन** काण्डाकारजङ्घाद्वयेन, **गिरितटाघातकुण्ठितमणिप्रतिम** गिरितटाघातेन—पर्वतप्रदेशाघातेन, कुण्ठिता—प्रतिहता, मणिप्रतिमा—मणिनिर्मितो गजदन्तवन्धो यस्य तादृशम्, **अनङ्गकरिकलभदन्तद्वितयं** कामदेवहस्तिशावकदन्तद्वयम्, **आक्षिपन्तीं** निन्दयन्तीम् । पुन **उभयथापि** उभयप्रकारेणापि वक्ष्यमाणरूपेण, **परिमण्डलोरुणा** परिमण्डलौ—वर्तुलौ, ऊरू—जानूपरिभागौ यस्य तादृशेन, परिमण्डलं—वर्तुलम्, उरु बृहच्च, तादृशेन च, पुन **द्विधापि** प्रकारद्वयेनापि, भागद्वयेऽपीत्यर्थ, **निविडकक्षावन्धवन्धुरेण** सान्द्रपरिधानपश्चादञ्चलपल्लववन्धचारुणा घनकाञ्चीवन्धनशोभिना च, **नितम्बिना** प्रशस्तकटिपश्चाद्भागद्वयस्थौल्यशालिना, **जघनविम्वेन** कटिपुरोभागमण्डलेन, **प्रयत्ननिविसितमपि** प्रयत्नपरिहितमपि, **कल्पपादपांशुकं** कल्पवृक्षसूक्ष्मवस्त्रम्, अदृश्यत्वाद्धेतो, **अविद्यमानकल्पम्** अविद्यमानतुल्य, **कलयन्तीं** ...न्तीम् [ व ] । पुन **आच्छादितोदरवलित्रयस्य** आच्छादितम्, उदरसम्बन्धिवलित्रय—रेखात्रयं येन तादृशस्य,

श्रवणशिखरावलम्बिनं विभ्राणाम् [ स ], अविरलावदातदन्तकुड्मलममलगण्डफलकमनिलविलुलितविनीलालकालिकमनीयमनिभृतभ्रूलताविलासमुन्नतनासावंशमभिनवप्रवालपाटलाधरमुत्कलितकालागुरुतिलकशोभमाबद्धनिबिडपुष्पापीडमाक्रीडमिव रतिपतेरुभयकर्णपाशदोलायमानमाणिक्यदन्तपत्रं वदनशतपत्रमुद्वहन्तीम्, उदधिनापि तरङ्गचलिततनुशीकरक्षोदजालकेन करविधूतश्वेतचामरेणेवोपवीज्यमानाम्, प्रत्युषसापि गगनमरकतस्थालनिहितदिनकरप्रदीपेन प्रस्तुतारात्रिकेणेव कृतोपस्थानाम्, दिगन्तैरपि दूरमुल्लसितैः साभिलाषैरिव

---

**तरलितायतापाङ्गतरङ्गयोः अन्तस्तरच्चारुतारकयोः क्षीरधवलयोः [ ईक्षणमहानदीप्रवाहयोः ]** ईक्षणे-नेत्रे एव महानदीप्रवाहौ तयोः, कीदृशो ? तरलितायतापाङ्गतरङ्गयो -चञ्चलीकृतौ दीर्घनेत्रत्रिभागावेव तरङ्गौ ययोस्तौ तथोक्तौ तयो , अन्यत्र तरलितापाङ्गवत् कल्लोला ययोस्तौ तथोक्तौ तयो , तथा अन्तस्तरच्चारुतारकयो -एकत्र मध्यचलच्छोभनतारिकयो , अन्यत्रमध्यतरन्मनोज्ञोज्ज्वलजलयो , क्षीरधवलयो. समानविशेषणम् [ स ] । **अविरलावदातदन्तकुड्मलं** दन्ता एव दन्तवच्च कुड्मलानि-अविकसितकुसुमानि यत्र तत् तथोक्तम् । **अमलगण्डफलकम्** एकत्र निर्मलप्रशस्तकपोलम्, अन्यत्र निर्मलकपोलवत् फलानि यत्र तत् तथोक्तम् । **अनिलविलुलितनीलालकालिकमनीयं** वातचलितकृष्णकुटिलकेशा एव अलय -भ्रमरा , तैरेकत्र, अन्यत्र अलकवद् ये भ्रमरा , तै कान्तम् । **अनिभृतभ्रूलताविलासं** चञ्चलभ्रूविब्बोकम्, चञ्चलभ्रूलतावद् वीनां-पक्षिणा, लास -लसनं यत्र तत् तथोक्तम् । **उन्नतनासावंशम्** उच्चप्रशस्तनासिकम्, उन्नतवंश च । **अभिनवप्रवालपाटलाधर** नूतनपत्रवद् रक्तोऽधरो यत्र तत् तथोक्तम्, अन्यत्र प्रवाला एव रक्ताधरो यत्र तत्र तत् तथोक्तम् । **[ उत्कलितकालागुरुतिलकशोभं ]** उत्कलितकालागुरुविशेषकविभूषम्, अन्यत्र उत्कलितकालागुरुतिलकवृक्षशोभम् । **आबद्धनिबिडपुष्पापीडम्** एकत्र रचितगाढकुसुमसवात [ म्, आ ] **क्रीडमिव** क्रीडापर्वतमिव [ ह ] ॥

---

**शिखरावलम्बिनं** कर्णद्वयोर्ध्वदेशावलम्बिनम्, **अच्छमुक्ताफलस्तम्बं** विमलमुक्तामणिगुच्छ, **विभ्राणां** दधानाम् [स]। पुन कीदृशीम् ? **वदनशतपत्रं** मुखकमलम्, **उद्वहन्तीं** धारयन्तीम्, कीदृशमिव ? **रतिपतेः** कामदेवस्य, **आक्रीडमिव** सर्वोपभोग्योद्यानमिव, कीदृशं वदनकमल, कीदृश चोद्यानम् ? **अविरलावदातदन्तकुड्मलम्** अविरला -निरन्तरा , अवदाता -स्वच्छा , दन्तकुड्मला -दन्तरूपा विकाशोन्मुखकलिका यस्मिंस्तादृशम्, पक्षे अविरलावदातदन्ता इव कुड्मला यस्मिंस्तादृशम्, पुन **अमलगण्डफलकं** अमल-निर्मल, गण्डफलक-कपोलरूपं पट्टक, प्रशस्तकपोलमित्यर्थः, यत्र तादृशम्, पक्षे निर्मलकपोलवत् फलानि यत्र तादृशम्, पुन **अनिलविलुलितविनीलालकालिकमनीयम्** अनिलविलुलितै -वायुविचलितै , विनीलै -अतिश्यामै , अलकालिभि -कुटिलकेशरूपभ्रमरै , यद्वा अनिलविलुलिताना विनीलानाम्, अलकाना-कुटिलकेशानाम्, आल्या-पङ्क्त्या, कमनीयं-मनोहरम्, पक्षे अनिलविलुलितविनीलालकसदृशै , अलिभि -भ्रमरै , कमनीयम्, पुन **अनिभृतभ्रूलताविलासम्** अनिभृत -चपल , भ्रूलताया -नेत्रोपरितनरोमराज्या , विलास -विभ्रमो यत्र तादृशम्, पक्षे अनिभृतभ्रूलतावत् वीनां-पक्षिणां, लास -लसनं क्रीडनं यत्र तादृशम्, पुन **उन्नतनासावंशम्** उन्नत -उच्च , नासावंश -नासिकारूपवंश प्रशस्तनासिका यत्र तादृशम्, पक्षे उन्नतनासा -उच्चशब्दा , वंशा -वेणवो यत्र तादृशम्, पुन **अभिनवप्रवालपाटलाधरम्** अभिनवप्रवालवत्-नूतनपल्लववद् नूतनप्रवालाभिधरक्तमणिवत्, पाटलाधर -रक्तवर्ण ओष्ठो यस्मिंस्तादृशम्, पक्षे नूतनपल्लवयुक्तपाटलाभिधवृक्षधारकम्, पुन **उत्कलितकालागुरुतिलकशोभम्** उत्कलिता-उद्भासिता, कालागुरुतिलकेन-सुरभिद्रव्यविशेषकृततिलकेन, शोभा-चारुता यत्र तादृशम्, पक्षे उत्कलिता -विकसिता ये कालागुरुवृक्षा , ये च तिलकवृक्षा , तै शोभा यत्र तादृशम्, पुन **आबद्धनिबिडपुष्पापीडम्** रचितघनपुष्पशिरोमाल्यम्, पक्षे आबद्धानि-वृक्षाग्रसंबद्धानि, निबिडानि पुष्पाणि एव, आपीड -शिरोमाल्य यस्य तादृशम्, पुन **उभयकर्णपाशदोलायमानमाणिक्यदन्तपत्रम्** उभयकर्णपाशयो -शोभनोभयकर्णयो , दोलायमान-दोलन कुर्वत्, माणिक्यदन्तपत्र-माणिक्यमय दन्तपत्रं-कुन्दपुष्प यस्य तादृशम् । पुन **उदधिनापि** समुद्रेणापि, **तरङ्गचलिततनुशीकरक्षोदजालकेन** तरङ्गोच्छलितेन सूक्ष्मकर्णचूर्णपुञ्जेन, **करविधूतश्वेतचामरेणेव** हस्तोत्क्षिप्तशुभ्रचामरेणेव, **उपवीज्यमानां** पवनेन संयोज्यमानाम् । पुनः

कौक्षेयकम् संस्कृत रूप है। इसके प्राकृत रूप कुच्छेअयं और कोच्छेअयं होते हैं। इनमें से प्रथम रूप में सूत्र संख्या १ १६१ से वैकल्पिक रूप से औ के स्थान पर 'उ' की प्राप्ति १७ से क्ष् के स्थान पर 'छ' का आदेश, २-८९ से प्राप्त 'छ' का द्वित्व 'छ्छ' २ ९० से प्राप्त पूर्व छ का 'च्', १ ७७ से 'य्' और 'क' का लोप, १ १८० से शेष अन्त्य 'अ' के स्थान पर 'य' की प्राप्ति ३-२५ से प्रथमा विभक्ति के एक वचन में नपुंसकलिंग में सि प्रत्यय के स्थान पर म्' प्रत्यय की प्राप्ति और १ २३ से प्राप्त 'म्' का अनुस्वार होकर प्रथम रूप कुच्छेअयं सिद्ध हो जाता है।

द्वितीय रूप ( कोच्छेअयं ) में सूत्र संख्या १ १५९ से 'औ' के स्थान पर 'ओ' की प्राप्ति शेष सिद्धि प्रथम रूप के समान ही जानना यों कोच्छेअयं रूप सिद्ध हुआ॥ १६१॥

## अउ पौरादौ च ॥ १ १६२ ॥

कौक्षेयके पौरादिषु च औत अउरादेशो भवति॥ कउच्छेअयं ॥ पौर । पउरो । पउर-जणो ॥ कौरवः । कउरवा ॥ कौशलम् । कउसलं । पौरुषम् । पउरिसं ॥ सौधम् । सउहं ॥ गौड । गउडो ॥ मौलि । मउली ॥ मौनम् । मउणं ॥ सौरा । सउरा ॥ कौला । कउला ॥

अर्थ —कौक्षेयक' पौर जन' कौरव' कौशल, पौरुष' सौध गौड और कौल इत्यादि शब्दों में रहे हुए 'औ' के स्थान पर 'अउ' का आदेश होता है। जैसे-कौक्षेयकम्=कउच्छेअयं, पौर=पउरो, पौर-जन=पउर-जणो' कौरव =कउरवो' कौशलम्=कउसलं पौरुषम्=पउरिसं' सौधम्=सउहं, गौड=गउडो मौलिः=मउली मौनम्=मउणं' सौरा=सउरा और कौला=कउला इत्यादि॥

कौक्षेयकम् संस्कृत रूप है। इसका प्राकृत रूप कउच्छेअयं होता है। इसमें सूत्र संख्या १६२ से 'औ' के स्थान पर 'अउ' का आदेश और शेष-सिद्धि सूत्र संख्या १ १६१ में लिखित नियमानुसार जानना। यों कउच्छेअयं रूप सिद्ध होता है।

पौर संस्कृत शब्द है। इसका प्राकृत रूप पउरो होता है। इस में सूत्र संख्या १ १६२ से 'औ' के स्थान पर 'अउ' का आदेश और ३-२ से प्रथमा विभक्ति के एक वचन में पुल्लिंग में सि प्रत्यय के स्थान पर ओ प्रत्यय की प्राप्ति होकर पउरो रूप सिद्ध हो जाता है।

पौर जन संस्कृत रूप है। इसका प्राकृत रूप पउर-जणो होता है। इसमें सूत्र संख्या १ १६२ से 'औ' के स्थान पर अउ की प्राप्ति १ २२८ से न का 'ण' और ३-२ से प्रथमा विभक्ति के एक वचन में पुल्लिंग में 'सि' प्रत्यय के स्थान पर 'ओ' प्रत्यय की प्राप्ति होकर पउर-जणो रूप सिद्ध हो जाता है।

कौरवः संस्कृत रूप है। इसका प्राकृत रूप कउरवो होता है। इसमें सूत्र संख्या १ १६२ से 'औ' के स्थान पर 'अउ' की प्राप्ति और ३-२ से प्रथमा विभक्ति के एक वचन में पुल्लिंग में सि प्रत्यय के स्थान पर 'ओ' प्रत्यय की प्राप्ति होकर कउरवो रूप सिद्ध हो जाता है।

*कौशलम्* सस्कृत रूप है। इसका प्राकृत रूप कउसल होता है। इसमे सूत्र संख्या १-१६२ से 'औ' के स्थान पर 'अउ' का आदेश, १-२६० से 'श' का 'स'; ३-२५ से प्रथमा विभक्ति के एक वचन में नपुंसक लिग मे 'सि' प्रत्यय के स्थान पर 'म्' प्रत्यय की प्राप्ति और १-२३ से प्राप्त 'म्' का अनुस्वार होकर *कउसलं* रूप सिद्ध हो जाता है।

पउरिस रूप की सिद्धि सूत्र संख्या १-१११ में की गई है।

*सौधम्* संस्कृत रूप है। इसका प्राकृत रूप सउहं होता है। इसमे सूत्र संख्या १-१६२ से 'औ' के स्थान पर 'अउ' का आदेश, १-१८७ से 'ध' का 'ह', ३-२५ से प्रथमा विभक्ति के एक वचन में नपुंसक लिंग में 'सि' प्रत्यय के स्थान पर 'म्' प्रत्यय की प्राप्ति और १-२३ से प्राप्त 'म्' का अनुस्वार होकर *सउहं* रूप सिद्ध हो जाता है।

*गौडः* संस्कृत रूप है। इसका प्राकृत रूप गउडो होतो है। इस में सूत्र सख्या १-१६२ से 'औ' के स्थान पर 'अउ' का आदेश और ३-२ से प्रथमा विभक्ति के एक वचन में पुल्लिग में 'सि' प्रत्यय के स्थान पर 'ओ' प्रत्यय की प्राप्ति होकर *गउडो* रूप सिद्ध हो जाता है।

*मौलिः* संस्कृत रूप है। इसका प्राकृत रूप मउली होता है। इसमें सूत्र संख्या १-१६२ से 'औ' के स्थान पर 'अउ' का आदेश और ३-१६ से प्रथमा विभक्ति के एक वचन मे पुल्लिग में 'सि' प्रत्यय के स्थान पर अन्त्य ह्रस्व स्वर 'इ' की दीर्घ 'ई' होकर *मउली* रूप सिद्ध हो जाता है।

*मौनम्* : संस्कृत रुप है। इसका प्राकृत रूप मउणं होता है। इसमें सूत्र-सख्या १-१६२ से 'औ' के स्थान पर 'अउ' का आदेश, १ २२८ से 'न' का 'ण', ३-२५ से प्रथमा विभक्ति के एक वचन में नपुंसकलिंग में 'सि' प्रत्यय के स्थान पर 'म्' प्रत्यय की प्राप्ति और १-२३ से प्राप्त 'म्' का अनुस्वार होकर *मउणं* रूप सिद्ध हो जाता है।

*सौराः* सस्कृत रूप है। इसका प्राकृत रूप सउरा होता है। इसमें सूत्र संख्या १-१६२ से 'औ' के स्थान पर 'अउ' की आदेश प्राप्ति, ३-४ से प्रथमा विभक्ति के बहु वचन में पुल्लिग में में 'जस्' प्रत्यय की प्राप्ति और उसका लोप, ३-१२ से प्राप्त और लुप्त जस् प्रत्यय की प्राप्ति के कारण से अन्त्य ह्रस्व स्वर 'आ' होकर *सउरा* रूप सिद्ध हो जाता है।

*कौलाः* सस्कृत रूप है। इसका प्राकृत रूप कउला होता है। इसमें सूत्र-संख्या १-१६२ से 'औ' के स्थान पर 'अउ' की आदेश प्राप्ति, ३-४ से प्रथमा विभक्ति के बहुवचन में पुल्लिग मे 'जस्' प्रत्यय की प्राप्ति और उसका लोप, ३-१२ से प्राप्त और लुप्त जस् प्रत्यय के कारण से अन्त्य ह्रस्व स्वर 'अ' का दीर्घ स्वर 'आ' होकर *कउला* रूप सिद्ध हो जाता है।

## आच्च गौरवे ॥ १–१६३ ॥

**गौरव शब्दे औत आत्वम् अउश्च भवति ॥ गारवं गउरवं ॥**

*अर्थ*—गौरव शब्द में रहे हुए 'औ' के स्थान पर क्रम से 'आ' अथवा 'अउ' की प्राप्ति होती है। जैसे-गौरवम्=गारवं और गउरवं ॥

*गौरवम्* संस्कृत रूप है। इसके प्राकृत रूप गारवं और गउरवं होते हैं। इनमें से प्रथम रूप में सूत्र संख्या १-१६३ से वैकल्पिक पक्ष होने से 'औ' के स्थानपर 'आ' की प्राप्ति; ३-२५ से प्रथमा विभक्ति के एक वचन में नपुंसक लिंग में सि प्रत्यय के स्थान पर 'म्' प्रत्यय की प्राप्ति और १-२३ से प्राप्त 'म्' का अनुस्वार होकर *गारवं* रूप सिद्ध हो जाता है।

द्वितीय रूप (गउरवं) में सूत्र संख्या १-१६३ से ही वैकल्पिक पक्ष होने से 'औ' के स्थानपर 'अउ' की प्राप्ति और शेष सिद्धि प्रथम रूप के समान ही जानना। इस प्रकार द्वितीय रूप *गउरवं* भी सिद्ध हो जाता है। ॥१-१६३॥

## नाव्यावः ॥ १-१६४ ॥

**नौ शब्दे औत आवादेशो भवति ॥ नावा ॥**

*अर्थ*—नौ शब्द में रहे हुए 'औ' के स्थान पर 'आव' आदेश की प्राप्ति होती है। जैसे-नौ=नावा ॥

*नौ* संस्कृत रूप है। इसका प्राकृत रूप नावा होता है। इसमें सूत्र संख्या १-१६४ से 'औ' के स्थान पर 'आव' आदेश की प्राप्ति; १-१५ स्त्री लिंग रूप-रचना में 'आ' प्रत्यय की प्राप्ति' संस्कृत विधान से प्रथमा विभक्ति के एक वचन में प्राप्त 'सि' प्रत्यय में स्थित 'इ' की इत्संज्ञा और १-११ से शेष अन्त्य व्यञ्जन 'स्' का लोप होकर *नावा* रूप सिद्ध हो जाता है।

## एत् त्रयोदशादौ स्वरस्य सस्वर व्यञ्जनेन ॥ १-१६५ ॥

**त्रयोदश इत्येवंप्रकारेषु संख्या शब्देषु आदेः स्वरस्य परेण सस्वरेण व्यञ्जनेन सह एत् भवति ॥ तेरह । तेवीसा । तेतीसा ॥**

*अर्थ*—त्रयोदश इत्यादि इस प्रकार के संख्या वाचक शब्दों में आदि में रहे हुए 'स्वर' का पर वर्ती स्वर सहित व्यञ्जन के साथ 'ए' हो जाता है। जैसे-त्रयोदश=तेरह; त्रयोविंशति=तेवीसा और त्रयस्त्रिंशत्=तेतीसा। ॥ इत्यादि ॥

*त्रयोदश* संस्कृत विशेषण है। इसका प्राकृत रूप तेरह होता है। इसमें सूत्र संख्या २-७९ से 'र्'

में स्थित 'र्' का लोप, १-१६५ से शेष 'त' मे स्थित 'अ' का और 'यो' के लोप के साथ 'ए' की प्राप्ति; १-२१९ से 'द' के स्थान पर 'र' का आदेश, और १-२६२ से 'श' के स्थान पर 'ह' का आदेश होकर तेरह रूप सिद्ध हो जाता है।

*त्रयोविंशति* संस्कृत विशेषण है। इसका प्राकृत रूप तेवीसा होता है। इसमे सूत्र संख्या २-७९ से 'त्र' में स्थित 'र्' का लोप, १-१६५ से शेष 'त' मे स्थित 'अ' का और 'यो' के लोप के साथ 'ए' की प्राप्ति; १-२८ से अनुस्वार का लोप; १-९२ से ह्रस्व इ' को दीर्घ 'ई' की प्राप्ति और इसी सूत्र से 'तिं' का लोप, १-२६० से 'श' का 'स'; ३-१२ से 'जस्' अथवा 'शस्' प्रत्यय की प्राप्ति होने से अन्त्य 'अ' का 'आ', और ३-४ से प्राप्त 'जस्' अथवा 'शस्' प्रत्यय की प्राप्ति होकर एव इनका लोप हो जाने से *तेवीसा* रूप सिद्ध हो जाता है।

*त्रयस्त्रिंशत्* सस्कृत विशेषण रूप है। इसका प्राकृत रूप तेत्तीसा होता है। इसमें सूत्र सख्या २-७९ से 'त्र' में स्थित 'र्' का लोप; १-१६५ से शेष 'त' मे स्थित 'अ' का और 'य' के लोप के साथ 'ए' की प्राप्ति २-७७ से 'स्' का लोप, १-२८ से अनुस्वार का लोप, २-७९ से द्वितीय 'त्र' में स्थित 'र्' का लोप, २-८९ से शेष 'त्' को द्वित्व 'त्त्' की प्राप्ति; १-९२ से 'इ' की दीर्घ 'ई'; १-२६० से 'श' का 'स', १-११ से अन्त्य व्यञ्जन 'त्' का लोप; ३-१२ से 'जस्' अथवा 'शस्' प्रत्यय की प्राप्ति होने से अन्त्य 'अ' का 'आ' और ३-४ से प्राप्त 'जस्' अथवा 'शस्' प्रत्यय की प्राप्ति होकर एवं इनका लोप हो जाने से *तेत्तीसा* रूप सिद्ध हो जाता है। ॥ १-१६५ ॥

## स्थविर-विचकिलायस्कारे ॥ १-१६६ ॥

एषु आदेः स्वरस्य परेण सस्वर व्यञ्जनेन सह एद् भवति ॥ थेरो वेइल्लं। मुद्ध-विअइल्ल-पसूण पुञ्जा इत्यपि दृश्यते। एक्कारो ॥

*अर्थ*.—स्थविर, विचकिल और अयस्कार इत्यादि शब्दों में रहे हुए आदि स्वर को पर-वर्ती स्वर सहित व्यञ्जन के साथ 'ए' की प्राप्ति हुआ करती है। जैसे-स्थविरः=थेरो; विचकिलम्=वेइल्ल, अयस्कारः=एक्कारो ॥ मुग्ध-विचकिल-प्रसून-पुञ्जा=मुद्ध-विअइल्ल-पसूण-पुञ्जा इत्यादि उदाहरणों में इस सूत्र का अपवाद भी अर्थात् "आदि स्वर को परवर्ती स्वर सहित व्यञ्जन के साथ 'ए' की प्राप्ति" का अभाव भी देखा जाता है।

*स्थविरः* सस्कृत विशेषण रूप है। इसका प्राकृत रूप थेरो होता है। इसमें सूत्र संख्या २-७७ से 'स्' का लोप; १-१६६ से 'थवि' का 'थे'; ३-२ से प्रथमा विभक्ति के एक वचन में पुल्लिग में 'सि' प्रत्यय के साथ 'ओ' प्रत्यय की प्राप्ति होकर *थेरो* रूप सिद्ध हो जाता है।

*विचकिलम्* संस्कृत रूप है। इसका प्राकृत रूप वेइल्लं होता है। इसमें सूत्र संख्या १-१६६ से

से 'विध' का 'वे' १ १७७ से 'क्' का लोप २-६८ से 'ल' का द्वित्व 'लल', ३-२५ से प्रथमा विभक्ति के एक वचन में नपुंसक लिंग में 'सि' प्रत्यय के स्थान पर 'म्' प्रत्यय की प्राप्ति और १-२३ से प्राप्त 'म्' का अनुस्वार होकर वेइल्लं रूप सिद्ध हो जाता है।

मुग्ध संस्कृत विशेषण रूप है। इसका प्राकृत रूप मुद्ध होता है। इसमें सूत्र संख्या १ १७७ से 'ग्' का लोप २-८९ से शेष 'ध' का द्वित्व 'धध्' २-९० से प्राप्त पूर्व 'ध्' का 'द्', होकर मुद्ध रूप सिद्ध हो जाता है।

विचकिल संस्कृत रूप है इसका प्राकृत रूप विअइल्ल होता है। इसमें सूत्र संख्या १ १७७ से 'च्' और 'क्' का लोप और २-९८ से 'ल' को द्वित्व 'ल्ल' की प्राप्ति होकर *विअइल्ल* रूप सिद्ध हो जाता है।

प्रसून संस्कृत रूप है। इसका प्राकृत रूप पसूण होता है। इसमें सूत्र संख्या २-७९ से 'र्' का लोप और १ २ ८ से 'न' का 'ण' होकर पसूण रूप सिद्ध हो जाता है।

गुच्छा संस्कृत रूप है। इसका प्राकृत रूप गुच्छा होता है। इसमें सूत्र संख्या ३-४ से प्रथमा विभक्ति के बहु वचन में पुल्लिंग में 'जस्' प्रत्यय की प्राप्ति और इसका लोप तथा ३ १२ से 'जस्' प्रत्यय की प्राप्ति एवं इसके लोप होने से पूर्व में स्थित अन्त्य 'अ' का 'आ' होकर गुच्छा रूप सिद्ध हो जाता है।

मयस्कारः संस्कृत रूप है। इसका प्राकृत रूप पक्कारो होता है। इसमें सूत्र संख्या १ १६६ से 'मय' के स्थान पर 'प' की प्राप्ति २-७७ से 'स' का लोप २ ८९ से 'क' को द्वित्व 'क्क' की प्राप्ति और ३-२ से प्रथमा विभक्ति के एक वचन में पुल्लिंग में 'सि' प्रत्यय के स्थान पर 'ओ' प्रत्यय की प्राप्ति होकर पक्कारो रूप सिद्ध हो जाता है। ॥१-१६६॥

## वा कदले ॥१-१६७॥

कदल शब्दे आदेः स्वरस्य परेण सस्वर-व्यञ्जनेन सह एद् वा भवति ॥ केलं कयलं। केली कयली ॥

अर्थ —कदल शब्द में रहे हुए आदि स्वर 'अ' को परवर्ती स्वर सहित व्यञ्जन के साथ वैकल्पिक रूप से 'ए' की प्राप्ति होती है। जैसे-कदलम् = केलं और कयलं ॥ कदली = केली और कयली ॥

कदलम् संस्कृत रूप है। इसके प्राकृत रूप केलं और कयलं होता है। इनमें से प्रथम रूप में सूत्र संख्या १ १६७ से 'कद' के स्थान पर 'के' की प्राप्ति ३-२५ से प्रथमा विभक्ति के एक वचन में नपुंसक लिंग में 'सि' प्रत्यय के स्थान पर 'म्' प्रत्यय की प्राप्ति और १ २३ से प्राप्त 'म्' का अनुस्वार होकर प्रथम रूप केलं सिद्ध हो जाता है।

द्वितीय रूप (कयल) में सूत्र सख्या १-१७७ से 'द्' का लोप, १-१८० से शेष 'अ' का 'य' और शेष सिद्धि प्रथम रूप के समान ही जानना। इस प्रकार *कयलं* रूप भी सिद्ध हो जाता है।

*कदली* सस्कृत रूप है। इसके प्राकृत रूप केली और कयली होते हैं। इनमें से प्रथम रूप में सूत्र सख्या १-१६७ से 'कद' के स्थान पर 'के' की प्राप्ति, सस्कृत विधान से प्रथमा विभक्ति के एक वचन में स्त्रीलिग मे 'सि' प्रत्यय की प्राप्ति, और प्राप्त 'सि' प्रत्यय मे स्थित 'इ' की इत् संज्ञा, तथा १-११ से शेष 'स्' का लोप होकर प्रथम रूप *केली* रूप सिद्ध हो जाता है।

द्वितीय रूप (कयली) में सूत्र सख्या १-१७७ से 'द्' का लोप; १-१८० से शेष 'अ' का 'य' और शेष सिद्धि प्रथम रूप के समान ही जानना॥ इस प्रकार *कयली* रूप भी सिद्ध हो जाता है। ॥१-१६८॥

## वेतः कर्णिकारे ॥१-१६८॥

**कर्णिकारे इतः सस्वर व्यञ्जनेन सह एद् वा भवति ॥ कण्णेरो कण्णिआरो ॥**

*अर्थः*—कर्णिकार शब्द में रही हुई 'इ' के स्थान पर पर-वर्ती स्वर सहित व्यञ्जन के साथ वैकल्पिक रूप से 'ए' की प्राप्ति होती है। जैसे-कर्णिकार=कण्णेरो और कण्णिआरो॥

*कर्णिकारः* सस्कृत रूप है। इसके प्राकृत रूप कण्णेरो और कण्णिआरो होते हैं। इनमें से प्रथम रूप में सूत्र सख्या २-७९ से 'र्' का लोप, २-८९ से 'ण' को द्वित्व 'ण्ण', १-१६८ से वैकल्पिक रूप से 'इ' सहित 'का' के स्थान पर 'ए' की प्राप्ति, और ३-२ से प्रथमा विभक्ति के एक वचन में पुल्लिंग में 'सि' प्रत्यय के स्थान पर 'ओ' प्रत्यय की प्राप्ति होकर प्रथम *कण्णेरो* रूप सिद्ध हो जाता है।

द्वितीय रूप (कण्णिआरो) में सूत्र संख्या २-७९ से 'र्' का लोप, २-८९ से 'ण' का द्वित्व 'ण्ण', १-१७७ से 'क्' का लोप और ३-२ से प्रथमा विभक्ति के एक वचन में पुल्लिग में 'सि' प्रत्यय के स्थान पर 'ओ' प्रत्यय की प्राप्ति होकर *कण्णिआरो* रूप भी सिद्ध हो जाता है।

## अयौ वैत ॥१-१६९॥

**अयि शब्दे आदेः स्वरस्य परेण सस्वर व्यञ्जनेन सह ऐद् वा भवति। ऐ बीहेमि। अइ उम्मत्तिए। वचनादैकारस्यापि प्राकृते प्रयोगः॥**

*अर्थः*—'अयि' अव्यय संस्कृत शब्द में आदि स्वर 'अ' और परवर्ती स्वर सहित व्यञ्जन 'यि' के स्थान पर अर्थात् सपूर्ण 'अयि' अव्ययात्मक शब्द के स्थान पर वैकल्पिक रूप से 'ऐ' की प्राप्ति होती है। जैसे-अयि! बिभेमि=ऐ बीहेमि॥ अयि! उन्मत्तिके=अइ उम्मत्तिए॥ इस सूत्र में 'अयि' अव्यय के स्थान पर 'ऐ' का आदेश किया गया है। यद्यपि प्राकृत भाषा में 'ऐ' स्वर नहीं होता है, फिर भी

इस अन्यय में सम्बोधन रूप वाक्य प्रयोग की स्थिति होने से प्राकृत भाषा में 'ऐ' स्वर का प्रयोग किया गया है ॥

*अयि* संस्कृत अव्यय है। इसके प्राकृत रूप ऐ और अइ होते हैं। इनमें से प्रथम रूप में सूत्र संख्या १ १६९ से 'अयि' के स्थान पर 'ऐ' का आदेश हो जाता है। द्वितीय रूप में सूत्र-संख्या १ १७७ से 'य्' का लोप होने से अइ रूप सिद्ध हो जाता है।

*बिभेमि* संस्कृत क्रिया पद है। इसका प्राकृत रूप बीहेमि होता है। इसमें सूत्र-संख्या ४ ५३ से 'भी' संस्कृत धातु के स्थान पर 'बीह' आदेश की प्राप्ति' ४ २३९ से व्यञ्जनान्त धातु में पुरुष-बोधक प्रत्ययों की प्राप्ति के पूर्व में 'अ' की प्राप्ति ३–१५८ से प्राप्त विकरण प्रत्यय 'अ' के स्थान पर वैकल्पिक रूप से 'ए' का आदेश, और ३-१४१ से वर्तमानकाल में तृतीय पुरुष के अथवा उत्तम पुरुष के एक वचन में 'मि' प्रत्यय की प्राप्ति होकर बीहेमि रूप सिद्ध हो जाता है।

*उन्मत्तिके* संस्कृत रूप है। इसका प्राकृत रूप उम्मत्तिए होता है। इसमें सूत्र-संख्या २ ७७ से 'उत्-मत्तिके' संस्कृत मूल रूप होने से 'त्' का लोप, -८९ से 'म' का द्वित्व 'म्म' १ १७७ से 'क्' का लोप' होकर उम्मत्तिए रूप सिद्ध हो जाता है ॥ १ १६९ ॥

## ओत्पूतर-बदर नवमालिका नवफलिका पूगफले ॥ १–१७० ॥

पूतरादिषु आदेः स्वरस्य परेण सस्वर व्यञ्जनेन सह ओत् भवति ॥ पोरो। बोरं। बोरी। नोमालिआ। नाहलिआ। पोप्फलं। पोप्फली ॥

*अर्थ*–पूतर' बदर' नवमालिका' नवफलिका और पूगफल इत्यादि शब्दों में रहे हुए आदि स्वर के साथ परवर्ती स्वर सहित व्यञ्जन के स्थान पर 'ओ' आदेश की प्राप्ति होती है। जैसे–पूतरः = पोरो, बदरम् = बोरं बदरी = बोरी नवमालिका = नोमालिआ' नवफलिका = नाहलिआ, पूगफलम् = पोप्फलं और पूगफली = पोप्फली ॥

पूतरः संस्कृत शब्द है। इसका प्राकृत रूप पोरो होता है। इसमें सूत्र-संख्या १ १७० से आदि स्वर 'ऊ' सहित परवर्ती स्वर सहित 'त' के स्थान पर 'ओ' आदेश की प्राप्ति अर्थात् 'पूत' के स्थान पर 'पो' की प्राप्ति और ३ २ से प्रथमा विभक्ति के एक वचन में पुल्लिंग में 'सि' प्रत्यय के स्थान पर 'ओ' प्रत्यय की प्राप्ति होकर पोरो रूप सिद्ध हो जाता है।

बदरम् संस्कृत रूप है। इसका प्राकृत रूप बोरं होता है। इसमें सूत्र-संख्या १ १७० से आदि स्वर 'अ' सहित परवर्ती स्वर सहित 'द' के स्थान पर 'ओ' आदेश की प्राप्ति अर्थात् 'बद' के स्थान पर 'बो' की प्राप्ति ३–२५ से प्रथमा विभक्ति के एक वचन में नपुंसकलिंग में 'सि' प्रत्यय के स्थान पर 'म्' प्रत्यय की प्राप्ति और १ २३ से प्राप्त 'म्' का अनुस्वार होकर बोरं रूप सिद्ध हो जाता है।

*बदरी* संस्कृत रूप है। इसका प्राकृत रूप बोरी होता है। इसमें सूत्र-संख्या १-१७० से आदि स्वर 'अ' सहित परवर्ती स्वर सहित 'द' के स्थान पर 'ओ' आदेश की प्राप्ति, अर्थात 'बद' के स्थान पर 'बो' की प्राप्ति, संस्कृत विधान से प्रथमा विभक्ति के एक वचन में 'सि' प्रत्यय की प्राप्ति तथा प्राप्त 'सि' प्रत्यय में स्थित 'इ' की इत्संज्ञा; और १-११ से शेष 'स्' प्रत्यय का लोप होकर *बोरी* रूप सिद्ध हो जाता है

*नवमालिका* संस्कृत रूप है। इसका प्राकृत रूप नोमालिआ होता है। इसमें सूत्र-संख्या १-१७० से आदि स्वर 'अ' सहित परवर्ती स्वर सहित 'व के स्थान पर 'ओ' आदेश की प्राप्ति, (अर्थात् 'नव' के स्थान पर 'नो' की प्राप्ति), १-१७७ से 'क्' का लोप, संस्कृत-विधान से प्रथमा विभक्ति के एक वचन में 'सि' प्रत्यय की प्राप्ति तथा प्राप्त 'सि' प्रत्यय में स्थित 'इ' की इत्संज्ञा और १-११ से शेष 'स्' प्रत्यय का लोप होकर नोमालिआ रूप सिद्ध हो जाता है। *नवफलिका* संस्कृत रूप है। इसका प्राकृत रूप नोहलिआ होता है। इसमें सूत्र संख्या १-१७० से आदि स्वर 'अ' सहित परवर्ती स्वर सहित 'व' के स्थान पर 'ओ' आदेश की प्राप्ति, (अर्थात 'नव' के स्थान पर 'नो' की प्राप्ति) १-२३६ से 'फ' का 'ह', १-१७७ से 'क् का लोप, संस्कृत-विधान से प्रथमा विभक्ति के एक वचन में 'सि' प्रत्यय की प्राप्ति तथा प्राप्त 'सि' प्रत्यय में स्थित 'इ' की इत्संज्ञा और १-११ से शेष 'स्' प्रत्यय का लोप होकर *नोहलिआ* रूप सिद्ध हो जाता है।

*पूगफलम्* संस्कृत रूप है। इसका प्राकृत रूप पोप्फलं होता है। इसमें सूत्र संख्या १-१७० से आदि स्वर 'उ' सहित परवर्ती स्वर सहित 'ग' के स्थान पर 'ओ' आदेश की प्राप्ति; (अर्थात् 'पूग' के स्थान पर 'पो' की प्राप्ति,) २-८९ से 'फ' का द्वित्व 'फ्फ', २-९० से प्राप्त पूर्व 'फ् को 'प्' की प्राप्ति, ३-२५ से प्रथमा विभक्ति के एक वचन में नपुंसक लिंग में 'सि' प्रत्यय के स्थान पर 'म्' प्रत्यय की प्राप्ति और १-२३ से प्राप्त 'म्' का अनुस्वार होकर *पोप्फलं* रूप सिद्ध हो जाता है।

*पूगफली* संस्कृत रूप है। इसका प्राकृत रूप पोप्फली होता है। इसमें सूत्र संख्या १-१७० से आदि स्वर 'उ' सहित पर वर्ती स्वर सहित 'ग' के स्थान पर 'ओ' आदेश की प्राप्ति; (अर्थात् 'पूग' के स्थान पर 'पो' की प्राप्ति,) २-८९ से 'फ' का द्वित्व 'फ्फ', २-९० से प्राप्त पूर्व 'फ्' को 'प्' की प्राप्ति, संस्कृत-विधान के अनुसार स्त्रीलिंग के प्रथमा विभक्ति के एक वचन में 'सि' प्रत्यय की प्राप्ति, इस में 'सि' प्रत्यय में स्थित 'इ' की इत्संज्ञा और १-११ से 'स्' का लोप होकर *पोप्फली* रूप सिद्ध हो जाता है।

## न वा मयूख-लवण-चतुर्गुण-चतुर्थ-चतुर्दश-चतुर्वार-सुकुमार-कुतूहलोदूखलोलूखले ॥ १-१७१ ॥

**मयूखादिषु आदेः स्वरस्य परेण सस्वर व्यञ्जनेन सह ओद् वा भवति ॥ मोहो मऊहो। लोणं। इअ लवणुग्गमा। चोग्गुणो। चउग्गुणो। चोत्थो चउत्थो। चोत्थी चउत्थी ॥ चोद्दह।**

चउद्दह ॥ चोदसी चउद्दसी । चोव्वारो चउव्वारो । सोमालो सुकुमालो । कोहलं काउहल्लं । तह मन्ने कोहलिए । ओहलो उऊहलो । ओक्खलं । उलूहलं ॥ मोरो मऊरो इति तु मोर-मयूर शब्दाभ्यां सिद्धम् ॥

**अर्थ**—मयूख; लवण; लवणोद्गमा, चतुर्गुण चतुर्थ चतुर्थी, चतुर्दश चतुर्दशी चतुर्वार, सुकुमार, कुतूहल, कुतूहलिका और उदूखल, इत्यादि शब्दों में रहे हुए आदि स्वर का परवर्ती स्वर सहित व्यञ्जन के साथ विकल्प से 'ओ' होता है। जैसे-मयूख=मोहो और मऊहो। लवणम्=लोणं और लवणं। चतुर्गुण=चोग्गुणो और चउग्गुणो। चतुर्थ=चोत्थो और चउत्थो। चतुर्थी=चोत्थी और चउत्थी। चतुर्दश=चोद्दहो और चउद्दहो। चतुर्दशी=चोद्दसी और चउद्दसी। चतुर्वार=चोव्वारो और चउव्वारो। सुकुमार=सोमालो और सुकुमालो। कुतूहलम्=कोहलं और काउहल्लं। कुतूहलिके=कोहलिए और कुऊहलिए। उदूखल=ओहलो और उऊहलो। उदूखलम्=ओक्खलं और उलूहलं। इत्यादि॥ प्राकृत शब्द मोरो और मऊरो संस्कृत शब्द मोर और मयूर इन अलग अलग शब्दों से रूपान्तरित हुए हैं; अतः इन शब्दों में सूत्र संख्या १ १७१ का विधान नहीं होता है।

मयूख संस्कृत शब्द है। इसके प्राकृत रूप मोहो और मऊहो होते हैं। इनमें से प्रथम रूप में सूत्र संख्या १ १७१ से आदि स्वर 'अ' सहित परवर्ती स्वर सहित 'य' व्यञ्जन के स्थान पर अर्थात् 'मयू' शब्दांश के स्थान पर वैकल्पिक रूप से 'ओ' की प्राप्ति' १ १८७ से 'ख' का 'ह' और ३ २ से प्रथमा विभक्ति के एक वचन में पुल्लिंग में 'सि' प्रत्यय के स्थान पर 'ओ' प्रत्यय की प्राप्ति होकर प्रथम रूप *मोहो* सिद्ध हो जाता है।

द्वितीय रूप मऊहो में वैकल्पिक-विधान होने से सूत्र संख्या १-१७७ से 'य्' का लोप, और शेष सिद्धि प्रथम रूप के समान ही होकर द्वितीय रूप *मऊहो* भी सिद्ध हो जाता है।

*लवणम्* संस्कृत रूप है। इसके प्राकृत रूप लोणं और लवणं होते हैं। इनमें से प्रथम रूप में सूत्र संख्या १ १७१ से आदि स्वर 'अ' सहित परवर्ती स्वर सहित 'व' व्यञ्जन के स्थान पर अर्थात् 'लव' शब्दांश के स्थान पर वैकल्पिक रूप से 'ओ' की प्राप्ति ३-२५ से प्रथमा विभक्ति के एक वचन में नपुंसक लिंग में 'सि' प्रत्यय के स्थान पर 'म्' प्रत्यय की प्राप्ति और १ २३ से प्राप्त 'म्' का अनुस्वार होकर प्रथम रूप *लोणं* सिद्ध हो जाता है।

द्वितीय रूप लवणं में वैकल्पिक-विधान होने से सूत्र संख्या १ १७१ की प्राप्ति का अभाव और शेष सिद्धि प्रथम रूप के समान ही होकर द्वितीय रूप *लवणं* भी सिद्ध हो जाता है।

*इति* संस्कृत अव्यय है। इसका प्राकृत रूप इअ होता है। इसमें सूत्र संख्या १-९१ से 'ति' में स्थित 'इ' का 'अ' और १-१७७ से 'त्' का लोप होकर *इअ* रूप सिद्ध हो जाता है।

